THE

# KASHI-SANSKRIT-SERIES

## 25.

( Mimānsā Section No 1 )

॥ श्रीः ॥

श्रीमदापदेवकृतः

# मीमांसान्यायप्रकाशः

## 'सारविवेचिनी'—व्याख्यया सहितः ।

( सपरिष्कृत-परिवर्द्धित-द्वितीयसंस्करणम् )



प्रकाशकः

जयकृष्णदास—हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज आफिस,

विद्याविलास प्रेस, बनारस सिटी ।

मूल्यं ५)

# THE KASHI-SANSKRIT-SERIES 25



( Mimâmsâ Section, No. 1 )

# THE MIMÂMSÂ NYÂYAPRAKÂSA

OF

# ÂPADEVA

WITH AN ORIGINAL SANSKRIT COMMENTARY

by


MAHAMAHOPADHYAYA. SASTRARATNAKARA, FORMER PRINCIPAL, COLLEGE OF THEOLOGY B. H U., LECTURER IN SANSKRIT, CALCUTTA UNIVERSITY.

PANDIT. A. CHINNASWAMI SASTRI

( Alias Venkatasubrahmanya Sastri )


No. 18

*Edited by*


PANDIT A. M. RAMANATHA DIKSHITA

SAHITYACHARYA, VEDACHARYA, MIMAMSASASTRI, VEDANTASASTRI, SANSKRIT MAHAVIDYALAYA, BANARAS HINDU UNIVERSITY.



PUBLISHED BY

JAYA KRISHNA DAS HARIDAS GUPTA

*The Chowkhamba Sanskrit Series Office,*

Vidya Vilas Press, Gopal Mandir Lane,

Benares City.

*Second edition.* ] —— [ 1949

काशी-संस्कृत-सीरिज-पुस्तकमालायाः

२५

मीमांसाविभागे (१) प्रथमं पुष्पम् ।

श्रीमदापदेवकृतः

# मीमांसान्यायप्रकाशः

श्रीकाशीहिन्दूविश्वविद्यालयधर्मविज्ञानविभागभूतपूर्वाध्यक्षेण

महामहोपाध्यायेन शास्त्ररत्नाकरेण

श्रीवेङ्कटसुब्रह्मण्यापरनामधेयेन

पं. अ. चिन्नस्वामिशास्त्रिणा

कृतया व्याख्यया

## सारविवेचिन्याख्यया संवलितः

वेदसाहित्याचार्येण, मीमांसावेदान्तशास्त्रिणा काशीहिन्दूविश्वविद्यालयीय-

संस्कृतमहाविद्यालये वेदसाहित्याध्यापकेन

पं. अ. मु. रामनाथदीक्षितेन

यथामति संशोधितः ।



प्रकाशकः

जयकृष्णदास-हरिदास गुप्तः,

चौखम्बा संस्कृत सीरिज आफिस,

विद्याविलास प्रेस, बनारस सिटी ।

संवत् २००६ ] द्वितीयावृत्तिः [ सन् १९४९

धर्मो रक्षति रक्षितः

ॐ

# समर्पणपत्रम् ।

कालेऽधुनाऽतिलघिमानमुपेयुषीयं
यान् प्राप्य पूरुषवरान् पितरं सुतेव ।
तं तं प्रकारमुपलभ्य निलिम्पवाणी
संमोदते निजपदप्रतिलिप्सयाऽद्य ॥ १ ॥

यैरन्यमानवमनोवचसोरगम्यो
विद्यालयो विबुधमण्डलमण्डितोऽयम् ।
विश्वाधिकः पुरवरे वृषकेतनस्य
निर्मापितो निजमहत्तरवैभवेन ॥ २ ॥

तेभ्यः परामकृतकां महनीयशक्तिं
विद्यास्वजस्रमनुरक्तिमिहाऽऽवहद्भ्यः ।
सप्रश्रयं मदनमोहनमालवीय-
विद्वद्वरेभ्य इमकां कृतिमर्पयामि ॥ ३ ॥

अ. चिन्नस्वामिशास्त्री.

Opinion of Mahamahopadhyaya Sastra Kalanidhi

**Pro. S. Kuppuswami Sastrigal, M. A., I. E. S., Prof. of Sanskrit & Comparative Philology, Presidency College, Madras.**

I have perused with Care Brahmasri Chinnaswami Sastri's Commentary–Saravivechini–on Apadeva's Nyayaprakasa, published as No. 25 of the Kashi Sanskrit Series, from the Chowkhamba Press, Benares. Mimamsa scholars know well that the text of Apadeva's Nyayaprakasa, which is generaly studied by those who seek to be introduced to the study of Purva–Mimamsa, has been felt by students to be rather difficult in several places, more especially for want of a suitable and reliable commentary. This long felt desideratum has now been satisfactorily supplied by Brahmasri Chinnaswami Sastri, in his able and lucid commentary–Saravivechini.

So far two commentaries have been published on the Apadeviya:— one by Mahamahopadhyaya Sri Krishnanatha Nyaya Panchanana, who died a few years ago, and the other called Bhattalankara by Anantadeva–Apadeva's son. It may well be said that Brahmasri Chinnaswami Sastri's Saravivechini is the best and most trustworthy commentary so far available on the Apadeviya. It is written in a lucid style and contains satisfactory explanations of important passages and principles. Its value to a student of the Mimamsa–Sastra is, in particular, enhanced by the way in which its author has brought to bear on his work, his sound scholarship in Mimamsa and his experience as Professor of Mimamsa for several years as may be easily made ont from the intelligible expositions in the commentary of relevant Sruti texts and Srauta topics and from the Sacrifical chart appended to it. In conclusion I cannot resist the temptation to say that the feeling of pride which I have cherished in my good fortune to be able to own scholars of Brahmasri Chinnaswami Sastri's type as my former pupils, is now being justified, in a very gratifying manner by their work as successful teachers and authors.

Dated 31 May 1926. (Sd) S. KUPPUSWAMI SASTRI

श्रीः

# द्वितीयसंस्करणभूमिका

भगवतः परमेष्ठिनः परमकृपया द्वितीयसंस्करणाय प्राप्तावसरोऽयं मीमांसान्यायप्रकाशः सारविवेचिनीसंवलित इति महदिदं प्रमोदस्थानम्। सत्स्वपि व्याख्यान्तरेषु बहुषु सारविवेचिन्याः पुनर्मुद्रणावश्यकता जातेत्यनेनानुमीयते-विद्वद्गणश्छात्राश्च तस्यै स्पृहयन्ति विशेषत इति। प्रायः पञ्चभ्यो वत्सरेभ्यः प्रभृत्येव विपणयां सारविवेचिन्या दुष्प्रापतां पुनश्च तन्मुद्रणाय छात्राणामभ्यर्थनाश्चेतस्ततश्शृण्वन्तोऽपि वयं सामग्रीविरहेण भृशं क्लिश्यतो मुद्रणालयाध्यक्षानवलोकयन्तो जोषमास्महि। परमिदानीं परमेशकृपया किञ्चिदिव लब्धसाधनश्चौखम्बामुद्रणालयाध्यक्षाः अस्याः पुनर्मुद्रणाय कृतसन्नाहः तत्संशोधनकार्याय श्रीमतः (व्याख्या न्) शास्त्रिपादानभ्यर्थयत। शास्त्रिपादाश्च बहुषु कार्यान्तरेषु भृशं व्यापृततयाऽलब्धसमया अपि कथं कथमपि समयं संपाद्य व्याख्यामिमां पुनस्संस्कृत्य परिवर्ध्य च क्वचित्क्वचिदावश्यकस्थलेषु, संशोधनकार्ये मां न्ययूयुजन्। अहं तु तत्परमं भागधेयं मन्वानः प्रावर्तिषि संशोधनकार्ये। तत्र मूलपाठसंशोधनायाद्य यावन्मुद्रिताः कोशा उपयोजिताः। तदतिरिक्तश्च कश्चन तालपत्रेषु ग्रन्थाक्षरलिखितो न्यायप्रकाशो यः शास्त्रिपादैर्वर्षेभ्य उपदशेभ्यः पूर्वं दक्षिणदेशेऽस्मद्ग्रामे कस्माच्चित्पण्डितगृहादुपलब्ध आसीत्सोऽप्युपयोजितः, यत्रस्थाः पाठभेदाः सङ्गततमा आसन्। बहुत्र तान् युक्ततमान्मन्वानेन मया ते तत्र तत्र मूले समावेशिताः। टिप्पण्यपि क्वचित्क्वचित् पूर्वसंस्करणापेक्षयाऽधिका संयोजिताऽऽवश्यकतां मत्वा। मूलव्याख्ययोरुद्धृतानां विषयवाक्यानां सूच्यप्यन्ते निबद्धा। मन्ये साप्युपकाराय भवेन्मनीषिणामधीतिनां चेति।

### मीमांसाशब्दार्थः

इह तावत्सुखस्पृहयालूनां जनानां तदौपयिकसाधनसंपिपादयिषा दुःखव्रातजिहासूनां तदारम्भकसामग्रीविमुखीभावश्च नितरामावश्यक इति निर्विवादसिद्धमिदम्। तदर्थं च तदवबोधकप्रमाणान्वेषणे कृतयत्नाः, अन्यदैकान्तिकं किञ्चनापश्यन्तः प्रमाणम्, अलौकिकं पुरुषबुद्धिदोषलेशासंस्पृष्टमतिगभीरमनेकार्थगर्भं कञ्चन शब्दराशिमेव प्रामाण्याय शरणीकुर्वन्ति यो वेदश्रुत्याम्नायादिशब्दैरभिधीयते। तत्र च निगूढतत्त्वावबोधकविचारमन्तरा आपातप्रतीतेऽर्थेऽविश्वसन्तः चारुतरं विचारं कञ्चन कामयन्ते तदर्थनिर्णयाय। सैव च विचारचातुरी मीमांसापदेनाऽभिधीयते। मीमांसाशब्दो हि "मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य" इति सूत्रेण सन्प्रत्यये अभ्यासेकारस्य दीर्घे च कृते ततः अप्रत्यये टापि च कृते निष्पन्नः। तस्य च "मानेर्जिज्ञासायाम्" इति वार्तिकबलाज्जिज्ञासार्थकत्वे सिद्धेऽपि विचारलक्षकत्वं शास्त्रकृद्भिरङ्गीक्रियते। न केवलं साधारणो विचारः, किन्तु पूजितविचारः। तथा हि भामत्यां वाचस्पतिमिश्राः—"पूजितविचारवचनो मीमांसाशब्दः। परमपुरुषार्थहेतुभूतसूक्ष्मतमार्थनिर्णयफलता विचारस्य पूजितता" इति। एवं च क्वचिदपि कार्येऽविचार्यप्रवृत्तिं प्रेक्षावतां प्रशस्यन्ती तेषाम-

भ्युदयफले कर्मणि प्रवृत्तिं समीहमाना भगवती श्रुतिरेव स्वयं मीमांसामारभत प्रेक्षावन्मनस्समाहितये। अत एव तत्र तत्र ब्राह्मणग्रन्थेषु ब्रह्मवादिभिः क्रियमाणा मीमांसा संशयपूर्वोत्तरपक्षरूपतयैव दरीदृश्यते। तथा हि चातुर्मास्यान्तर्गतत्र्यम्बकहविर्विधिप्रकरणे—(१) अभिघार्या३ न्नाभिघार्या३ मिति मीमांसन्ते। यदभिघारयेत्। रुद्रायास्य पशूनपि दध्यात्। तन्न सूर्दयम्। अभिघार्या एव। इति श्रूयते। तत्र तदीयं हविर्होमात्पूर्वमभिघार्यं न वेति संशयः। संशयावद्योतक उभयत्र प्लुतः। अभिघारणं न कर्तव्यमिति पूर्वपक्षः। यदभिघारयेदित्यादि पूर्वपक्षे युक्तिः। तन्न सूर्दयमिति पूर्वपक्षखण्डनम्। अभिघार्या एवेति सिद्धान्तः। न ह्यनभिघृतमित्यादिः सिद्धान्तयुक्तिः। एवम्—(२) उत्सृज्यां३ नोत्सृज्या३मिति मीमांसन्ते ब्रह्मवादिनः। तदाहुरुत्सृज्यमेव। अमावास्यायां च पौर्णमास्यां चोत्सृज्यमित्याहुः। या प्रथमा व्यष्टका तस्यामुत्सृज्यमित्याहुः। (३) संस्थाप्यां३ न संस्थाप्या३मिति मीमांसन्तेऽग्निहोत्रम्। (४) होतव्यं दीक्षितस्याग्निहोत्रा३ न्न होतव्या३मिति मीमांसन्ते। (५) वासिष्ठो रौहिणो मीमांसां चक्रे" इत्यादिषूदाहरणेष्वपि द्रष्टव्यम्। मीमांसेयं न केवलं पूर्वकाण्डगतेषु तत्तद्वेदीयब्राह्मणभागेषूपलभ्यते, उत्तरकाण्डे उपनिषत्स्वपि समुपलभ्यते बहुत्र। अनेन स्पष्टमिदं प्रतीयते ब्राह्मणभागेन वेदैकदेशेन सहैवैषापि विचारसरणिर्मीमांसापदाभिधेयाऽऽविर्भूता। तामेव च परिपाटीमनन्तरकालिका महर्षयः क्रमनियमबद्धां कृत्वा यथावद्ग्रन्थयन्, वैदिकानि वाक्यानि विषयतामापादयन्तः।

अतश्च वेदार्थे तदनुयायिस्मृत्यर्थे वा यथायथमवगन्तुकामस्य पुंसो नान्तरीयकं मीमांसाशास्त्रज्ञानम्। न ह्यमीमांसको वेदार्थं स्मृत्यर्थं वा यथावदवगन्तुमीष्टे।

"आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणाऽनुसन्धत्ते स धर्मं वेद नेतरः" ॥

इति हि मानवं वचनम्। वेदशास्त्राविरोधी तर्कः, मीमांसेति यावत्।

"विषयो वेदवाक्यानां पदार्थैः प्रतिपाद्यते।
परीक्षकार्पितैश्शक्यास्तैर्विवेक्तुं न तु स्वतः" (तं. वा. १.३.१) इति

(परीक्षका अत्र मीमांसाशास्त्रनिकषघर्षणावधूतवेदार्थतत्त्वविमलस्वान्ताः)

"मीमांसाशास्त्रतेजोभिर्विशेषेणोज्ज्वलीकृते।
वेदार्थज्ञानरत्ने मे तृष्णाऽतीव विजृम्भते ॥"

इति च कुमारिलपादाः। वेदतदर्थरत्नैरेव च संग्रथितत्वात्स्मृतीनां तदर्थनिर्णयायाऽपि मीमांसाज्ञानमनिवार्यम्। अत एव प्रायेण निबन्धकारास्सर्वेऽपि मीमांसान्यायसार्थसन्दधानेव स्वान् निबन्धान् न्यबध्नन्। ते ह्यजानन्–मीमांसान्यायानुग्रहविधुरो निर्णीतो वेदार्थः स्मृत्यर्थो वा अपार्थो विपरीतार्थ एव वेति।

**(मीमांसाया अज्ञानेन संभावितानर्थपरम्परा)**

मीमांसापरिशोधितन्यायज्ञानवैधुर्यादेव चाद्यतनेषु न्यायालयेषु तत्राधिकृताः स्वकपोलकल्पिताभिरेव नीतिभिरर्थान् निर्णयन्तस्तदनुकूलमेव च चेष्टयन्तः प्रवर्तयन्तश्च जनान् मोहान्धकारपूरे निमज्जयन्ति। पारलौकिकं फलं तु दूरे। इहैव लोके न्यायतोऽ-

प्राप्तदण्डानां दण्डनम् , निर्दोषाणां दोषोद्भावनम् , अतदर्हाणां तदर्हतापादनम् , अ-स्थाने च फलप्रापणम् , प्राप्तव्यस्य चाऽप्रापणमिति कियतीयमनर्थपरम्परा । उक्तं हि भट्टकुमारिलेन—

"मीमांसायां त्विहाज्ञाते दुर्ज्ञाते वाऽविवेकतः ।
न्यायमार्गे महान्दोष इति यत्नोपचर्यता" ॥

इति । "मीमांसा हि सर्वशास्त्रगताज्ञानसन्देहविपर्ययव्युदासक्षमन्यायनिबन्धनात्मिका । तदस्यामज्ञातायां न किञ्चिदपि ज्ञातं भवति । अतो महान्तमनर्थं प्राप्नोति ।" इत्यदसीयव्याख्यायां काशिकायां सुचरितमिश्रः । न्यायाभियोगशून्यो हि पुरुषः, किमिदमुत्सृष्टम् ? उतापोदितम् ? अत्र हेतुवन्निगदाधिकरणन्यायेनार्थवादता ? उत 'न ह्यत्र' न्यायेन हेतुविधित्वम् ? अत्र पर्णमयीन्यायेन केवलस्तुतिपरता ? आहोस्विद्रात्रिसत्रन्यायेन फलपरत्वमपि ? किमयमनुवादः परम् ? उतोपरिधारणन्यायेन विधिकल्पकता ? किमत्र ग्रहैकत्वन्यायः प्रवर्तते ? उताहो पश्वेकत्वन्यायः प्रसरं लभते ? किमत्राऽऽत्यन्तिको निषेधः ? किं वा 'न तौ पशौ करोती'ति न्यायेन विकल्पे पर्यवसानम् ? किमत्र बाधः ? उताभ्युच्चयः ? इत्यादीनत्यन्तगभीरानतिदुर्विगाहान् विषयान्कथं निर्धारयितुं प्रभवेत् ? न च वाच्यम् , भाषान्तरीयेषु ग्रन्थेषु नैतेषामावश्यकतेति । न्यायस्य विषयैकगोचरत्वात् । अस्माकीनव्यवहारनिर्णयस्यास्माकीनग्रन्थेभ्य एव कर्तव्यतौचित्याच्च । अतो न्यायालयाधिकृतैरन्यैश्च भारतशासनभारं स्वस्कन्धे कुर्वद्भिरपन्यायभीतैः उच्छृङ्खलताया आत्मानं गोप्तुकामैः विना मीमांसां पदमेकमपि न चलितुं शक्यत इति तेषामत्र दृष्टिमाक्रष्टुमभिलषामि ।

### मीमांसायाः प्रसारक्रमः

एवं वेदलोकोभयोपकारि शास्त्रमिदं सर्वत्र प्रसारयितुकामा महर्षिजैमिन्याचार्यशबरस्वामिप्रभृतयो महाभागाः सूत्रभाष्यादिग्रन्थानरीरचन् । ते चातिगहना दुर्विगाहाः । इतस्ततः परीशीलनयाऽवगम्यते शाबरादपि भाष्यात्पूर्वतनानि कानिचन भाष्याणि मीमांसासूत्राणामासन्नित्यभ्यूहितुमस्त्यवकाशः । परं तानि न कुत्राप्युपलभ्यन्ते नामतो रूपतो वा । शाबरं भाष्यं व्याख्यातं श्रीकुमारिलभट्टपादैः प्रभाकरमिश्रैश्च । उभयेषाममीषां परस्परविभिन्नैव रीतिरासीद्भाष्यविवरणविधौ । उभयेऽपि स्वतन्त्रप्रज्ञा विचारचतुरा विवेचननिपुणाश्चासन् । अतो मतद्वयमतः प्रवृत्तं भाट्टं प्राभाकरं चेति । तत्र शाबरभाष्यस्य भट्टमते भट्टवार्तिकम् , न्यायसुधा, शास्त्रदीपिका, मयूखमालिका, मयूखावलिः, प्रकाशः, भाट्टदीपिका; प्रभावलिः, चन्द्रोदयः, इत्यादयो नैके नैकविधा ग्रन्थाः, व्याख्या, तद्व्याख्या, तद्व्याख्या इत्येवंरूपेण प्रसृताः । एवं बृहती, ऋजुविमला, नयविवेकः, नयविवेकदीपिका, इत्यादयोऽपि प्राभाकरमते व्याख्यातद्व्याख्यारूपेण प्रसृताः । परमद्यत्वे न तावान्प्रसरो लोके प्राभाकरमतस्य यावान्भाट्टमतस्य । प्रभाकरमिश्रनिर्मिता भाष्यटीकापि अद्य यावन्न समग्रा मुद्रिता । प्रभाकरमिश्रैः बृहती लघ्वी चेति व्याख्याद्वयं रचितं शाबरभाष्यस्य । तत्र प्रथमात्यल्पशो मुद्रिता, द्वितीया नाम्ना परं श्रूयते न तु स्वरूपत उपलभ्यते । न जाने ग्रन्थरत्नानाममीषां शास्त्रजीवातूनां मुद्रणप्रकाशनप्रचारादौ कदा भूतभावनो भगवाननुग्रहीष्यतीति ।

एवं साधारणतः प्रसरमुपेयुषामपि भाट्टमतीयानां ग्रन्थानां वार्तिकादीनां यथावद-वगतिरतिकठिनाल्पमतीनामिति मत्वा महामहोपाध्यायपार्थसारथिमिश्रः भाट्टमतमवलम्ब्य विषयसंशयादिकमेकत्र संगृह्याधिकरणरूपेण समग्रमपि शास्त्रं समगृह्णात्, सैव शास्त्र-दीपिका। अयमेव चैवंरूपेण प्रवृत्त एतच्छास्त्रे प्राथमिको ग्रन्थः। एतदनन्तरकालिका एव जैमिनीयन्यायमाला-न्यायबिन्दुः-भाट्टदीपिकादयोऽधिकरणसङ्ग्रहात्मिका ग्रन्थाः प्रादुरभूवंस्तद्व्याख्यानानि च। तदनन्तरमेव च मीमांसापदार्थसंग्रहात्मकाः न्यायरत्न-माला वेदप्रकाश—न्यायप्रकाश—भाट्टभास्कर—अर्थसङ्ग्रह–मीमांसापरिभाषाप्रभृतयः प्रकरणग्रन्थाः, येष्वन्यतमोऽयं मीमांसान्यायप्रकाशो नाम। अत्र चाधिकतरं लोकवेद-योरुपयुक्तानां न्यायानां स्वरूपं निपुणतरमुपपादितम्। ग्रन्थकर्तुरस्य 'विचारचातुरी हृदयङ्गमा गभीरा च। ग्रन्थकारोऽयं पार्थसारथीयमतमेव स्वग्रन्थे पर्यपुष्णादिति सम्य-गेवोपपादितं व्याख्यातृभिराचार्यचरणैः प्रथमसंस्करणोपोद्घाते। पार्थसारथिमिश्रा हि तन्त्रवार्तिकं, टुप्टीकां च मूलीकृत्यैव स्वीयान्ग्रन्थान्रचयामासुः। यथोक्तं तैरेव-

"न्यायाभासतमश्छन्नशास्त्रतत्त्वार्थदर्शिनीम्।
कुमारिलमतेनाहं करिष्ये शास्त्रदीपिकाम्"॥

इति शास्त्रदीपिकायाम्।

"मीमांसार्णवसंभूतैः कुमारस्वामिना कृतैः।
न्यायरत्नैरहं मालां सङ्ग्रथ्नामि मनोरमाम्"॥

इति च न्यायरत्नमालायाम्। तथापि तत्र विध्यर्थे, आख्यातार्थे तत्प्रख्यन्याये अर्थवादलक्षणविषये पर्युदासोपसंहारयोः अन्येषु चैवमादिविषयेषु केषुचित्स्वमनीषितं मतं किंचिदन्वारुह्य तदेव प्रमाणैरुपष्टम्भयति। एवं तन्त्रवार्तिकं व्याचक्षाणेनापि, भट्ट-सोमेश्वरेण स्वेषितं ग्रन्थारूढीक्रियते। तयोर्मध्ये पार्थसारथिमिश्रमेवानुसरत्ययं न्याय-प्रकाशकारः। तच्च तत्र तत्र व्याख्यान एव स्पष्टीकृतम्।

ग्रन्थकारोऽयं प्राभाकरमतं क्वचिदपि मनागपि न स्पृशति। तन्मतावलम्बी नैको-ऽपि ग्रन्थस्समग्रो द्वादशाध्यायव्यापी मुद्रितः। तौतातितमततिलको योऽध्यायत्रयात्मकः स तावति ग्रन्थे तन्मतमुपापादयत्। उपरि खन्धकार एव। प्रकरणपञ्चिकापि यावदुप-लभ्यमेव मुद्रितेति तत्रापि समग्रतायां सन्दिग्धमेव मनः। सेयं दुरवस्था प्राभाकरमतस्य। सावश्यं परिमार्जनमर्हति।

न्यायरत्नमालां पार्थसारथिमिश्रीयामनुरुन्धानोऽप्ययं ग्रन्थकारो नोत्तरषट्कीयेषु तथा प्रक्रमते यथा पूर्वषट्कीयेषु विषयेषु। एनमेवानुसरति पदे पदेऽर्थसङ्ग्रहकारः। अत-स्सर्वविषयव्यापिनः सुललितपदगुम्फितस्य सुखेनाध्येतृहृदयावगाहिनः भाट्टमते कस्यचन ग्रन्थस्याद्ययावदनुपलम्भेन क्लिश्यतामधीतिनां क्लेशं दूरीकर्तुं तन्त्रसिद्धान्तरत्नावल्याख्यो ग्रन्थो निरमायि सारविवेचिनीकारैरस्मच्छ्वशुरचरणैः, साधु सम्पादितश्च श्रीमद्भिः पण्डि-तप्रवरैः पट्टाभिरामशास्त्रिमहोदयैः। स सुदूरमाकर्षति सुमनसां मनांसीति न तिरोहितम्।

अत्र मूले व्याख्यायां च पूर्वोत्तरभागरूपेण द्विधा विभागः कृतो व्याख्यातृभि-श्शास्त्रिपादैः" "स च विभागो न ग्रन्थाकाराभिमतः, किन्तु स्वकपोलकल्पितश्शास्त्रि-

वर्यैः" इति एड्गर्टन् ( Edgerton ) महाशयो वदति (१)। तन्न यथातथम्। मूलकर्तृणां पुत्रैरनन्तदेवैरेव खलु विभज्य व्याख्या कृता भाट्टालङ्कारकारैः। तदनुरोधेनैव च आचार्यपादैरपि विभागः कृतः। तमनालोक्यैव(२) एड्गर्टन महोदयैर्यत्किञ्चिदुच्यते। अतस्सर्वथा तदुपेक्षार्हं प्रेक्षावताम्।

ग्रन्थकर्तुर्देशकालकुलादिविषये प्रथमसंस्करणभूमिकायां यदुक्तं गुरुवर्यैः न ततोऽधिकं किञ्चिद्वक्तव्यमवशिष्यते। इदमनेन प्रतीयते काश्यां षोडशसप्तदशशताब्द्योर्दाक्षिणात्येषु विद्वत्कुलेषु मीमांसाद्वयपारदृश्वनां कुलद्वयं सुप्रसिद्धमासीत्–एकं भट्टकुलम्, अन्यच्च देवकुलम्। तत्र भट्टकुलमलङ्कुर्वाणा आसन् नारायणभट्टप्रभृतयः, यैर्बहवोऽनुत्तमा मीमांसाग्रन्था धर्मशास्त्रग्रन्थाश्च रचिता प्रभावलीपर्यन्ताः। देवकुलमलङ्कुर्वाणा रुद्रदेवखण्डदेवादयः, यैर्भाट्टदीपिकाप्रभृतयः सर्वातिशायिनो ग्रन्था विरचिताः। तदुभयकुलीनातिरिक्तोऽयं न्यायप्रकाशकारः आपदेव इति। एतत्कुलीना अपि पूर्वोत्तरमीमांसयोर्धर्मशास्त्रेष्वपि नैकशो ग्रन्थान् जग्रन्थुरिति प्रमाणतोऽवगम्यते।

ग्रन्थस्यास्य संशोधनकार्ये सज्जतो मम मध्ये मध्ये आदर्शान्वेषणे पुस्तकान्तरावलोकने च साह्यमाचरितवते श्रीमते कृष्णमूर्तिशर्मणे गुरुचरणानां सुपुत्राय मदन्तेवसते च स्वाशिषः प्रयुञ्जानः, सावधानेनाऽपि कृतेऽस्मिञ्छोधनकार्ये पुरुषबुद्धिसाधारणाः तत्र तत्र सम्भावितास्त्रुटीरशुद्धीश्च कृपया परिमार्ष्टुं विबुधगणानभ्यर्थयन् अन्ततः सर्वतः श्रेयोवहां गुरुचरणकृपामेव परमां मन्वानो मदीयं कार्यमिदं परमेश्वरस्य चरणकमलयोस्समर्पयन् विरमामि।

संस्कृतमहाविद्यालयः<br>काशी हिन्दू विश्वविद्यालयः<br>वाराणसी<br>२४-३-४९

इति<br>विद्वज्जनवशंवदः—<br>**अ० मु० रामनाथदीक्षितः**

---

(1) Even the division into two parts, is found in neither of the other editions and was probably made by Chinnaswami himself. P. 4. L. 20 in the Introduction of Mimansa Nyaya Prakasa. Printed in the Oxford University Press.

(2) He says this Anantadeva worte a commentary on his father's Mimansa Nyaya Prakasa, called Bhattalankara, which according to Chinnaswami ( P 5 ) has been edited and printed by Mahamahopadhyaya Pandit. Lakshmana Sastri; I regret to say that I have not had access to it ( P. 18. ) Intro.

# व्याख्यातुर्निवेदनम् ।

अथेदानीमयमापदेवकृतो न्यायप्रकाशाख्यो मीमांसाप्रकरणग्रन्थो मुद्राप्य प्रकाश्यते सव्याख्यो मीमांसाशास्त्रं प्रविविक्षूणामुपकृतये । सुदृढमिदमभिधातुं शक्यते शास्त्रेऽस्मिन् नैतादृशः प्रकरणग्रन्थोऽथ यावत् प्रकाशं नीतः । किं बहुना नाद्याप्येतादृशो ग्रन्थो विरचित इत्यपि वक्तुं शक्यते । सन्ति च कानिचन प्रकरणानि भाट्टभास्करमुखान्यद्य यावदमुद्रितानि, तानि तु नानेन सह समं सोपानमारोढुं प्रभवन्ति । योऽयमिदानीमुपलभ्यतेऽस्माभिरर्थसंग्रहाख्यो ग्रन्थः स प्रायेणास्य प्रतिकृतिरेवेति करबदरसमानमेतत् । ग्रन्थकृदयमतिकठिनानामपि विषयाणामनतिविस्तृतया हृदयङ्गमयैव शैल्योपपादने विषयस्यैकस्योपपादनावसरे विषयान्तराणामपि प्रसङ्गादानयने चानितरसाधारणीं नैपुणीमावहति । यद्यप्यनेनानतिबृहत्यस्मिन् ग्रन्थे बहवो विषया विचारिताः ये सर्वत्रास्मिन् शास्त्रे शास्त्रान्तरे चात्यन्तमुपयुक्ताः स्थानान्तरं प्रत्यतिदेशार्हाः तथापि ते प्रायशः पूर्वषट्कान्तर्गता एव । उत्तरषट्कान्तर्गता अतिदेशोहबाधादयोऽत्यल्पमिह निरूपिताः, तेऽपि प्रसङ्गादेव । पूर्वषट्केऽपि च प्रथमतृतीयपञ्चमाध्यायीया एव प्राधान्येन निरूपिताः । एवञ्चात्र ग्रन्थे कियन्ति कानि चाधिकरणान्युपात्तानि केषां चाधिकरणानां निरूपिता विषया इत्यनन्तरप्रदर्शितया सूच्या व्यक्तीभविष्यति ।

## ग्रन्थस्यास्य मूलभूताः ग्रन्थाः

ग्रन्थोऽयं तन्त्रवार्तिकादिकान् स्वप्राचीनान् भाट्टमतानुयायिनो ग्रन्थानवलम्ब्य प्रवृत्तोऽपि प्राधान्येन शास्त्रदीपिकां न्यायरत्नमालां न्यायसुधां च राणकापरनामधेयामवलम्ब्यैव प्रवृत्तः । तेषामेव च सिद्धान्ताः प्रायेणात्र निरूपिताः । तत्रापि मिश्रपार्थसारथिसिद्धान्तेषु ग्रन्थकृतः प्रेमातिशय इत्यवगम्यते । अत एव तत्तद्विषयनिरूपणावसरे प्रथमतो न्यायसुधाकृन्मतमुपपादयति, अनन्तरं च सिद्धान्तरूपतया शास्त्रदीपिकाकारमतम् । अपि च "अन्ये त्वाचार्या आहुः" ( न्या. प्र. पृ. १३४ ) "अन्ये त्वाचार्या आहुः" (न्या. प्र. पृ. १५०) इति पार्थसारथिमिश्रानेवाधिकमाचार्यपदेन व्यपदिशन् तत्रैव स्वस्य गौरवातिशयमाविष्करोति । न्यायरत्नमालायाः श्रीपार्थसारथिमिश्रकृतायाः न केवलं सिद्धान्तोऽनुसृतोऽनेन, क्वचिच्च मिश्रपार्थसारथेः पङ्क्तयोऽपि तथैवोद्धृत्य किञ्चिद्विपरिणतिपूर्वकं ग्रन्थेऽत्र निवेशिताः ।

यथा—

| ( न्यायरत्नमाला ) | ( न्यायप्रकाशः ) |
| --- | --- |
| तत्र विधात्री लिङाद्या । अभिधात्री व्रीह्यादिश्रुतिः । विनियोक्त्री त्रिधा- एकाभिधानं, एकं पदं, विभक्तिरिति । यस्य हि शब्दस्य श्रवणादेव सम्बन्धः प्रतीयते सा विनियोगश्रुतिः" ( न्या. र. पृ. १२३ ) | तत्र विधात्री लिङाद्यात्मिका । अभिधात्री व्रीह्यादिश्रुतिः । यस्य च शब्दस्य श्रवणादेव सम्बन्धः प्रतीयते सा विनियोक्त्री । सा च त्रिधा-विभक्तिरूपा, समानाभिधानरूपा, एकपदरूपा चेति । ( न्या. प्र. पृ. २६ ) |

| | |
|---|---|
| तदेवं प्रकरणं प्रयाजादीनां विनियोजकम् । तच्च द्विविधं महाप्रकरणमवान्तरप्रकरणं चेति । तत्र फलभावनायाः प्रकरणं महाप्रकरणम् । | तच्च प्रकरणं द्विविधं महाप्रकरणमवान्तरप्रकरणं चेति । तत्र फलभावनायाः प्रकरणं महाप्रकरणम् । तच्च प्रयाजादीनां ग्राहकम् ( न्या. प्र. ५२ ) |
| तदन्तराले यदङ्गभावनायाः प्रकरणं तदवान्तरप्रकरणम्, तच्चाभिक्रमणादीनां प्रयाजादिषु विनियोजकम् । ( न्या. र. पृ. १३३ ) | फलभावनाया अन्तराले यदङ्गभावनायाः प्रकरणं तदवान्तरप्रकरणम् । तच्चाभिक्रमणादीनां प्रयाजादिषु 'विनियोजकम् ( न्या. प्र. ६५ ) |
| यस्तु सह प्रयुज्यमानेषु सन्निपातिनामावृत्त्यानुष्ठाने प्रथमक्रम एव द्वितीयादिष्वपि प्रयोगवचनाङ्गसाहित्याबाधायाऽऽश्रीयते स प्रवृत्तिक्रमः '(न्या.र.१५५) | सह प्रयुज्यमानेषु प्रधानेषु सन्निपातिनामङ्गानामावृत्त्यानुष्ठाने कर्तव्ये द्वितीयादिपदार्थानां प्रथमानुष्ठितपदार्थक्रमात् यः क्रमः स प्रवृत्तिक्रमः (न्या. प्र. १००) |
| यस्तु प्रकृतौ नानादेशगतानां पदार्थानां विकृतावेकस्य देशे सर्वेषामनुष्ठाने वचनात् कर्तव्ये सति यस्य देशेऽनुष्ठीयन्ते तस्य प्रकृत्यवगतस्थानाबाधेनागन्तुभिः क्रमस्समाश्रीयते स काण्डक्रमः । ( न्या. र. १५५ ) | प्रकृतौ नानादेशानां पदार्थानां विकृतावेकस्मिन् देशेऽनुष्ठाने कर्तव्ये यस्य देशेऽनुष्ठीयन्ते तस्य प्रथममनुष्ठानमितरयोश्च पश्चात्, अयं यः क्रमः स स्थानक्रमः । ( न्या. प्र. ४६ ) |

## ग्रन्थकृत्समयः

ग्रन्थकृदयं दाक्षिणात्यो महाराष्ट्रो देवोपनामके कुले समुत्पन्नः सप्तदश्याः शताब्द्या आदिमे भागे ( Seventeenth century A. D. ) भूमिमिमामलंचकारेत्यभ्यूहितुं शक्यते । पूर्वोत्तरमीमांसयोः परं पारमधिगतवन्तः श्रीमन्तः खण्डदेवाः त्रयोविंशत्युत्तरसप्तशताधिकसहस्रे ( १७२३ ) वैक्रमेऽब्दे ( 1665 A.D. ) वाराणस्यां स्वीयं भौतिकं देहं तत्यजुरिति प्रमाणैरवगम्यते । तैश्च स्वीये भाट्टदीपिकाग्रन्थे न्यायप्रकाशोक्तानां एतद्ग्रन्थकर्तृपुत्रकृतभाट्टालङ्कारोक्तानां च विषयाणां खण्डनं कृतम् । एतच्च स्पष्टीकृतं तच्छिष्यैः श्रीशम्भुभट्टैः स्वकृतायां तद्व्याख्यायां प्रभावल्यां–"यत्तु न्यायप्रकाशे सप्तमीबहुव्रीहिरप्याश्रितः तस्य दूषणं कौस्तुभे द्रष्टव्यम्"—"यत्तु भाट्टालङ्कारकृता......तदुपेक्षितं पूज्यपादैः" इत्यादिना ग्रन्थेन । अतश्च भाट्टदीपिकाकारेभ्यः श्रीखण्डदेवेभ्यः किञ्चिदिव पूर्वस्मिन् काले ग्रन्थकर्ताऽयमासीदित्यवगम्यते । एतत्कुलपरम्पराप्रतिपादकाः श्लोका एतत्तनुजकृतस्मृतिकौस्तुभे उपलभ्यन्ते । ते यथा—

आसीद् गोदावरीतीरे वेदवेदिसमन्वितः । श्रीकृष्णभक्तिमानेक एकनाथाभिधो द्विजः ॥
तत्सुतस्तद्गुणैर्युक्तः सर्वशास्त्रार्थतत्त्ववित् आपदेवोऽभवद्देवात् प्राप यस्सकलान् मनून् ॥२॥
मीमांसानयकोविदो मधुरिपोस्सेवासु नित्योद्यतः
विद्यादानविभावितोत्तमयशा आसीत् तदीयात्मजः ।

यस्यानन्तगुणैरनन्त इति सन्नामार्थवत्तां गतं
येनाऽवादि च वादिनां श्रुतिशिरस्सिद्धान्ततत्त्वं मुदे ॥ ३ ॥
न्यायप्रकाशकर्ता निरवधिविद्यामृतप्रदस्सततम् ।
मीमांसाद्वयनयवित् तनयस्तस्याऽपदेवोऽभूत् ॥ ४ ॥ इति ॥

अयं पूर्वोत्तरमीमांसयोः धर्मशास्त्रे च परिनिष्ठित आसीत् ।

**अस्य गुरुः**

अयं च स्वपितुरनन्तदेवादेव विद्यामनवद्यामधिगतवान् । नान्यस्मात्, अयमभिप्रायो ग्रन्थकर्त्रैव ग्रन्थादौ गुरुनमस्कारप्रतिपादके द्वितीयश्लोके ध्वनितः विवृतश्च तत्पुत्रेण "अनन्तरूपिणमिति अनन्तसंज्ञकमित्यर्थः" इति तत्पद्यं व्याचक्षाणेन । सति चैवं कीत्-महाशयेन ( A. Berriedale Keith ) पाश्चात्यविदुषा "आपदेवः अनन्तदेवस्य पुत्रो गोविन्दस्य शिष्यः" ( Apadeva, son of Anantadeva, and pupil of Govinda [Karma Mimamsa P. 13.]) इति यदुक्तं तत् निर्मूलं "गोविन्दगुरुपादयोः" इति न्यायप्रकाशोपान्तिमश्लोकस्थपददर्शनजनितभ्रममूलं वेति पश्यामि ।

**अनेन कृताः ग्रन्थाः**

अनेन पूर्वमीमांसायामयमेको ग्रन्थः उत्तरमीमांसायां दीपिकाख्यो ग्रन्थः श्रीसदानन्दयतिकृतस्य वेदान्तसारस्य व्याख्यारूपश्चैको व्यरचि । सोऽपि काश्यां श्रीरङ्गे च मुद्रित इदानीमुपलभ्यते । आपस्तम्बश्रौतसूत्रव्याख्यैकाप्यनेनारचितेति मद्रप्रान्तीयराजकीयपुस्तकालयसूचीपत्रतोऽवगम्यते। परन्तु साऽनेनैव कृता एतत्तनयेन वेति तत्र सन्दिग्धमुक्तम् । एतावन्त इदानीमुपलभ्यन्ते । त्रिष्वपि तदीयेषु ग्रन्थेष्वयमेव न्यायप्रकाशः प्रथमगणनामर्हति ।

**व्याख्यानावश्यकता**

एवमत्युत्तमोऽयं ग्रन्थो यद्यपि महान्तमुपकारमावहत्येतच्छास्त्रं प्रविविक्षताम्, मुद्रितश्चापि बहुत्र बहुवारं, तथापि अतिगम्भीरत्वात् अनतिसरलैर्वाक्यैरारचितत्वात् अनतिविस्तृतत्वाच्चान्तरेणैतदाशयाविष्कारिणीं समुचितां काञ्चन व्याख्यां नाकाङ्क्षामध्येतॄणां यथावदभिपूरयतीति जानात्येवेदंशास्त्रपरिशीलनचतुरा पण्डितमण्डली । तेन च क्लिश्यमाना छात्रसंहतिरतितरामुपकृता श्रीमतां पण्डितप्रवराणां महामहोपाध्यायश्रीकृष्णनाथन्यायपञ्चाननमहाशयानां व्याख्ययार्थदर्शिन्याख्यया, तदर्थमधमर्णं छात्रकुलं तेभ्य इति नात्र विवादः, तथापि कालेऽस्मिन् भारतीयनिखिलशास्त्रकलाकौशलभक्षणकुक्षिम्भरौ, अनुभवन्तु स्वाप्निकीमेव दशामिदंशास्त्रीयेष्वपि पदार्थेषु क्षीणे च पारम्परिकेऽध्ययनाध्यापनरूपे स्नेहे तत्क्षयाच्चासन्ननिर्वाणे ज्ञानप्रदीपे न यथायथमवभासन्ते पदार्था एतच्छास्त्रीया अपि, किन्तु सुशिक्षितमतीनामप्यन्यथान्यथा प्रतिभान्ति प्रतिभावतां मतौ, त एव च ग्रन्थारूढा भवन्तीत्ययं दोषो व्याख्यामपि तामर्थदर्शिनीं(१)बहुत्र स्पृशति । तद्व्याख्यासम्बन्धय-

---

( १ ) तत्रत्या दोषा इमे—अक्लृप्तोपकारकत्वेनेति । प्रधानस्योपकारविषयकाकाङ्क्षाविरहेणोपकारस्य न क्लृप्तत्वं, सान्निध्यादुपकारकं कल्प्यमिति भावः । ( ८७-११ ) क्लृप्तोपकारत्वेन = उपकाराकाङ्क्षाया उत्थितत्वेन । ( ८७-१४ ) क्लृप्तोपकारत्वादिति । उपकारस्योपकारपृष्ठभावेन शब्दप्रतिपा-

मेवाशयो भाट्टालङ्कारभूमिकायां मनागुपदर्शितो विद्वद्वरैः महामहोपाध्यायैः श्रीमद्भिर्लक्ष्मणशास्त्रिभिरपि। तेन च दोषेणाध्येतॄणां बहु विप्लवते पदार्थज्ञानमिति नेदमपि तिरोहितम्। दोषमिमं दूरीकर्तुकामेन व्याख्येयमारब्धा मया। यद्यपि प्राचीनं व्याख्यानं भाट्टालङ्काराख्यं ग्रन्थकर्तुः पुत्रैरनन्तदेवै रचितं श्रीमद्भिः म. म. पं. लक्ष्मणशास्त्रिभिः संशोध्य मुद्रापितं चकास्ति, तथापि गभीरेणापि सम्प्रदायमनुसरतापि शास्त्रानुगतेनापि च क्वचिदतिविस्तृतेन क्वचिच्चातिसङ्कुचितेन प्रायशो मूलासंस्पर्शिना पण्डितमात्रौपयिकेन तेन नोपकारं साधीयांसमुपलब्धुमीष्टे छात्रगण इति मत्वैवात्र प्रयत्नवानहमभवम्। अध्यापनाद्यवशिष्टेऽल्पीयस्यैवाऽवकाशे किञ्चित् किञ्चिदिवालिखितेयं सारविवेचिनी गते भुवसुनन्देन्दुमिते (१९८१) वैक्रमेऽब्दे ज्येष्ठमासि परमपावन्या भगवत्या भागीरथ्यास्तटे विराजमाने कनखलक्षेत्रे भगवतो भवानीभागधेयस्य विश्वेशस्याऽनुकम्पया पूर्णतां गता।

## अस्या उद्देश्यानि

व्याख्यया चानया छात्रोपकारमेव विशेषतस्समीहमानेन मया सरलैरेव वाक्यैरियं ग्रथिता। बहुत्र ग्रन्थसन्दर्भो विवृतस्स्वीयैर्वाक्यैः। यत्र यत्रान्यथयितं मूलं व्याख्यातं च शास्त्रसम्प्रदायाद्यननुगतमन्यैः, तत्र सर्वत्रापि यथावन्मूलनिवेशनेन सम्प्रदायाद्यनुगतव्याख्याकरणेन च दोषास्ते दूरीकृताः। श्रौतपदार्था अपि विवृता यथामति तत्र तत्र। मूलस्थानां विषयवाक्यानां तत्तत्स्थलनिदर्शकमङ्कनं तत्तत्पृष्ठ एवाऽधोभागे कृतम्। व्याख्यानपरिगृहीतानां तु तेषां तदङ्कनं तत्तन्निकट एवारचितम्। सौमिक्या वेदेरापस्तम्बश्रौतसूत्रानुसारिण्याः, दार्शिक्यास्तस्याः, दार्शिकानां पात्राणां च प्रतिकृतयस्संनिवेशिताः।

एवं गुरुवरैरधिगतनिखिलतन्त्रमर्मभिरतिवेलकरुणापूरपूरितान्तःकरणैर्यदुपदिष्टं, यच्चाधिगतमितस्ततो ग्रन्थान्तरेभ्यः, तत् यथोचितमत्र व्याख्यायां निवेशितम्। अतो नामूलं लिखितं किञ्चित्, न चोक्तमनपेक्षितम्। एवं छात्राणामुपकारातिशयमाधातुकामेन मया व्याख्येयमारचिता सङ्गृहीताः पदार्थाश्चैतावन्तः। परन्तु न जाने–तावन्तमुपकारमादध्यादियं छात्रेभ्यो, न वा, कथयेच्चैतावन्तं परिश्रमं मदीयं, न वेति। अथ वा कथयतु मा वा कथयतु तदुपरि न्यस्तस्समस्तो भरः।

एवं विनिद्रेण नितान्तमवहितमनसापि च कृते परिश्रमे पुरुषमात्रसाधारणा भ्रम-

---

दितत्वादित्यर्थः। (८७–२३) यथा दोक्षणीयेष्टावभिहितस्सत्यवदनादिरूपो वाङ्नियमः। (१०१–२१) प्रोक्षणीपात्रे यदुत्पवनादिकं तत्प्रोक्षणीपात्रापूर्वार्थम्। (१०१–२३) तत्र "प्रयाजे प्रयाजे कृष्णलं जुहोती"ति श्रुत्या परिप्राप्तप्रयाजानुवादेन प्राकृतहोमातिरिक्तत्वेन कृष्णलहोमा विहिताः। (१०४–१३) १०५ पृष्ठे "अत्रायमाशय" इत्यारभ्य १०६ पृष्ठे १८ पंक्तिपर्यन्तं यस्सन्दर्भस्स सर्वोऽपि। विद्वदिति। वेदविदित्यर्थः। वाक्यद्वयम् = अमावास्यायाममावास्यया यजेत, पौर्णमास्यां पौर्णमास्या यजेतेति श्रुतिद्वयम्। (११६–२७) १२४ पृष्ठे २५ पंक्तौ 'क्रयस्य दृष्टार्थतयेत्यारभ्य नियम इति भावः, इत्यन्तो भागः। १५४ पृष्ठे १९ पंक्तौ पशुपुरोडाशयागादीति। अत्र यागपदं होमपरम् इत्यारभ्य १३५–२२ पर्यन्तो भागः। एवमन्येऽपि दोषास्सन्ति। दोष इमे तत्र तत्र मूलस्य यथावत् व्याख्यानेन निराकृताः।

इदमत्रावधेयम्*। न मया पुरोभागितामाश्रित्य दोषा इमे उद्घाटिताः। परन्तु दोषैरेतैः पदार्थज्ञानवैपरीत्यभिया तदपनेतुकामेनेवेति सुधीभिराकलनीयम्।

प्रमादादिदोषा अत्राप्यवश्यं भवेयुरेव, तथापि येऽत्र गुणलवास्ते गुरूणाम्, ये च दोषास्ते मदीयमतिमान्द्यविलसिता इति गुणैकपक्षपातिनो विपश्चितः क्षाम्यन्तु मदीयमपराधम्, अनुगृह्णन्तु मामाशीःप्रदानेन, निवेदयन्तु च मह्यमत्रत्यान् दोषविशेषान् येनाहमुद्यतस्स्यां द्वितीयावृत्तौ तन्निराकरणायेति भूयो भूयः प्रार्थये पण्डितप्रवरान्।

यत्र (१) वयं छात्रावस्थायामवस्थिताः तैस्तैरुपकारैरुपकृत्य सुतनिर्विशेषमथवा ततोऽप्यधिकं पोषिता अध्यापिताश्च, तादृशमद्रपुरीयसंस्कृतमहाविद्यालयप्रतिष्ठापयितॄणामिदानीममरनगरमधितिष्ठतामप्यस्मादृशां मनांस्यद्याप्यधिवसतां श्रीमतां महनीयचरितानां वी. कृष्णस्वाम्यार्याणां अतिगभीरां अतिमहता ब्राह्मेण तेजसा समुज्वलन्तीं अमानुष्या शक्त्या परिष्वक्तां तत्तादृशीं मूर्तिं कदापि विस्मर्तुमनीशोऽहमनवरतं तामेव स्मरामि।

यैश्च सदयमिदं शास्त्रमध्यापितोऽहं, यैश्च सहार्दमेतच्छास्त्रीयाणि मर्माण्यवबोधितः तेभ्यः श्री १०८ मद्गुरुचरणेभ्यः, विदितवेदितव्येभ्यः महामहोपाध्याय-मीमांसाकण्ठीरव-शास्त्ररत्नाकरादिभिरुपाधिभिर्विभूषितेभ्यः **श्रीवेङ्कटसुब्रह्मण्यशास्त्रिपादेभ्यः**, अखिलेष्वपि तन्त्रेषु क्वचिदप्यकुण्ठितमतिशक्तिभ्योऽतिवेलप्रसरत्प्रतिभापरीवाहेभ्यः S. **श्रीकुप्पुस्वामिशास्त्रिपादेभ्यश्चान्यत्** तदुचितं किञ्चिदुपहर्तुमक्षमोऽहं केवलं हृदम्बुजमेव तेषां पदाम्बुजेषु सप्रश्रयमुपहरामि।

मूलशोधनार्थं सादरमनेकादर्शपुस्तकदानेन मयि प्रेमातिशयमाविष्कृतवद्भ्यो वाराणसीस्थराजकीयसंस्कृतविद्यालयाध्यक्षेभ्यः दार्शनिकग्रन्थोद्धारे नितान्तं बद्धश्रद्धेभ्यो विद्वद्वरिष्ठेभ्यः **श्रीगोपीनाथकविराज** (M. A.) **महाशयेभ्यः** सादरं कार्तज्ञमाविष्करोमि।

घर्मकालेऽतिकठोरतिग्मरश्मिकिरणसन्तापितायामस्यां विश्वेशनगर्यामवस्थाय ग्रन्थमिमं परिसमापयितुमक्षमाय कनखलं गतवते तत्र मह्यमपेक्षितमखिलमपि सौकर्यमव्याजं सम्पादितवद्भ्यः श्रीमद्भ्यः श्रीभागवतानन्दस्वामिपादेभ्यो मण्डलेश्वरेभ्यः कृतज्ञतामतितरां प्रकटयामि।

शोधनादिषु कार्येषु महदुपकृतवद्भ्यां मत्प्रियशिष्याभ्यां मीमांसाचार्याय-श्रीकृष्णमूर्तिशर्मणे श्रीरामचन्द्रशर्मणे ( B.Sc. ) च महतीमाशिषं प्रयुञ्जे। प्रार्थये च भगवन्तमुमारमणं—तावुत्तरोत्तरश्रेयःप्रदानेनानुगृह्णात्विति।

एतादृशानां दर्शनग्रन्थानां मुद्रणे प्रकाशने चातितरां कृतोत्साहस्य चौखम्बासंस्कृतपुस्तकावल्यधिपतेः श्रेष्ठिकुलभूषणश्रीहरिदासगुप्तमहोदयात्मजस्य जयकृष्णदासगुप्तश्रेष्ठिवर्यस्य तदनुजानां च परिश्रमं नितरामनुमोदेऽहम्। प्रार्थयामि च सुधीजनान्-आशीःप्रदानेन प्रोत्साहयन्त्वेनान् दार्शनिकग्रन्थानामतिविरलप्रचाराणामितोऽप्यधिकमाविष्करण इति।

विद्वज्जनानुचरः—

श्रीचिन्नस्वामिशास्त्र्यपरनामा

**श्रीवेङ्कटसुब्रह्मण्यशर्मा**

श्रीकाशीहिन्दूविश्वविद्यालये

पूर्वमीमांसाप्रधानाध्यापकः।

वाराणसी
ज्येष्ठशुक्लद्वादशी
१९८२ सं०

---

(१) वयं = अहं मत्सब्रह्मचारिणश्च।

# विषयसूची

श्रीगणेशाय नमः ।

आपदेवकृतः

# मीमांसान्यायप्रकाशः ।

## महामहोपाध्याय-श्रीचिन्नस्वामिशास्त्रिकृतया सारविवेचिन्याख्यया व्याख्यया संवलितः ।

---

यत्कृपालेशमात्रेण पुरुषार्थचतुष्टयम् ।
प्राप्यते तमहं वन्दे गोविन्दं भक्तवत्सलम् ॥ १ ॥
अनन्तगुणसम्पन्नमनन्तभजनप्रियम् ।
अनन्तरूपिणं वन्दे गुरुमानन्दरूपिणम् ॥ २ ॥

**इह खलु परमकारुणिकेन भगवता (१)जैमिन्यृषिणा "अथातो धर्मजिज्ञासा" (२)इत्यादिना द्वादशस्वध्यायेषु धर्मो विचारितः । तत्र वेदेन प्रयोजनमुद्दिश्य**

---

श्रीशिवाभ्यां नमः ॥

## मीमांसान्यायप्रकाशटीका सारविवेचिन्याख्या ।

कलत्रीकृतवामार्धमर्द्धेन्दुकृतशेखरम् ।
भूषणीभूतभोगीन्द्रमस्तु स्वस्तिकरं महः ॥
नत्वा गुरून् महाभागान् बालानां हितकाम्यया ।
व्याख्यां न्यायप्रकाशस्य कुर्वे सारविवेचिनीम् ॥

तत्रादौ ग्रन्थकर्त्ता श्रीमदनन्तदेवसूनुः श्रीमदापदेवो मीमांसान्यायप्रकाशाख्यं पूर्वमीमांसाप्रकरणग्रन्थं चिकीर्षुः स्वीयग्रन्थस्य निर्विघ्नपरिसमाप्तिमभिलषन्नीश्वरं स्तौति- **यत्कृपेति** । **प्राप्यत इति** । जनैरिति शेषः । गुरुं प्रणमति-**अनन्तेति** द्वितीयेन । **अनन्तगुणेति** । दयादाक्षिण्यविनयाद्यनेकगुणविशिष्टमित्यर्थः । **अनन्तभजनप्रियमिति** । अनन्तो भगवान् विष्णुः, तद्भजने प्रीतिमन्तमित्यर्थः । **अनन्तरूपिणमिति** । रूप्यते बोध्यतेऽनेनेति व्युत्पत्त्या रूपशब्दो नामपरः । अनन्तनामानमित्यर्थः । गुरुपरमात्मनोरैक्यं स्मरति-**आनन्देति** ।

**अथातो धर्मजिज्ञासेत्यादिनेति** । **"अन्वाहार्ये च दर्शनात्"** इत्यन्तेनेति शेषः । **अथ** गुरुकुलावस्थितिपूर्वकसाङ्गवेदाध्ययनानन्तरं, **अतः** वृत्तस्याऽध्ययनस्य दृष्टफलकत्वाद्धेतोः, **धर्मजिज्ञासा** धर्मविषयकविचारः कर्त्तव्य इति सूत्रार्थः । **धर्मो विचारित इति** । प्रमाणभेदशेषत्वप्रयुक्तिक्रमाधिकारसामान्यविशेषातिदेशोहबाधतन्त्रप्रसङ्गाख्यैः द्वादशस्वध्यायेषु क्रमशो निरूपितैः परिकरैः सहितो धर्मो विचारित इत्यर्थः । धर्मलक्षणमाह—**वेदेनेति** । स्वातन्त्र्येणेति शेषः । अतः स्मृत्याचारयोः वेदमूलकत्वेन

---

१ जैमिनिमुनिना । २ इत्यारभ्य ।

**विधीयमानोऽर्थो धर्मः । यथा यागादिः । स हि 'यजेत स्वर्गकाम' इत्यादिवाक्येन स्वर्गमुद्दिश्य विधीयते । तथा हि—यजेतेत्यत्राऽस्त्यंशद्वयम्, यजिधातुः प्रत्ययश्च । (१)तत्र प्रत्ययेऽप्यस्त्यंशद्वयम्, आख्यातत्वं लिङ्त्वं च । आख्यातत्वं च दशसु लकारेषु विद्यते । लिङ्त्वं पुनः केवलं लिङ्येव । तत्राऽऽख्यातत्वलिङ्त्वाभ्यां भावनैवोच्यते । भावना नाम—भवितुर्भवनानुकूलो भावकव्यापारविशेषः । (२)सा च द्विविधा (३)शाब्दी भावना आर्थी भावना चेति ।**

**तत्र पुरुषप्रवृत्त्यनुकू(४)लभावकव्यापारविशेषः शाब्दी भावना । सा च**

---

धर्मप्रामाण्येऽपि न क्षतिः । ननु **'चोदनालक्षणोऽर्थो धर्मः'** इति पारमर्षं धर्मलक्षणसूत्रम्, चोदनाशब्दश्च **"चोदनेति क्रियायाः प्रवर्त्तकं वचनमाहुः"** इति भाष्यात् **"चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः"** (श्लोक वा० पृ० २११) इति वार्त्तिकाच्च विधिवाक्यमेव बोधयतीति विधिबोधितत्वमेव धर्मलक्षणे वक्तव्यं, तत्त्यक्त्वा कथं वेदबोधितत्वमुच्यते इति चेत्, न चोदनामात्रगम्यत्वं धर्मस्य, किन्तु चोदनादिप्रमाणाष्टकगम्यत्वमेव, अत एव भगवता भाष्यकारेण प्रथमाध्यायार्थप्रतिज्ञावसरे **"को धर्मः, कथंलक्षणकः,"** इति सामान्यत एव प्रतिज्ञा कृता । अत एव च प्रमाणाध्याये प्रथमे स्मृत्याचारादीनां विचारः संगच्छते । सूत्रं तु प्रथमपादार्थप्रतिज्ञापरमिति ॥ 'न हिंस्यात्' इत्यादिनिषेधविषयाणां हिंसादीनामपि निषेधवाक्यरूपचोदनाविषयत्वात् तेषां धर्मत्वव्युदासार्थमर्थपदम् । अत्र च सूत्रस्थचोदनापदेन प्रवर्तकवाक्यवत् निवर्तकवाक्यस्यापि ग्रहणम्, अत एव **"प्रवृत्तौ वा निवृत्तौ वा या शब्दश्रवणेन धीः । सा चोदना"** इति वार्त्तिकमपि सङ्गच्छते । एवं च चोदनेति क्रियायाः प्रवर्तकं वचनमित्यत्र प्रवर्तकशब्दो निवर्तकस्याऽप्युपलक्षकः, एवं वार्तिकस्थविधिशब्दो निषेधस्याऽप्युपलक्षक इति ध्येयम्॥

**यथा यागादिरिति ।** एतेन गौतमीयानामिव नाऽस्माकमपि विहितकर्मजन्यापूर्वमेव धर्मः; किन्तु विहितो यागादिरेव मुख्यो धर्मः, अपूर्वे तु तज्जन्यत्वेन भाक्तः प्रयोगः इति सूचितम् । आदिपदेन दानहोमादयो द्रव्यगुणादयश्च गृह्यन्ते । तत्र लक्षणं सङ्गमयति—**स हीति । ननु** कथं यागादेः विधेयत्वम्, ? कश्च वा विधिः ? अत आह—**तथाहीति । अंशद्वयं** शक्तशब्दद्वयं । **तत्र** धातुप्रत्यययोर्मध्ये । **अंशद्वयं** शक्ततावच्छेदकद्वयम् । **दशस्विति ।** यजेतेत्यत्र यदाख्यातत्वं तद्दशलकारसाधारणमित्यर्थः । **आख्यातेति ।** प्रत्ययवृत्तिभ्यामित्यर्थः । **भावनैवेति ।** भावनाद्वयमपीत्यर्थः । भावनास्वरूपं प्रतिपादयति—**भावना नामेति । भवितुः** उत्पद्यमानस्य, **भावनानुकूलः** उत्पत्त्यनुकूलः, **भावकव्यापारविशेषः** प्रयोजकनिष्ठव्यापारविशेषः । **शाब्दीति ।** शब्दनिष्ठत्वाच्छाब्दीति ग्रन्थकृदेव वक्ष्यति । लौकिकानां प्रवर्तनाविशेषाणां पुरुषधर्मत्वेन शब्दनिष्ठत्वायोगात् न तेषां शब्दभावनात्वम् । **केचित्तु** प्रवर्त्तनारूपपुरुषाशयविशेषस्याऽपि लौकिकस्य शब्दाभिधेयत्वात् शाब्दीभावनात्वमिच्छन्ति । **आर्थीति ।** अर्थ्यते प्रार्थ्यते पुरुषैरिति अर्थः फलम्, तत्प्रयोजकत्वाद्भावना **आर्थी** । यद्वा अर्थ्यते फलं येनेत्यर्थः पुरुषः, तद्गतत्वादार्थी ।

**तत्र** तयोर्मध्ये । **पुरुषेति ।** प्रयोज्यस्य पुरुषस्य या प्रवृत्तिः गवानयनाद्यनुकूला

---

१ तत्र इति नास्ति । २ सा द्विविधा ३ शाब्दी आर्थीचेति । ४ लो भावकव्यापारविशेषः ।

**लिङ्त्वांशेनोच्यते। (१)लिङः श्रवणे 'अयं मां प्रवर्तयति' 'मत्प्रवृत्त्यनुकूलव्यापारवानयम्', इति(२) नियमेन प्रतीयमानत्वात्। यच्च यस्मात्प्रतीयते तत्तस्य वाच्यम्, यथा गोशब्दस्य गोत्वम्। स(३) च प्रवृत्त्यनुकूलव्यापारविशेषो लोके पुरुषनिष्ठोऽभिप्रायविशेषः, वेदे तु (४)पुरुषाभावाल्लिङादिशब्दनिष्ठ एव। नहि वेदः पुरुषनिर्मितः।**

**(५) "वेदस्याऽध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।**
**वेदाध्ययनसामान्यादधुनाध्ययनं यथा॥"**

**इत्यादिना वेदापौरुषेयत्वस्य (६)साधितत्वात्। 'यः कल्पः स कल्पपूर्वः' इति न्यायेन संसारस्याऽनादित्वादीश्वरस्य च सर्वज्ञत्वादीश्वरो गतकल्पीयं वेदमस्मिन् कल्पे स्मृत्वा उपदिशतीत्येतावतैवोपपत्तौ प्रमाणान्तरेणार्थमुपलभ्य रचितत्वकल्पनानुपपत्तेश्च। ततश्च पुरुषाभावाच्छब्दनिष्ठैव सा। अत एव शाब्दीभावनेति व्यपदिशन्ति।**

---

यागाद्यनुकूला वा, तदनुकूलो यो व्यापारविशेषः आचार्यादिनिष्ठः शब्दनिष्ठो वा सा शाब्दीभावनेत्यर्थः। **लिङ्त्वांशेनेति**। लिङ्त्वरूपशक्ततावच्छेदकावच्छिन्नत्वेन रूपेणेत्यर्थः। कुत एतत्? अत आह—**लिङ्श्रवण इति**। **नियमेन** अव्यभिचारेण। **गोत्वमिति**। एतेन आकृतिशक्तिवादिनो मीमांसका इति सूचितम्। **प्रवृत्त्यनुकूलः** गवानयनादिविषयकप्रवृत्त्यनुकूलः। **पुरुषनिष्ठः** आचार्यादिप्रेरकपुरुषनिष्ठः। **पुरुषाभावात्** निर्मातृपुरुषशून्यत्वात्। **लिङादी**त्यादिपदेन लेट्लोट्तव्यप्रत्ययानां ग्रहणम्। स इत्यनुषज्यते। निर्मातृपुरुषाभावमनुमानेन साधयति—**वेदस्येति**। अत्र सर्वशब्देन निखिलशाखासम्बन्धिवेदाध्ययनं गृह्यते, न तु निखिलकालवृत्ति, अतश्च अतीतकालवृत्तिनिखिलशाखाध्ययनस्य पक्षत्वं बोध्यम्। एवं गुर्वध्ययनपूर्वकत्वं साध्यम्, वेदाध्ययनत्वं हेतुः, आधुनिकाध्ययनस्य दृष्टान्ततेति विवेकः। **इत्यादिने**त्यादिपदेन **'भारतेऽपि भवेदेवं कर्तृस्मृत्या तु बाध्यते। वेदेऽपि तत्स्मृतिर्या तु सार्थवादनिबन्धना'** इत्यादयो गृह्यन्ते। **साधितत्वादिति**। वार्तिके वाक्याधिकरण इति शेषः। **ननु** वेदस्येश्वरकर्तृकत्वमेवाऽस्तु, तस्य सर्वज्ञत्वेनाऽतीन्द्रियधर्मादिविषयकज्ञानसम्भवेन वेदकर्तृत्वसम्भवात्। अतश्च सिद्धं पौरुषेयत्वमित्यत आह—**यः कल्प इति। अयं भावः**—ईश्वरः किं यस्मिन् कस्मिंश्चित् कल्पे रचयति वेदम्? उत प्रतिकल्पम्? नाद्यः, तदभाववति कल्पे वेदैकगम्यधर्माधर्मज्ञानाभावेन धर्माधर्मानुष्ठानाभावात् कल्पान्तरोत्पन्नप्राणिनां सुखदुःखोत्पत्तिस्तदनुभवो वा न स्यात्। अनादौ संसारे क्व कल्पे रचनम्? क्व कल्पे तस्यैवोपदेशः इति नियन्तुमशक्यत्वाच्च। न द्वितीयः, एकस्मिन् कल्पे स्थितं वेदं सर्वेष्वपि कल्पान्तरेषु सर्वज्ञत्वादुपदिशतीत्येवं कल्पनालाघवे सति प्रतिकल्पं रचनाकल्पनागौरवाङ्गीकरणस्यान्याय्यत्वात्। **"धाता यथापूर्वमकल्पयत्"** इत्यादि श्रुतिरप्यत्राऽनुकूला। पक्षद्वयेऽपि वाक्यरचनाया जन्यज्ञानपूर्वकत्वदर्शनेन ईश्वरस्याऽपि जन्यज्ञा-

---

१ लिङ्श्रवणे। २ इति हि नियमेन प्रतीयते। ३ सच व्यापारविशेषः। ४ लिङादिनिष्ठ एव।
५ श्लो. वा. वाक्याधिकरणे १. १. ६. पृ० ९४५. ६ समर्थितत्वात्।

**(१)सा च शाब्दीभावनांशत्रयमपेक्षते, साध्यं, साधनमितिकर्तव्यतां, चेति। तत्र साध्याकाङ्क्षायां वक्ष्यमाणांशत्रयोपेताऽऽर्थीभावना साध्यत्वेन सम्बध्यते, एकप्रत्ययगम्यत्वेन समानाभिधानश्रुतेः। यद्यपि संख्यादीनामप्येकप्रत्ययगम्यत्वं समानं तथाऽप्ययोग्यत्वान्न तेषां भाव्यत्वेनाऽन्वयः।**

**करणाकाङ्क्षायां लिङादिज्ञानं करणत्वेन सम्बध्यते। तस्य च करणत्वं न भावनोत्पादकत्वेन सन्निकर्षस्येव रूपादिज्ञाने, सन्निकर्षात्प्राक् रूपज्ञानस्येव लिङादिज्ञानात्प्राक् शब्दधर्मभावनाया अभावप्रसङ्गात्, किं तु भावनाभाव्यनिर्वर्तकत्वेनैव। लिङादिज्ञानं हि शब्दभावनाभाव्यार्थीभावनां निर्वर्तयति, कुठार इव च्छेदनम्। अतो लिङादिज्ञानस्य करणत्वेनान्वयः।**

**इतिकर्तव्यताकाङ्क्षायां प्राशस्त्यज्ञानमितिकर्तव्यतात्वेन सम्बध्यते। तच्च प्राशस्त्यज्ञानं 'वायुर्वै क्षेपिष्ठा देवता' इत्याद्यर्थवादैर्जन्यते। ते ह्यर्थवादाः**

---

नकल्पनाप्रसङ्गात्। नित्यज्ञानस्य च वेदप्रामाण्याधीनसिद्धिकत्वेनान्योन्याश्रयत्वात्। सति वेदस्यापौरुषेयत्वेन प्रामाण्ये तद्बोधितस्य नित्यज्ञानवतः परमेश्वरस्य वेदकर्तृत्वम्। तत्कर्तृकत्वेन च वेदप्रामाण्यमिति। '**तस्यैतस्य महतो भूतस्य निश्वसितमेतत्**" इत्यादिश्रुतिरपि निश्वासवदप्रयत्नसिद्धत्वमवबोधयन्ती ईश्वरस्य कर्तृत्वं निवारयति। **साध्यमिति**। सर्वत्र व्यापारेऽभिहिते किंप्रयोजनकोऽयमिति प्रथमतः साध्याकांक्षायाः फलाकांक्षापरपर्यायायास्समुदयात् प्रथमं तस्य निर्देशः। **एकप्रत्ययेति। एकेन** 'त' इति प्रत्ययेन अंशद्वयविशिष्टेन उभयोर्भावनयोर्बोध्यत्वात् इत्यर्थः। **ननु** 'यजेत' इति तप्रत्ययेन भावनाया इवैकत्वस्याऽपि बोधनात् तस्या भाव्यत्वं कुतो न स्यात्? एवं कालादेरपीत्यत आह—**यद्यपीति। अयोग्यत्वादिति**। तेषां कृतिसाध्यत्वाभावेन कृतिसाध्यत्वापरपर्यायभाव्यत्वान्वयो न युज्यत इत्यर्थः।

**ननु** न भावनां प्रति लिङादिज्ञानस्य करणत्वं संभवति, करणत्वं हि उत्पादकत्वरूपं लोके दृष्टम्, नात्र भावनोत्पादकत्वं लिङ्ज्ञानस्य संभवति, तदनन्तरभावित्वात्तस्य, अत आह-**तस्य चेति**। विषयेन्द्रियसन्निकर्षस्य रूपादिज्ञाने यथा करणत्वमुत्पादकत्वरूपं, तथाऽत्र न संभवतीत्यर्थः। **अभावप्रसङ्गादिति**। एवं च तस्य नित्यत्वमौत्पत्तिकसूत्रोक्तं व्याहन्येतेति भावः। **कुठार इव छेदनमिति**। यथा कुठारः पुरुषसाध्यछेदनव्यापारं निर्वर्तयत् पुरुषस्य करणमित्युच्यते, एवं लिङादिज्ञानमपि शब्दभावनाभाव्यार्थभावनां निर्वर्त्तयन् शब्दभावनाकरणमित्युच्यत इत्यर्थः। एवं च न स्वोत्पादकत्वमत्र करणत्वं, किन्तु स्वभाव्यनिर्वर्तकत्वमेव पारिभाषिकं स्वकरणत्वमङ्गीक्रियत इति फलितम्।

**प्राशस्त्यज्ञानमिति**। कर्मेदं शीघ्रफलदत्वादतिप्रशस्तमिति कर्मगतप्राशस्त्यज्ञानमित्यर्थः। **इतिकर्त्तव्यतात्वेनेति**। यथा च फलसाधनीभूतयागादिरूपकरणापेक्षितमुपकारं जनयन्तः प्रयाजादयः फलभावनायामितिकर्त्तव्यतात्वेनाऽन्वयं लभन्ते, एवं प्रवृत्तिसाधनीभूतलिङादिज्ञानरूपकरणापेक्षितं प्रवृत्तिप्रतिबन्धकालस्यादिविघटनरूपमुपकारं जनयत्प्राशस्त्यज्ञानमपि शब्दभावनायामितिकर्त्तव्यतात्वेनाऽन्वयं प्राप्नोतीति भावः।

---

१ सा चांशत्रयम्।

**स्वार्थप्रतिपादने प्रयोजनम(१)लभमाना लक्षणया क्रतोः प्राशस्त्यं प्रतिपादयन्ति। स्वार्थमात्रपरत्वे आनर्थक्यप्रसङ्गात्। न चेष्टापत्तिः, अध्ययनविध्युपात्तत्वेनाऽनर्थक्यानुपपत्तेः। तथा हि—"स्वाध्यायोऽध्येतव्यः" इत्यध्ययनविधिः सकलस्य वेदस्याध्ययनकर्तव्यतां बोधयन् सर्वो वेदः प्रयोजनवदर्थपर्यवसायीति सूचयति, निरर्थकस्याऽध्ययनानुपपत्तेः।**

**स च वेदो विधिमन्त्रनामधेयनिषेधार्थवादात्मकः। तत्र विधिः प्रयोजनवदर्थविधानेनाऽर्थवान्। स चाऽप्राप्तमर्थं विधत्ते। यथा 'अग्निहोत्रं**

---

**स्वार्थप्रतिपादन इति**। स्वघटकपदशक्त्या यादृशोऽर्थोऽवगम्यते तत्प्रतिपादन इत्यर्थः। **प्रयोजनमलभमाना इति**। तदा तेषां भूतार्थमात्रकथनेन प्रवृत्तिविशेषाजनकत्वेन प्रयोजनानवाप्तेरित्यर्थः। **क्रतोः प्राशस्त्यमिति**। स्वसन्निहितविधिविहितकर्मगतं प्राशस्त्यमित्यर्थः। इदमुपलक्षणम्। **'बर्हिषि रजतं न देय'**मित्यादौ निषेधस्थले **'सोऽरोदीत्'** इत्याद्यर्थवादतो रजतदाननिन्दाया अपि प्रतीयमानत्वात्। **ननु** नाध्ययनविध्युपादानमात्रेणाऽर्थवादानां प्राशस्त्यलक्षकत्वं संभवति, अध्ययनविधिना हि नाऽर्थज्ञानोद्देशेनाध्ययनं विधीयते, तस्य लोकसिद्धत्वात्; नाऽप्यवघातादिवत् नियमार्थत्वेन, अनारभ्याधीतत्वादस्य क्रतूपस्थित्यभावात्, अव्यभिचरितक्रतुसम्बन्धाभावाच्च न जुह्वादिवत्क्रतूपस्थितिः; अतो विश्वजिन्न्यायेन स्वर्गफलार्थतैवाऽस्य वक्तव्या। एवं च अक्षरराशिग्रहणेनैव विध्युपपत्तावर्थज्ञानार्थत्वमेवास्य दूरापास्तमिति कुतः प्राशस्त्यलक्षणा, इत्यत आह—**तथा हीति**। **अयं भावः "स्वाध्यायोऽध्येतव्य"** इत्यत्र कर्मणि तव्यप्रत्ययो विहितः स्वाध्यायस्याऽध्ययनकर्मत्वं ब्रूते। तच्चतुर्विधम्-उत्पत्त्याप्तिविकृतिसंस्कृतिभेदात्। ऽकृते चाऽन्यस्याऽसम्भवात्संस्कारख्यं तदिति पर्यवस्यति। एवञ्च स्वाध्यायस्याऽध्ययनसंस्कारोऽत्र विधीयते। संस्कृतस्य स्वाध्यायस्योपयोगापेक्षायां न तावत् स्वर्गार्थत्वं कल्पयितुं युक्तम्; दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वात्, नाऽपि केवलार्थज्ञानार्थत्वम्; तस्य भारतादाविव लोकत एव सिद्धत्वात्, गृहीतपदपदार्थसंगतिकस्याऽऽपाततोऽर्थप्रतीतेर्जायमानत्वाच्च; अतः प्रमाणान्तराप्रमितप्रयोजनवदर्थज्ञानोद्देशेन स्वाध्यायो विनियुज्यत इत्यङ्गीकर्त्तव्यम्; एवं चाऽर्थवादस्याऽपि स्वध्यायत्वाविशेषात्तदध्ययनस्याऽपि फलवदर्थज्ञानार्थत्वमावश्यकमिति स्वशक्यार्थप्रतिपादने प्रयोजनाभावात् फलवत्प्राशस्त्यप्रतिपादकत्वं बलादायातमिति। **निरर्थकस्येति**। **"प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते"** इति न्यायेन सर्वस्याऽपि प्रेक्षावतः फलवत्येव प्रवृत्त्युदयादिति भावः।

एवं वेदस्य सामान्यतः प्रयोजनवत्त्वमुपपाद्य तद्वतस्य एकैकस्यापि भागस्य विशेषतः प्रयोजनवत्त्वमुपपादयिष्यन् प्रथमतो वेदं पञ्चधा विभजते-**स इति**। यः स्वाध्यायविध्यन्यथानुपपत्तिकल्पितेन विधिना फलवदर्थज्ञानोद्देशेन विनियुक्तः, स इत्यर्थः। एवं पञ्चधा वेदं विभज्य तत्र एकैकस्याऽपि भागस्य प्रयोजनवत्त्वं निरूप्य तावता ग्रन्थं परिसमापयिष्यन् प्रथमं प्रथमोद्दिष्टस्य विधिभागस्य प्रयोजनवत्त्वं निरूपयति-**तत्र विधिरिति**। **प्रयोजनवदर्थेति**। प्रयोजनं स्वर्गादिरूपं फलं, तद्वान् यागादिः, तद्विधानेनेत्यर्थः।

---

१ अनुपलभमाना।

**जुहुयात्स्वर्गकामः' इति विधिरप्राप्तं प्रयोजनवद्धोमं विधत्ते-अग्निहोत्रहोमेन स्वर्गं भावयेदिति।**

**यत्र तु कर्म प्रकारान्तरेण प्राप्तं, तत्र तदुद्देशेन गुणमात्र (१) विधानम्। यथा 'दध्ना जुहुयात्' इत्यत्र होमस्य 'अग्निहोत्रं जुहुयात' इत्यनेन प्राप्तत्वाद्धोमोद्देशेन दधिमात्रविधानम्—दध्ना होमं भावयेदिति।**

( विशिष्टविधिनिरूपणम् )

**यत्र तूभयमप्राप्तं तत्र विशिष्टं विधत्ते। तदुक्तम्—(२) 'न चेदन्येन शिष्टाः' इति। शिष्टा उपदिष्टा इत्यर्थः। यथा 'सोमेन यजेत' इत्यत्र सोमयागयोरप्राप्तत्वात्सोमविशिष्टयागविधानम् 'सोमवता यागेनेष्टं भावयेत्' इति। न चोभयविधाने वाक्यभेदः, विशिष्टस्यैकत्वात्।**

( मत्वर्थलक्षणानिरूपणम् )

**विशिष्टविधौ च मत्वर्थलक्षणा। सोमपदेन मत्वर्थो लक्ष्यते-सोमवतेति।**

---

**अप्राप्तं** प्रमाणान्तरेणाऽज्ञातम्। **अग्निहोत्रं जुहुयात्स्वर्गकाम इति।** यद्यपि नेदं उत्पत्तिवाक्यमग्निहोत्रहोमस्य, "अग्निहोत्रं जुहेति" इति वाक्यान्तरस्यैव तत्त्वाङ्गीकारात् तथाऽपि फलाविधेयत्वस्य चतुर्थे साधयिष्यमाणत्वात् अधिकारवाक्येऽपि फलोद्देशेन कर्मण एव विधानात् स्पष्टतया फलवत्त्वज्ञापनार्थमिदमुक्तम्।

**नचेदन्येनेति।** प्रथमाध्यायचतुर्थपादीयसूत्रैकदेशोऽयम्। **"तद्गुणास्तु विधीयेरन् अविभागाद्विधानार्थे न चेदन्येन शिष्टाः"** इति समग्रसूत्रम्। **इष्टं भावयेदिति। नन्वत्र** सोम-याग-भावनावाचिनामेव शब्दानां श्रवणात् इष्टवाचकपदाश्रवणादिष्टं भावयेदिति कथं बोधः इति चेत्-विधिश्रवणादेवेति ब्रूमः। विधिर्हि प्रवर्त्तनात्मकः स्वस्य प्रवर्त्तकत्वसिद्ध्यर्थं स्वविषयस्य यागादेरिष्टसाधनत्वमाक्षिपति, तद्यदि उत्पत्तिवाक्य एव फलविशेषः श्रूयेत तत्राऽऽक्षेपतः पूर्वमेव फलसम्बन्धोऽवगत इति न तत्राऽऽक्षेपकत्वम्, यत्र तु स न श्रूयते तत्र सामान्यत इष्टसाधनत्वमाक्षिप्यते। आक्षिप्ते च तस्मिन् फलविशेष अधिकारवाक्येन समर्प्यते। अतो युक्त एवोत्पत्तिवाक्ये इष्टं भावयेदिति बोधः। **ननु** यदि सोमस्य यागस्य चोभयोर्विधानं, तदा उभयत्र विधिव्यापारः कल्पनीयः, स च विध्यावृत्तिमन्तरा न संभवति, अतो "यागेन भावयेत्, सोमेन भावयेत्" इति वाक्यद्वयं कल्पनीयम्, ततश्च वाक्यभेदः स्फुट इत्याशङ्क्याऽऽह-**न चेति**। **विशिष्टस्यैकत्वादिति।** सोमविशिष्टो यागो विधीयत इत्युक्तौ विशेष्य एव विधिप्रवृत्तेः तस्य चैकत्वान्नानेकविधानकृतो वाक्यभेद इत्यर्थः। न च विधेर्विशेष्यभूतयागमात्रपर्यवसायित्वे "सोमेन" इति व्यर्थमिति वाच्यम्। तस्याऽर्थिकविशेषणविधिकल्पकत्वात्। **ननु** सोम-यागयोरुभयोरपि कारकत्वेन परस्परान्वयासंभवेन कथं वैशिष्ट्यमत आह— **विशिष्टविधाविति। सोमवतेति।** सोमशब्देन सोमविशिष्टो लक्षणयोच्यते। तस्य पार्ष्ठिको यागेन सहाऽभेदसम्बन्धः। सच यागः फलभावनायां करणम्। तदेतदाह-**सोमवतेति। नन्वत्र** लक्षणामन्तरा उपपत्तौ सत्यां किमर्थं गुरुभूता लक्षणाऽऽश्रीयते, अत

---

१ त्रं विधत्ते। २ जै. सू. १. ४. ९.

**न हि मत्वर्थलक्षणां विना सोमस्याऽन्वयः सम्भवति। यदि तावत्सोमयागयोरैकरूप्येण भावनायां करणत्वेनैवाऽन्वयः—'सोमेन यागेनेष्टं भावयेत्' इति, तत उभयविधाने वाक्यभेदः, सोमस्य यागवत्फलभावनाकरणत्वेन प्राधान्यापातश्च, यागार्थत्वानुपपत्तिश्च, (१)यागे द्रव्यानुपपत्तिश्च, प्रत्ययवाच्यफलभावनायाः समानपदोपात्तेन यागेन करणाकाङ्क्षानिवृत्तत्वेन भिन्नपदोपात्तस्य सोमस्य करणत्वेनाऽन्वयानुपपत्तिश्च स्यात्।**

**यदि च वैयधिकरण्येनान्वयः; तत्र न तावत् 'यागेन सोमम्' इत्यन्वयः, समानपदोपात्तत्वात्प्र(२)त्ययवाच्यफलभावनायां करणत्वेनाऽन्वितस्य यागस्य सोमकर्मकभावनान्वयानुपपत्तेः, यागस्य सोमार्थत्वा(३)पाताच्च। न चेष्टाप-**

---

आह-**न हीति**। सोमयागयोरुभयोरपि सामानाधिकरण्येनाऽन्वयोऽङ्गीक्रियते ?, वैयधिकरण्येन वा ?, नाऽऽद्य इत्याह-**यदि तावदिति**। **ऐकरूप्येण** इत्यस्य विवरणं करणत्वेनेति। **उभयविधाने** सोमस्य यागस्य चोभयोः पृथक्पृथग्विधाने। **ननु** अप्राप्तत्वाद्भावनाया अनेकविशिष्टभावनाविधानं सम्भवत्येव। उक्तं हि **वार्तिककृता-"अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः"** इति, अत आह—**सोमस्येति। फलभावनाकरणत्वेन** फलभाव्यकभावनायां करणत्वेन। **प्राधान्यापात इति**। यथा यागस्य साक्षात्फलं प्रति करणत्वं, तद्वत् सोमस्याऽप्यापत्त्या उभयोः प्राधान्यापात इत्यर्थः। ततश्च सोमस्य साक्षात्फलजनकत्वेनादृष्टार्थत्वाऽऽपत्त्या प्रतिनिधिर्न स्यादिति भावः। **यागार्थत्वानुपपत्तिरिति**। यागाङ्गत्वानुपपत्तिरित्यर्थः। **ननु** यागाङ्गत्वाभावेऽपि सोमयागयोः एकवाक्योपादानात् आरुण्यवत् परस्परसम्बन्धोऽस्तु, अत आह-**यागे द्रव्येति। "गोदोहनेन पशुकामस्य प्रणयेत्"**दित्यादौ फलार्थं विहितस्य गोदोहनस्य प्रसङ्गात्प्रणयनोपकारकत्वेऽपि यथा नित्यप्रयोगे न गोदोहनस्य प्राप्तिः, तद्वदत्र फलार्थं विहितस्य सोमस्य प्रसंगाद्यागोपकारकत्वेऽपि न तस्य नित्यप्रयोगे प्राप्तिःस्यादिति यागे द्रव्याभावः स्यादेवेति भावः। **ननु** नैतत्सम्भवति, यागविधिबलादेव द्रव्यप्राप्तेः, देवतोद्देश्यकद्रव्यत्यागो हि यागः। स च द्रव्यमन्तरा न सम्भवतीति यत्किंचित् द्रव्यमाक्षेपप्राप्तमेव; अत एव **"सर्वे द्रव्यविधयो नियमविधयः"**इत्यभियुक्तोक्तिस्संगच्छते। अतो न यागे द्रव्याभाव इत्यस्वरसादाह-**प्रत्ययेति**। यागस्य समानपदोपात्तत्वनिर्वाहाय भावनायाः प्रत्ययवाच्यत्वख्यापनम्।

एतावता सामानाधिकरण्येनाऽन्वयाभावमुपपाद्य वैयधिकरण्येनाऽपि अन्वयाभावमुपपादयति-**यदि चेति**। वैयधिकरण्येनाऽन्वये प्रकारद्वयमस्ति। यागस्य करणत्वं सोमस्योद्देश्यत्वमित्येकः। सोमस्य करणत्वं यागस्योद्देश्यत्वमित्यपरः। तत्राऽऽद्यं दूषयति-**तत्रेति। समानपदोपात्तत्वात्** एकपदोपात्तत्वात् 'यजेत' इत्येकेन पदेन प्रकृत्यंशेन यागस्य प्रत्ययांशेन च भावनाया बोधनादिति भावः। **ननु 'भूतं भव्यायोपदिश्यते'** इति न्यायेन सिद्धस्य सोमादेः फलभावनाकरणत्वेनाऽन्वये सति 'इतरस्तदर्थ'मितिन्यायेन यागस्य सोमार्थ-

---

१ यागीयद्रव्यत्वानुपपत्तिश्च। २ प्रत्ययवाच्यभावनाकरणत्वेन। ३ पत्तेश्च।

त्तिः, अदृष्टद्वयापत्तेः। न हि यागस्य सोमार्थत्वं दृष्टद्वारेण सम्भवति, व्रीहिष्ववघातेनेव यागेन सोमे कस्यचिद् दृष्टस्याऽजननात्। अतस्तेन ताव त्सोमे किञ्चिददृष्टं जननीयम्, प्रोक्षणेनेव व्रीहिषु।

तथा यागस्य सोमार्थत्वे फलभावनायां सोमस्य करणत्वेनाऽन्वयो वक्तव्यः। भावनाकरणत्वं च भावनाभाव्यनिर्वर्तकत्वेनेत्युक्तम्। न च सोमोऽदृष्टमन्तरेण फलं जनयितुं समर्थः, 'ग्रहैर्जुहोति' इति वाक्यविहितहोमेन तस्य भस्मीभावात्। अतोऽदृष्टद्वयापातान्न यागस्य सोमार्थत्वमिति न 'यागेन सोमं भावयेत्' इत्यन्वयः सम्भवति। करणत्वेनोपस्थितस्य सोमस्य साध्यत्वेनान्वयानुपपत्तेश्च।

अथ 'सोमेन यागं भावयेत्' इत्यन्वयः; तत्र यद्यपि सोमस्य करणत्वेन यागार्थत्वाद्यागनिर्वृत्तिर्दृष्टमेव प्रयोजनं लभ्यते इति नाऽदृष्टद्वयापत्तिः; नाऽपि करणत्वेनोपस्थितस्य सोमस्य साध्यत्वान्वयानुपपत्तिः; करणत्वेनैवान्वयात्, तथाऽप्यप्राप्तत्वाद्भावनाकरणत्वेनाऽन्वितस्य यागस्य साध्यत्वेनाऽन्वयानुपपत्तिस्तदवस्थैव।

---

त्वेऽपि न क्षतिरित्याशङ्क्याह—**न चेष्टापत्तिरिति**। **अदृष्टद्वयापत्तेरिति**। यागादेकमदृष्टं, सोमादेकमदृष्टमित्यदृष्टद्वयाङ्गीकरणमापतेदित्यर्थः। अदृष्टद्वयापत्तिं विशदयति—**नहीति**। भन्वग्निहोत्रहोमस्य दृष्टविधया दधिनिष्ठकरणतासम्पादकत्ववत् अत्रापि यागस्य दृष्टविधयैव सोमनिष्ठकरणतासम्पादकत्वमिति कथमदृष्टद्वयापातः? अत आह—**व्रीहिष्विति**। यथा व्रीहिष्ववघातेन दृष्टं वितुषीभावरूपं प्रयोजनं सम्पाद्यते, तद्वत् न किंचिदपि दृष्टमत्र प्रयोजनमित्यर्थः। अत्र च सोमनिष्ठकरणतासम्पादकत्वं यागस्य सोमावान्तरव्यापारत्वेन वा तज्जन्यत्वेन वा?, आद्ये यागस्याऽपि फलजनकत्वावश्यम्भवात् तस्य चाऽपूर्वमन्तरेणानुपपत्तेः अपूर्वकल्पनापत्तिः। द्वितीये यागानुष्ठानस्य निष्फलत्वापत्त्या तत्परिहारार्थं फलवत्त्वे कल्पनीये अदृष्टकल्पनाप्रसक्तिः, दृष्टान्ते तु अन्यार्थं विहितस्यैव होमस्याऽत्र जन्यत्वमात्रं कल्प्यत इति नाऽदृष्टकल्पनापत्तिरिति वैधर्म्यमिति भावः। **अत इति**। दृष्टफलाजननाददृष्टस्याऽप्यकल्पने संस्कार्यत्वस्यैवाऽसिद्धेरित्यर्थः। अदृष्टान्तरापातं दर्शयति- **तथेति**। यागेन सोमं भावयेदित्यन्वये सोमस्य संस्कार्यत्वावगमात् संस्कृतस्य च उपयोगावश्यम्भावेन फल एव उपयोगो वाच्यः, स च भावनाकरणत्वापरपर्याय इति भावः। **ग्रहैर्जुहोतीति**। अत्र ग्रहशब्दः गृह्यतेऽस्मिन्निति व्युत्पत्या सोमरसाधारभूत उलूखलाकारः पात्रविशेषः इति **मिश्राः**। **राणके** तु कर्मव्युत्पत्त्या ग्रहपदेन तादृशोलूखलाकारेषु पात्रेषु गृहीतो रस एवाऽभिधीयत इत्युक्तम्। **तस्य** सोमस्य। **भस्मीभावादिति**। **"यदाहवनीये जुह्वति"** इत्यनारभ्याधीतवाक्येन होमसामान्यस्याहवनीयाधिकरणत्वविधानेनाग्नौ पतितस्य भस्मीभावावश्यम्भावादिति भावः॥ **करणत्वेनेति**। तृतीयान्तपदबोध्यत्वेन करणत्वमेव प्रतीयते, न साध्यत्वबोधकद्वितीयादिकमस्ति, लक्षणया तु कर्मत्वं वाच्यम्, तच्च न युक्तमित्याशयः।

वैयधिकरण्येनान्वये पक्षान्तरमाशंकते—**अथेति**। अस्मिन् पक्षे ऽदृष्टद्वयाभावं दर्शयति—**तत्र यद्यपीति**। यद्यपि दोषद्वयं न संभवति, तथापि सोमेन यजेतेत्यत्र श्रूयमाणाया भावनाया निरवच्छिन्नाया विधेयत्वासंभवात् धात्वर्थविशिष्टत्वेनैव विधेयत्वमङ्गीकर्तव्य-

( भावनायां यागस्य सम्बन्धमात्रनिरूपणं, तत्खण्डञ्च )

**ननु यजेतेत्यत्र यागस्य न करणत्वेन नाऽपि साध्यत्वेनोपस्थितिः, तद्वाचकतृतीयाद्यभावात्, किन्तु भावनायां यागसम्बन्धमात्रं प्रतीयते। यागस्य च भावनासम्बन्धः करणत्वेन साध्यत्वेन च सम्भवति। तत्र करणत्वांशमादाय फलसम्बन्धः साध्यत्वांशमादाय गुणसम्बन्धश्च स्यात्, इति चेत्-मैवम्। यद्यपि(१) भावनायां यागस्य सम्बन्धमात्रं प्रतीयते तथाऽपि करणत्वेनोपस्थितिदशायां न साध्यत्वेनोपस्थितिः (२)सम्भवति विरोधात् (३) (विरुद्धत्रिकद्वयापत्तेश्च।) तदवश्यं 'यागेन स्वर्गं भावयेत्' इति करणत्वेनान्वये सति पश्चात् 'सोमेन यागं भावयेत्' इति साध्यत्वेनान्वयो वक्तव्यः। ततश्च वाक्यभेदः। न च प्रत्ययाभिहितभावनास्वरूपे यागस्वरूपमात्रमन्वेतीति वक्तुं युक्तम्, कारकाणामेव क्रियान्वयात्। तत्सिद्धं सोमस्य न सामानाधिकरण्येन वैयधिकरण्येन वाऽन्वयः सम्भवतीति।**

( सोमस्येतिकर्तव्यतात्वेनाऽन्वयनिरूपणम्, तत्खण्डनञ्च )

**ननु-यजेतेत्यत्र प्रत्ययाभिहितभावनायाः करणाकाङ्क्षायां यथा यागः करणत्वेनान्वेति तथेतिकर्तव्यताकाङ्क्षायां सोमस्येतिकर्तव्यतात्वेन भावनायामे-**

---

मिति तत्र करणत्वेनान्वितस्य पुनः सोमकर्मकभावनायां अन्वयानुपपत्तिस्तदवस्थैवेत्याह-**तथापीति**।

इदानीं धात्वर्थस्य भावनायां तन्त्रसम्बन्धमङ्गीकृत्य पूर्वपक्षी स्वाभीष्टं साधयितुमुपक्रमते—**नन्वित्यादिना**। आदिपदेन द्वितीया ग्राह्या। **यागसम्बन्धमात्रमिति**। पदश्रुत्येति शेषः। **विरोधादिति**। साध्यस्य फलादेः प्रयोजनरूपत्वात् प्राधान्यम्। प्राधान्यस्य कृत्युद्देश्यत्वं विनाऽनुपपत्तेः उद्देश्यत्वापादकत्वम्। अप्राप्तस्य चोद्देष्टुमशक्यत्वात् प्राप्तकथनरूपानुवादापादकता। साधनस्य तु साध्यार्थत्वेन परार्थत्वात् शेषत्वापरपर्यायं गुणत्वम्। गुणत्वस्य शेषिपारतन्त्र्यलक्षणोपादेयत्वापादकत्वम्। उपादेयत्वस्य च विध्यधीनत्वात् विधेयतापादकतेति प्राधान्यादित्रिकं गुणत्वादित्रिकेण विरुद्धम्। तदेकत्र न समावेशमर्हतीति भावः। साध्यत्वस्य प्रमाणान्तरज्ञातत्वव्याप्यत्वेन विधेयत्वस्य च प्रमाणान्तराज्ञातत्वव्याप्यत्वेन एकस्मिन् युगपत् ज्ञातत्वमज्ञातत्वं च न संभवतीत्यर्थः। **विरुद्धत्रिकद्वयापत्तेश्चेति**। उद्देश्यत्वं, अनुवाद्यत्वं, प्रधानत्वं चेति त्रिकं साध्यनिष्ठम्; उपादेयत्वं, विधेयत्वम्, गुणत्वं चेति त्रिकं साधननिष्ठम्; यदि यागस्य युगपत् करणत्वं साध्यत्वं चोच्यते, तदा परस्परविरुद्धमिदं त्रिकद्वयमेकस्मिन् यागे आपद्येतेत्यर्थः। **वाक्यभेद इति**। यागेनेष्टं भावयेत्, सोमेन यागं भावयेदित्येवं विध्यावृत्तिलक्षण इत्यर्थः। स्वरूपान्वयोऽपि न सम्भवतीत्याह—**न चेति**।

**ननु** माऽस्तु भावनायां साध्यत्वेन साधनत्वेन वाऽन्वयः सोमस्य; इतिकर्त्तव्यतात्वेन तु भवत्वन्वयः, तदानीं नैवोक्तदोषापत्तिः इत्याशंकते—**नन्विति**। निराकरोति—

---

१ भावनाया। २ सम्बन्धद्वयविरोधात्।

३ एतच्चिह्नान्तर्गतो भागः ग॰ पुस्तके नास्ति।

वान्वयोऽस्तु, (१)कृतं मत्वर्थलक्षणया इति चेत्-न, सोमेनेति तृतीयया करणत्ववाचिन्या सोमस्येतिकर्तव्यतात्वानभिधानात्। तत्र यदीतिकर्तव्यतात्वं लक्षणयोच्येत, ततो वरं सोमपद एव प्रकृतिभूते मत्वर्थलक्षणा। '(२)गुणे त्वन्याय्यकल्पने'ति न्यायात्।

अथ (३)'वेदो वा प्रायदर्शनात्' इत्यधिकरणोक्तासंजातविरोधित्वन्याये-

---

नेति। करणत्ववाचिन्येति। **'कर्तृकरणयोस्तृतीया'** इति सूत्रेण तथैवानुशासनात् व्यवहाराच्चेति भावः। मास्तु शक्तिः, लक्षणा स्वीक्रियते, अत आह-**तत्रेति**। तृतीयायामित्यर्थः। **गुणे त्वन्याय्येति**। सूत्रस्यैकदेशोऽयं नवमतृतीयपञ्चमस्थस्य **'विप्रतिपत्तौ विकल्पः स्यात् गुणे त्वन्याय्यकल्पनैकदेशत्वात्"** इति सूत्रम्। तत्र हि पशावग्नीषोमीये श्रुतयोः पशुकण्ठगतपाशविमोचनार्थयोः **'अदितिः पाशं प्रमुमोक्तु'** **"अदितिः पाशान् प्रमुमोक्तु"** इत्येकवचनबहुवचनान्तमन्त्रयोः मध्ये बहुवचनान्तमन्त्रस्य प्रकरण एव निवेशः? उत यत्राऽनेकपशुकरणकयागस्थले पाशानेकत्वं तत्र मन्त्रोऽयमुत्कृष्यतामिति सन्दिह्य प्रकृते पाशबहुत्वाभावात् बहुवचनान्तमन्त्रस्य एकस्मिन्नसमवायादुत्कर्षं पूर्वपक्षयित्वा—**"सत्वप्रधानानि नामानी"**ति निरुक्तस्मृत्या लिङ्गसंख्याद्यपेक्षया प्रातिपदिकार्थस्य प्राधान्यावगतेः न गुणभूतसंख्यानुरोधेन प्रधानस्योत्कर्षो युक्तः; किन्तु बहुवचनस्यैवैकत्वे लक्षणामङ्गीकृत्य प्रकृत एव निवेश इति सिद्धान्तितम्। तथा च सूत्रस्याऽयमर्थः-विमोचनीयपाशस्यैकत्वात् मन्त्रस्य पाशबहुत्वाभिधायित्वाच्च **विप्रतिपत्तौ** विरोधे सति न मन्त्र उत्क्रष्टव्यः; किन्तु एकवचनान्तमन्त्रेणाऽस्य **विकल्पः स्यात्** उभयोरपि पाशविशिष्टकर्मप्रतिपादकत्वेन **समत्वात्, गुणे तु** बहुवचने तु **अन्याय्यकल्पना** एकत्वे लक्षणाकल्पना **एकदेशत्वात्** बहुवचनस्यैकदेशत्वात्, ततश्च एकदेशबहुवचनानुरोधेन नोत्कर्ष इति। एवं च तन्न्यायेनाऽत्र **"प्रकृतिप्रत्ययौ"** विति स्मृत्या प्रातिपदिकार्थापेक्षया विभक्त्यर्थस्य प्राधान्यावगमात् न विभक्तौ प्रधानभूतायामितिकर्त्तव्यतात्वलक्षणा; किन्तु गुणभूतप्रातिपदिक एव मत्वर्थलक्षणा युक्तेत्याशयः। उभयोः प्रत्ययार्थत्वाविशेषेऽपि दृष्टान्ते संख्यायाः प्रातिपदिकार्थापेक्षया गुणत्वं, दार्ष्टान्तिके कारकस्य प्रातिपदिकार्थापेक्षया प्राधान्यमिति विवेक्तव्यम्।

पुनः न्यायान्तरावलम्बेन पूर्वपक्षी प्रत्यवतिष्ठते—**अथेति**। **'वेदो वा प्रायदर्शना'** दिति तृतीयाध्यायतृतीयपादीयप्रथमाधिकरणस्थसिद्धान्तसूत्रमिदम्। **"प्रजापतिरकामयत प्रजायेयेति स तपोऽतप्यत। तस्मात्तेपानात्त्रयो देवा अजायन्त-अग्निर्वायुरादित्यः। ते तपोऽतप्यन्त। तेभ्यस्तेपानेभ्यस्त्रयो वेदा अजायन्त-अग्नेरृग्वेदो वायोर्यजुर्वेद आदित्यात् सामवेदः। तस्माद्यत्किञ्चिदृचा क्रियते तदुच्चैः, यद्यजुषा, तदुपांशु, यत्साम्ना तदुच्चैः"**, इति श्रुतम्। तत्रोपक्रमे ऋग्वेदादय उपसंहारे ऋगादयश्च श्रूयन्ते। तदत्र विधीयमान उच्चैस्त्वादिः ऋगादिधर्मः, उत तत्तद्वेदधर्म इति सन्दिह्य, विध्युद्देशे ऋगादिपदानामेव श्रवणात् तदनुरोधेनैवाऽर्थवादस्थो वेदशब्दो नेय इति अर्थवादस्थे वेदपदे ऋङ्मात्रलक्षणामङ्गीकृत्य

---

१ किंम०　　२ ९-३-५　　३ ३-३-१

नाऽन्त्ये प्रत्यय एव लक्षणेति चेत्(१), तथाऽपि सोमस्येतिकर्तव्यतात्वेनाऽन्वयानुपपत्तिः। सिद्धस्य वस्तुन इतिकर्तव्यतात्वाभावात्, क्रियाया एवेतिकर्तव्यतात्वात्, द्रव्यस्य केवलमङ्गत्वात्। अत एवेतिकर्तव्यतात्वाभावात् द्रव्यस्य प्रकरणा(२)दग्रहणम्। यथाऽऽहुः—

नाऽवान्तरक्रियायोगादृते वाक्योपकल्पितात्।
गुणद्रव्ये कथंभावैर्गृह्णन्ति प्रकृताः क्रियाः॥ इति।

तदेतदग्रे वक्ष्यामः।

किंच 'सोमेन यजेते'ति हि यागस्योत्पत्तिवाक्यं, नाऽधिकारवाक्यम्। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यस्याऽधिकारवाक्यत्वात्। उत्पत्तिवाक्ये च नेतिकर्तव्यताकाङ्क्षा, इष्टविशेषाकाङ्क्षाकलुषितत्वेनेतिकर्तव्यताकाङ्क्षाया विस्पष्टमनुत्थानात्। तत्सिद्धं सोमस्य नेतिकर्तव्यतात्वेन भावनायामन्वयः। तस्माद्विशिष्टविधावन्वयानुपपत्त्याऽवश्यं मत्वर्थलक्षणा वाच्येति।

नन्वेवमपि 'सोमेन यजेते'त्यत्र न विशिष्टविधानम्, गौरवात्, मत्वर्थलक्षणा(३)पाताच्च; किं तु "दध्ना जुहोती"तिवद्गुणमात्रविधानमस्तु, विधिश-

ऋगाद्युद्देशेनैव उच्चैस्त्वादयो विधीयन्त इति पूर्वपक्षयित्वा–अर्थवादस्थस्याऽपि उपक्रमस्थत्वेन असञ्जातविरोधित्वेन च वेदशब्दस्यैव प्राबल्यं; विध्युद्देशगता अपि जघन्यत्वेन सञ्जातविरोधित्वेन च ऋगादिशब्दा दुर्बला इति उपक्रमानुरोधेनैवोपसंहारस्यान्यथानयनमङ्गीकृत्य ऋग्वेदाद्युद्देशेन धर्मा विधीयन्ते इति सिद्धान्तितम्। तन्न्यायमत्राऽतिदिशति—**असञ्जातविरोधित्वन्यायेनेति**। असञ्जातः विरोधी यस्य सोऽसञ्जातविरोधी, तत्त्वमसञ्जातविरोधित्वम्, तन्न्यायेनेत्यर्थः। **लक्षणेति**। इतिकर्तव्यतात्व इति शेषः। **क्रियाया एवेतिकर्तव्यतात्वादिति**। कर्तव्यनिष्ठप्रकारविशेषस्यैवेतिकर्तव्यतापदार्थत्वेन कर्तव्यत्वस्य च क्रियानिष्ठत्वेन तस्या एव तत्त्वौचित्यादिति भावः। **नावेति**। द्रव्यक्रिययोरेकवाक्योपादानरूपसमभिव्याहारान्यथानुपपत्त्या कल्पितात् अवान्तरव्यापाराद्विना गुणद्रव्ययोः प्रकृताभिः क्रियाभिः इतिकर्तव्यतात्वेन ग्रहणं न सम्भवतीत्यर्थः। **अग्रे** प्रकरणनिरूपणावसरे।

**ननु** सिद्धस्य सोमस्य साक्षादितिकर्तव्यतात्वाभावेऽपि तत्साध्यव्यापारद्वाराऽस्तु तत्, अत एव द्रव्यस्याऽपि क्वचिदितिकर्तव्यतात्वाभिधानं सङ्गच्छते, अत आह—**किञ्चेति**। उत्पत्त्यधिकारवाक्ययोः स्वरूपं विवेचयिष्यति ग्रन्थकृदेव। यद्यपि विधेः प्रवर्तकत्वान्यथानुपपत्त्या प्रवृत्तिविषयीभूतयागादेरिष्टसाधनत्वमाक्षिप्तमेवेति सामान्यतो ज्ञातमेव यत्किञ्चिदिष्टम्, तथाऽप्याकांक्षायाः स्वर्गादिरूपेष्टविशेषान्वयं यावदनुवृत्तेः सत्यां च तस्यामाकांक्षान्तरानुदयान्न सोमादेरितिकर्तव्यतात्वेनाऽन्वय इत्यभिसन्धिमानाह—**इष्टविशेषेति**। अयमेवाऽर्थः विस्पष्टपदेनाऽपि स्फोरितः। उपसंहरति—**तत्सिद्धमिति**।

इदानीं **सोमेन यजेते**त्यस्य गुणविधित्वमाशंकते—**नन्विति**। **गौरवादिति**।

१ चेत् न,　२ अग्रहः　३ लक्षणदोषाच्च

क्तेर्गुणे संक्रमात्। यथाऽऽहुः—

सर्वत्राऽऽख्यातसंबद्धे श्रूयमाणे पदान्तरे।
विधिशक्त्युपसंक्रान्तेः स्याद्धातोरनुवादता॥ इति।

न च यागस्याऽप्राप्तत्वान्न तदुद्देशेन सोमविधानमिति वाच्यम्। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यनेन यागस्य प्राप्तत्वात्। न चास्याऽधिकारविधित्वेन नोत्पत्तिविधित्वमिति वाच्यम्। 'उद्भिदा यजेत पशुकामः' इतिवदेकस्यैवोभयविधित्वोपपत्तेः। एवं च 'सोमेन यजेते'त्यत्र न मत्वर्थलक्षणा। यदि ह्यत्र विशिष्टविधानं स्यात् तदाऽन्वयानुपपत्त्या मत्वर्थलक्षणा स्यात्। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्र तु यागविधाने क्वचिन्न मत्वर्थलक्षणा। न तावदेतस्मिन् वाक्ये। ज्योतिष्टोमेन यागेन स्वर्गं भावयेदिति, सामानाधिकरण्येनैव(१) नामपदस्यान्वयात्। नापि 'सोमेन यजेते'त्यत्र, यागोद्देशेन सोमविधानात्-सोमेन यागं भावयेदिति।

ननु अनुवादेऽप्यस्ति मत्वर्थलक्षणा। अतएवोक्तम्—

विधाने वानुवादे वा यागः करणमिष्यते।
तत्समीपे तृतीयान्तस्तद्वाचित्वं न मुञ्चति॥ इति।

अतश्च विशिष्टविधाविव गुणविधावप्यस्त्येव मत्वर्थलक्षणेति (२) चेत्-

( गुणविधौ मत्वर्थलक्षणाभावनिरूपणम् )

मैवम्। गुणान्वयानुपपत्त्या हि मत्वर्थलक्षणाऽङ्गीक्रियते। यदा तु भावनायां धात्वर्थस्य करणत्वेनाऽन्वयः तदाऽन्वयानुपपत्त्या सङ्गीकर्तव्या। गुणविधौ च न धात्वर्थस्य करणत्वेनाऽन्वयः, मानाभावात्। न हि "दध्ना जुहोती"त्यत्र

---

केवलगुणमात्रविधानापेक्षया विशिष्टविधाने विशिष्टे विधिव्यापारकल्पनरूपं गौरवं वैशिष्ट्यस्याऽव्युत्पन्नत्वेन तदर्थं मत्वर्थलक्षणा च आपद्येतेत्यर्थः। **सर्वत्रेति**। आख्यातपदेनाऽत्राऽऽख्यातान्तं गृह्यते। **तेन संबद्धे** तेन सह एकवाक्योपात्ते **पदान्तरे** दध्यादिरूपे **विधिशक्तेः** विधायकत्वरूपायाः संक्रान्तत्वात् धातोरनुवादकत्वमेवेत्यर्थः। यागस्याऽप्राप्तत्वेन गुणविधानासंभवमाशंकते—**न चेति**। गुणमात्रविधाने पूर्वोक्तदोषद्वयाभावं प्रतिपादयति—**एवञ्चेति**। **अन्वयानुपपत्तिरिति**। सोमस्येति शेषः। **एतस्मिन् वाक्ये** ज्योतिष्टोमवाक्ये।

**ननु 'सोमेन यजेते'** त्यस्य गुणविधित्वाङ्गीकारेऽपि न मत्वर्थलक्षणादोषान्मुच्यामह इति यदा भक्षितेऽपि लशुने न रोगशान्तिः, तदा विशिष्टविध्यङ्गीकरणमेव वरमित्याशयवानाशङ्कते-**नन्विति**। **उक्तमिति**। उद्भिदधिकरणवार्त्तिक इति शेषः। कारिका गतार्था। लक्षणायां तात्पर्यानुपपत्तिरन्वयानुपपत्तिर्वा बीजम्। नाऽत्र तात्पर्यग्राहकं प्रमाणमस्ति। नाऽप्यन्वयानुपपत्तिः। गुणस्य करणत्वेनैवान्वयसंभवादित्याह-**गुणान्वयेति**। प्रमाणाभावमुपपादयति-**नहीति**। **ननु** तवाऽप्युत्पत्तिवाक्यादौ धात्वर्थस्य करण-

---

१ ज्योतिष्टोमपदस्य २ चेद्, न,

होमस्य करणत्वं श्रूयते, तद्वाचकतृतीयाद्यभावात्। कल्प्यत इतिचेन्न; गुणस्य (१) तत्र विधित्सितत्वेन साध्याकाङ्क्षायां साध्यत्वकल्पनाया एवोचितत्वात्-दध्ना होमं भावयेदिति। न चाऽयमस्ति नियमो भावनायां धात्वर्थस्य करणत्वेनैवाऽन्वयो न प्रकारान्तरेणेति; षष्ठाद्यपूर्वपक्षानुत्थानापत्तेः। षष्ठाद्ये हि "यजेत स्वर्गकाम" इत्यादौ(२)प्रत्ययवाच्यायां वक्ष्यमाणार्थभावनायां समानपदश्रुत्या यागस्य भाव्यत्वमाशङ्क्याऽपुरुषार्थत्वेन परिहृतम्। यदि च धात्वर्थस्य करणत्वेनैव भावनायामन्वयः तदा भाव्यत्वशङ्कैव नोदेतीति व्यर्थं षष्ठाद्यमधिकरणमापद्येत।

किं च(३) वाजपेयाधिकरणे तन्त्रसम्बन्ध आशङ्क्य परिहृतः। धात्वर्थस्य करणत्वेनैवाऽन्वये तन्त्रसंबन्धशङ्कैव न स्यात्। तन्त्रसंबन्धशङ्कापरिहारौ च तत्र व्याख्यातौ।

---

त्वेनाऽन्वये किं मानम्? नहि तत्रापि तृतीया श्रूयते, अथ तृतीयाश्रवणाभावेऽपि अर्थापत्त्या "**प्रकृतिप्रत्ययौ प्रत्ययार्थ**"मिति स्मृत्या च धातुनैव लक्ष्यत इति कल्प्यत इत्युच्येत, तथैव ममापीऽत्याशङ्कते-**कल्प्यत इतीति**। **उचितत्वादिति**। अन्यथा अनाकाङ्क्षितकल्पनारूपो दोष आपद्येतेति भावः। कल्पितमर्थतो ऽनुवदति-**दध्नेति**। **नन्वेवं** भावार्थाधिकरणविरोधः, तत्र धात्वर्थस्य भावनायां करणत्वेनान्वयस्यैव सिद्धान्तितत्वात् इत्यत आह-**नचाऽयमिति**। **षष्ठेति**। षष्ठाध्यायस्य प्रथमाधिकरणीयपूर्वपक्षेत्यर्थः। **षष्ठाद्य इति**। अधिकरण इति शेषः। **वक्ष्यमाणे**त्यतः पूर्वं भावनानिरूपणावसरे इति शेषपूरणम्। **अपुरुषार्थत्वेनेति**। साक्षादिष्टे इष्टसाधन एव वा पुरुषस्य प्रवृत्त्युदयात् यागादेः द्रव्यव्ययायाससाध्यत्वेन स्वयमनिष्टत्वात् पुत्रपश्वादिवद्वा इष्टसाधनत्वेन प्रमाणान्तरेणाऽज्ञातत्वाच्च। यद्यपि यत्नात्मिकायां भावनायां भाव्यो याग एव, न तु स्वर्गादिः, यत्नेन हि याग एव साध्यते, यागानुकूलत्वात् यत्नस्य। साधिते च यागे स्वर्गो भवति। न तत्सिध्यर्थं यत्नान्तरमस्ति। तथापि नासौ यत्नं प्रत्युद्देश्यः अपुरुषार्थत्वात्। अतश्च यागानुकूलयत्नात्मिकायामपि भावनायां उद्देश्यतारूपभाव्यत्वं स्वर्गस्यैव। यथा वेतनकामः पचेत् इत्यत्र पाकानुकूलयत्नात्मिकायां भावनायां वेतनस्यैवोद्देश्यत्वं तद्वत् इति भावः।

**ननु** षष्ठाद्याधिकरणस्य न धात्वर्थगतकरणत्वनिराकरणे तात्पर्यम्। किन्तु स्वर्गादेः पुरुषार्थस्य भाव्यत्वबोधन एव, अत एव "**स्वर्गकामस्य यागकर्मोपदेशः स्यात्; अतः स्वर्गः प्रधानतः, कर्म गुणतः**" इति **भाष्यम्** "**पुरुषार्थस्यैव भाव्यत्वम् विधिश्रुतिबलादध्यवसीयते**" इति **शास्त्रदीपिका** च संगच्छते। एवञ्च तावन्मात्रेण चरितार्थस्य न तस्य वैयर्थ्यम्, अत आह-**किञ्चेति**। **वाजपेयाधिकरण इति**। "**वाजपेयेन स्वाराज्यकामो यजेते**"ति वाक्यमुदाहृत्य यत्र विचारितं, तदधिकरणे प्रथमचतुर्थषष्ठ इत्यर्थः। **तन्त्रसम्बन्धः**। धात्वर्थस्य तन्त्रेण फलेन गुणेन च संबन्धः। **तत्र** वाजपेयाधिकरणे। **ननु** मन्दविषन्यायेनोत्थिताया आशङ्कायाः स्वल्पाया

---

१ स्यात्र २ प्रत्ययवाच्यवक्ष्यमाणार्थभावनायां। ३ १. ४. ६.

किंच धात्वर्थस्य न करणत्वेनैवाऽन्वयः (१)गुणकामाधिकरणे आश्रयत्वेन धात्वर्थान्वयस्योक्तत्वात्। तथाहि-'दध्नेन्द्रियकामस्य जुहुयादि'त्यत्र न तावद्धोमो विधीयते, तस्य वचनान्तरेण विहितत्वात्। नापि होमस्य फलसम्बन्धः, गुणपदानर्थक्यापत्तेः। नापि (२) गुणसम्बन्धः फलपदानर्थक्यापत्तेः। (३) नाऽप्युभयसम्बन्धं विधत्ते। प्राप्ते कर्मण्यनेकविधाने वाक्यभेदापत्तेः। यदाहुः—

प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः॥ इति।

अत्र च कर्मपदवत् गुणेत्युपलक्षणम्। एकोद्देशेनानेकविधाने वाक्यभेदात्। अतएव (४) ग्रहैकत्वाधिकरणे "ग्रहं संमार्ष्टी"त्यत्र ग्रहोद्देशेन (५)एकत्वसंमार्गयोर्विधाने वाक्यभेदात् ग्रहैकत्वमविवक्षितमित्युक्तम्।

(६) रेवत्यधिकरणे च 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत', इत्यत्र वारवन्तीयस्य रेवतीसंबन्धे अग्निष्टोमसामसम्बन्धे फलसम्बन्धे च विधीयमाने वाक्यभेदाद्भावनोपसर्जनं भावना-

---

अपि निराकरणेन तदप्यधिकरणं प्रयोजनवत् भविष्यति, इत्यत आह—**किञ्चेति**। **वचनान्तरेण** अग्निहोत्रं जुहुयादित्यनेन। **प्राप्ते कर्मणीति**। **अयमत्र वार्त्तिकाशयः**-भावनैव सर्वत्र प्रधानभूता, तत्रैव च सर्वकारकाणामन्वयः इत्युक्तम्—

**"भावनैव हि वाक्यार्थः सर्वत्राख्यातवत्तया।**
**अनेकगुणजात्यादिकारकार्थानुरञ्जिता"॥**

इत्यादिना। सा यत्राऽप्राप्ता तत्र तस्या एव विधेयत्वेन तत्र च सर्वेषां कारकाणां वैशिष्ट्यसंभवेन अनेककारकविशिष्टा एका भावना विनैव वाक्यभेदादिकमेकेन विधिव्यापारेण विधातुं शक्यते। यत्र च सा प्राप्ता तत्र पुनः तस्या विधेयत्वासंभवात्कारकाणामेव च विधेयत्वात्तेषां परस्परं वैशिष्ट्याभावात् पृथक् पृथक् विधिव्यापारस्याऽभ्युपगमनीयत्वेन विध्यावृत्तिलक्षणो वाक्यभेदः प्रसज्यत इति नाऽनेकगुणविधानं संभवतीति। **एकयत्नतः** एकेन विधिव्यापारेण। **कर्मपदवदिति**। यथा कर्मपदं प्राप्तमात्रोपलक्षकं एवं गुणपदमपि विधेयमात्रोपलक्षकमित्यर्थः। फलितमाह—**एकेति**। **अत एव** कर्मपदस्योपलक्षणत्वादेव। **ग्रहं सम्मार्ष्टीति**। सोमावसिक्तं पात्रं दशापवित्राख्येन वासःखण्डेन शोधयतीत्यर्थो **मिश्रमते**। **राणकमते तु**-धारातः पात्रे सोमरसस्य ग्रहणकाले पात्रस्य बहिर्लग्नानां विप्रुषां प्रोञ्छनं कुर्यादित्यर्थः। पात्रवाचकत्वमेव युक्ततरं मन्यामहे। **ग्रहोद्देशेन** ग्रहैर्जुहोतीतिवाक्यप्राप्तग्रहोद्देशेन। **ग्रहैकत्वं** ग्रहगतमेकत्वम्।

गुणपदस्योपलक्षणत्वे फलमाह-**एतस्यैवेति**। **इयमत्र स्थितिः**। **"त्रिवृदग्निष्टुदग्निष्टोमः'** इत्यनेन प्रथमं त्रिवृत्स्तोमयुक्तः अग्निष्टोमसंस्थाकः अग्निष्टुन्नामको यागो विहितः। तस्य **"तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो**

---

१ २. २. ११. २ गुणसम्बन्धं विधत्ते। ३ नाऽप्युभयसम्बन्धः,
४ ३. १. ७ ५ एकत्वसम्मार्गविधौ. ६ २. २. १२,

न्तरं विधीयते इत्युक्तम् । तस्मात्प्राप्ते होमे नोभयविधानं संभवति ।

नाऽपि होमान्तरं विधीयते, (१)गौरवात्, प्रकृतहानाप्रकृतकल्पनाप्रसङ्गात्, मत्वर्थलक्षणाप्रसङ्गाच्च । नाऽपि दध्येव केवलं करणत्वेन विधीयते इति युक्तम् । केवलस्य व्यापारानाविष्टस्य करणत्वानुपपत्तेः, कर्तृव्यापारव्याप्यत्वनियमात्करणत्वस्य । किं तर्हि विधीयते इति चेत्, दध्नेति तृतीययोपात्तं दधिक-

यजेत' इत्यनेन वायुदेवताकर्गधिकरणकैकविंशस्तोमविशिष्टाग्निष्टोमसामसाध्यस्तोत्रविशिष्टः प्रयोगः फलोद्देशेन विधीयते **तस्य** पूर्वोक्ताग्निष्टुन्नामकस्य यागस्य **वायव्यासु** वायुदेवताकासु ऋत्तु एकविंशस्तोमविशिष्टं **अग्निष्टोमाख्यं** साम पठित्वा पशुरुपफलार्थं **तेन** अग्निष्टुन्नामकेन यजेत इत्यक्षरार्थः । **"उपत्वा जामयो गिरः"** इत्याद्या **वायव्याः** । **एतस्यैवे**त्यादिना यजेतेत्यन्तेन प्रकृतवाक्येन रेवत्यधिकरणकवारवन्तीयनामकसामसाध्याग्निष्टोमस्तोत्रविशिष्टं यागान्तरं पशुरूपफलोद्देशेन विधीयत इति । अत्र **त्रिवृदग्निष्टुत्** इत्यनेन प्रथमवाक्येन कर्मणो विधानात् न तत्पुनर्विधानमर्हति । द्वितीयवाक्येन गुणविशिष्टप्रयोगविधानान्न तस्याऽपि पुनर्विधानं युक्तम् । अतस्तृतीयवाक्येऽनेकगुणोपादानात् तेषां च पूर्वत्राऽनिवेशात् तद्विशिष्टं कर्मान्तरमेव विधातुं युक्तम् । तच्च कृत्वाशब्दोक्तभावनाविशेषणकं पूर्वभावनातो भिन्नं विजातीयभावनारूपमिति भावः । **रेवत्यः** रेशब्दघटिताः "**रेवतीर्नः**" इत्याद्या ऋचः; **वारवन्तीयं** "**अश्वं न त्वा वारवन्तं**" इत्यस्यामृच्युत्पन्नं साम । **अग्निष्टोमसाम** यज्ञायज्ञा वो अग्नय इत्यत्र गेयं साम । न च यागान्तरविधान एतच्छब्दविरोध इति वाच्यम् । एतच्छब्दस्य "**अथैष ज्योति**" रित्यादाविव प्रस्तोष्यमाणकर्मपरतयापि नेयत्वात् । अत्र च गुणफलसंबन्धविधिः पूर्वपक्षे, सिद्धन्ते च कर्मान्तरविधानम् । यदि गुणफलसंबन्धविधिः तदा प्राप्तोद्देशेनाऽनेकविधाने वाक्यभेदात् भावनान्तरं विधीयते इत्युक्तम् । यदि वार्त्तिकस्याऽस्य यथाश्रुतोऽर्थो गृह्यते, तदा रेवत्यादीनां गुणत्वाभावात् वाक्यभेदापादनमसङ्गतमेव स्यादिति भावः ॥

ननु माऽस्तु प्रकृते कर्मणि गुणविधानं, किन्तु कर्मान्तरं विधीयताम्, अत आह—**नापीति । गौरवादिति** । अनेकत्र विशिष्टे वा विधिव्यापारकल्पनारूपगौरवादित्यर्थः । **मत्वर्थेति** । कर्मान्तरविधाने भावनायां धात्वर्थस्य करणत्वेनाऽन्वितत्वेन गुणाऽस्यान्वयानुपपत्त्या लक्षणाऽऽवश्यकीति भावः । **केवलं** व्यापारासंबद्धं, न हि कुत्राऽपि दृष्टं सिद्धं व्यापारानाविष्टं कार्यं साधयत् साधनमित्याशयः । **तृतीययोपात्तमिति** । तृतीयया लक्षितमित्यर्थः ! **फलभावनायां** फलभाव्यकभावनायाम् । भावनायां निरूपकतासम्बन्धेनाऽन्वययोग्यकरणत्व एव तृतीयायाः शक्तत्वेन करणत्वेनाऽन्वययोग्यकरणत्वस्य तयाऽनभिधानादिति भावः । गुणविधिस्थले करणत्वस्य निरूपकतासम्बन्धेनाऽन्वयः । क्रियाया गुणजन्यत्वात् । गुणफलसम्बन्धविधिस्थलेषु तु करणत्वेनैव करणत्वस्याऽन्वयः सम्बन्धतया भासमानं करणत्वं फलनिरूपितम् । प्रकारतया भासमानं तु धात्वर्थनिरूपितम् । एवं च धात्वर्थं निष्पादयन्नेव गुणः फलं जनयेदिति । एतच्चाग्रे स्फुटीभविष्यति ।

१ गौरवप्रसङ्गात्,

रणत्वं फलभावनायां करणत्वेन विधीयते, प्रत्ययार्थत्वेन दध्नोऽपि तस्य प्राधान्यात्। एवं च दधिकरणत्वेनेन्द्रियं भावयेदिति वाक्यार्थः। करणत्वं च किंप्रतियोगिकमित्यपेक्षायां सन्निधिप्राप्तो होम आश्रयत्वेन संबध्यते। ततश्च सिद्धो धात्वर्थस्याऽऽश्रयत्वेनान्वयः।

प्रकृतमनुसरामः। तत्सिद्धं धात्वर्थस्य न करणत्वेनैवान्वय इति। किं तर्हि क्वचित्करणत्वेन क्वचित्साध्यत्वेन क्वचिदाश्रयत्वेनेति। गुणविधौ साध्यत्वेनैवान्वयः संभवतीति न मत्वर्थलक्षणायाः प्रयोजनम्।

किंच गुणविधौ मत्वर्थलक्षणायां गुणस्य धात्वर्थाङ्गत्वे किं मानमिति वक्तव्यम्। न तावच्छ्रुतिः। मत्वर्थलक्षणायां तृतीयाश्रुतिर्मत्वर्थस्यैवाङ्गत्वे

---

दध्न इति पंचमी। **तस्य** करणत्वस्य। तत्र हेतुमाह–**प्रत्ययार्थत्वेनेति**। **'प्रत्ययः प्राधान्येने'ति** स्मृतेरिति भावः। **दधिकरणत्वेन** दधिनिष्ठकरणत्वेन। **किम्प्रतियोगिकं** किन्निरूपितम्। **आश्रयत्वेन** गुणनिष्ठकरणतानिरूपकत्वेन। **इदमत्राऽवधेयम्**–यत्र हि गुणः फलाय विधीयमानः कारकतामापद्यते स आश्रयः इति आश्रयलक्षणमाहुः **पार्थसारथिमिश्राः**। इदं च लक्षणम् उक्थ्यादिसंस्थानां फलाय विधीयमानानामाश्रयभूते ज्योतिष्टोमे ऽव्याप्तम्, तत्र ज्योष्टोमे उक्थ्यादीनां स्तोत्रविशेषाणां कारकत्वासंभवात्। **"दाक्षायणयज्ञेन स्वर्गकामो यजेत"** इत्यत्र दाक्षायणपदाभिधेयाया आवृत्तेः दर्शपूर्णमासयोः कारकत्वासंभवाच्च। अतः फलाय विधीयमानो गुणो यां क्रियामपेक्षते स आश्रयः इति **शंकरभट्टैः** परिष्कृतमाश्रयलक्षणम्। तदपि न सुन्दरम्। **'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत'** इत्यत्र वारवन्तीयस्य क्रियापेक्षिणः यागरूपाश्रयलाभात् गुणफलसंबन्धविधानोपपत्तौ आश्रयालाभकृतगुणफलसम्बन्धविध्यभावप्रतिपादनस्याऽसांगत्यापत्तेः। न च साम्नः क्रियात्मकत्वेन नाश्रयापेक्षेति वाच्यम्। तस्य स्वरसमाहाररूपत्वेन क्रियानात्मकत्वात्। अतः अदृष्टाद्वारकसंबन्धेन गुणविशेषविशिष्टत्वमाश्रयत्वम्। प्रकृते चाऽदृष्टरूपं द्वारमन्तरा यागस्य वारवन्तीयस्य च सम्बन्धाभावात् नोक्तदोष इति **नवीनाः**। एतद्दोषपरिजिहीर्षयैव च **सोमनाथसर्वतोमुखयाजिभि**रपि "यत्र हीत्यादि"शास्त्रदीपिकावाक्यं–"इदं च यत्र फलाय विधीयमानस्य **गुणस्य** जातिद्रव्यशुक्लादिगुणरूपत्वं तदभिप्रायम्" तेन दाक्षायणयज्ञेन स्वर्गकामो यजेत, पशुकाम उक्थ्यं गृह्णीयात्, षोडशिना वीर्यकामः, शुक्राग्रान् ग्रहान् गतश्रीः प्रतिष्ठाकामः, इत्यादिषु आवृत्तिसंस्थाग्रतादीनां गुणानां दर्शपूर्णमासादिषु करणत्वाभावेऽपि तेषामाश्रयत्वमुपपद्यते, इति व्याख्यातम्। एवञ्च द्रव्यक्रियागुणादिरूपत्वे नाऽऽग्रहः। किन्तु अदृष्टाद्वारकत्वं मुख्यतयाऽऽश्रयलक्षणे योजनीयमिति फलितम्॥

नियमाभावमुपसंहरति–**तत्सिद्धमिति**। फलितमाह—**क्वचिदिति**। उत्पत्तिविधौ करणत्वेन, गुणविधौ साध्यत्वेन, गुणफलसम्बन्धविधावाश्रयत्वेनेत्यर्थः। **किं मानमिति वक्तव्यमिति**। प्रमाणं किंचित् वक्तव्यमित्यर्थः। **मत्वर्थलक्षणायामिति**। अङ्गीकृतायामिति शेषः। **तृतीयाश्रुतिः**। दध्नेतितृतीयाविभक्तिरूपा श्रुतिः। अस्तु

मानं स्यात् न तु गुणस्याऽङ्गत्वे । समभिव्याहारात्मकं वाक्यमिति चेत्, तत्किं स्वतन्त्रमेव मानम्? उत लिङ्गश्रुती कल्पयित्वा? । नाऽऽद्यः, (१)बलाबलाधिकरणविरोधात् । तत्र हि वाक्यं लिङ्गश्रुती कल्पयित्वाऽङ्गत्वे मानमित्युक्तम् । द्वितीये प्रत्यक्षां श्रुतिमुत्सृज्य श्रुत्यन्तरकल्पने तस्या एव वा आवृत्तिकल्पने (२)व्यर्थः प्रयासः समाश्रितः स्यात् । विशिष्टविधौ चागत्या तदाश्रयणम् ।

किंच भवतु श्रुत्यन्तरकल्पनम् । तथापि तत्सहकृतः प्रत्यक्ष एव विधिर्धात्वर्थाङ्गत्वेन गुणं विधत्ते, ? उत कल्पितं विध्यन्तरम् ? कल्पितमिति चेन्न, श्रुतविधे(३)र्व्यर्थतापत्तेः । नहि तेन तदा गुणो विधीयते, कल्पितविध्यन्तराङ्गीकारात्; नापि धात्वर्थः, तस्य वचनान्तरेण विहितत्वात् ।

अथ—श्रूयमाण एव विधिः कल्पितश्रुतिसहकृतो धात्वर्थाङ्गत्वेन गुणं विधत्ते-इति चेत्, तर्हि तत्र कथं धात्वर्थस्यान्वयः ? । करणत्वेनेति चेन्न, अन्वयानुपपत्तेः । नहि संभवति दध्ना होमेनेति चान्वयः । साध्यत्वेनैवान्वयः-दध्ना होमं भावयेदिति-चेत्, न, तथा सत्यानुवादेऽपि धात्वर्थः करणत्वेनैवान्वेतीत्येतदुपेक्षितं स्यात्, विवक्षितवाक्यार्थश्च विनैव मत्वर्थलक्षणयाङ्गीकृतः स्यात् । तस्मान्न गुणविधौ मत्वर्थलक्षणा ।

---

तर्हि वाक्यमित्याह-**समभीति** । **बलाबलेति** । श्रुतिलिङ्गादीनां प्राबल्यदौर्बल्यविचाराधिकरण इत्यर्थः । एतच्चोपरिष्टाद्ग्रन्थकृदेव निरूपयिष्यति । अत्र श्रुत्यन्तरकल्पनं दध्नेति तृतीयाविभक्त्यन्तपदान्तरकल्पनमेव बोध्यम् । **द्वितीये** लिङ्गश्रुतिकल्पनपूर्वकमङ्गत्वे मानमिति पक्षे । कल्पनागौरवमभिसन्धायाह-**तस्या एवेति** । ननु **'अरुणया पिङ्गाक्ष्या'** इत्यादौ आरुण्यादिविशिष्टक्रयभावनाया एव विधेयत्वाङ्गीकारात् तदन्यथानुपपत्तिकल्पितविशेषणविध्यर्थं यथा श्रुत्यावृत्तिराश्रीयते तद्वदत्रापीत्यत आह-**विशिष्टविधाविति** । तथा च यत्रोत्पत्तिविध्यन्तरं नास्ति, तत्राऽगत्या विशिष्टविधिमङ्गीकृत्य तदन्यथानुपपत्त्या अर्थात् विशेषणविधिकल्पनादशायां श्रुत्यन्तकल्पनादिप्रयासाश्रयणेऽपि सत्यां गतौ गुणविधिस्थलेऽपि किमर्थं स आश्रीयत इति भावः ।

कल्पितेऽपि श्रुत्यन्तरे न भवदिष्टं सेत्स्यतीत्याह-**किंचेति** । **अयमभिसन्धिः-"दध्ना जुहोति"** इत्यत्र पदद्वयं श्रूयते, यद्यत्रान्यापि श्रुतिः कल्प्येत केवलाया विभक्तेः कल्पनासंभवात् दध्नेति तृतीयान्तमन्यत्कल्पनीयम्, कल्पितस्य दध्नेतिपदस्याऽन्वयार्थं जुहोतीति विधिपदान्तरस्वीकारे तेनैव गुणस्य विहितत्वेन **'अग्निहोत्रं जुहोति'** इत्यनेन धात्वर्थस्य प्राप्तत्वेनान्यस्य च कस्यचिदपि विधातुमशक्यत्वेन प्रत्यक्षदृष्टस्य वैयर्थ्यम् । श्रुत्यन्तरमकल्पयित्वा प्रत्यक्षतः श्रुतस्यैव कल्पितश्रुतिसहकृतस्य गुणविधायकत्वाङ्गीकारे गुणस्यैव तत्र करणत्वेनाऽन्वयात् धात्वर्थस्य साध्यत्वेनैवाऽन्वयोऽङ्गीकर्त्तव्यः । अङ्गीकृते च तस्मिन् प्रतिज्ञाव्याकोपोऽस्मदिष्टसिद्धिश्चेति । **श्रुतविधेः** 'दध्ना जुहोति' इत्यत्र श्रुतस्य जुहोतीति विधिभागस्य ।

---

१. पू. मी. ३. ३. ७. २. वृथा. ३. वैयर्थ्यापत्तेः

**यत्तु 'विधाने वानुवादे वा' इति वार्तिकं, तत्प्रतीतिमवलम्ब्य, न वस्तुगतिम्। तथाहि—यावद्धि 'अग्निहोत्रं जुहुयादि'ति वाक्यं नाऽऽलोच्यते, केवलं 'दध्ना जुहोती'ति वाक्यमालोच्यते, तदा षष्ठाद्यन्यायेन होमस्या (१) भाव्यतां जानतां (२) प्रतिपदाधिकरण (३) भावार्थाधिकरणवासनावासितानां (४) भवत्येव (५)तादृशी मतिः-यद्दधिमता होमेनेष्टं भावयेदिति।**

**प्रतिपदाधिकरणे हि 'सोमेन यजेते' त्यादिषु किं गुणधात्वर्थयोः फलभावनाकरणत्वेनान्वयः, उत एकस्यैवेति संदिह्य प्रधानसंबन्धलाभात् विनिगमनाविरहाच्च सर्वेषां फलभावनाकरणत्वेनान्वयमाशङ्क्य लाघवादेकस्यैव फलभावनाकरणत्वमित्युक्तम्। भावनाकरणत्वं हि भावनाभाव्यनिर्वर्तकतया। भाव्यं च स्वर्गादि नादृष्टमन्तरेणेति अनेकेषां करणत्वेऽनेकादृष्टकल्पनाप्रसङ्गात्। तस्मादेकस्यैव करणत्वम्।**

**यदाप्येकस्य, तदापि किं द्रव्यगुणयोः फलभावनाकरणत्वम्? उत धात्वर्थस्य इति भावार्थाधिकरणे संदिह्य द्रव्यगुणयोरेव भावनाकरणत्वम्, 'भूतं भव्यायोपदिश्यते' इति न्यायादित्याशङ्क्य धात्वर्थस्यैव भावनाकरणत्वम्, पदश्रुतेर्बलीयस्त्वादित्युक्तम्। अतश्च सिद्धमेतद्वाक्यान्तरानालोचनदशायां गुणविधावपि धात्वर्थस्य करणत्वाशङ्कायां गुणपदे मत्वर्थलक्षणेति।**

---

तर्हि विधानेवेति वार्त्तिकस्य का गतिः? अत आह-**तत्प्रतीतिमवलम्ब्येति**। आपाततः प्रतीतिमवलम्ब्येत्यर्थः। अज्ञाननिवृत्तिमात्रेण संशयविपर्ययसहं ज्ञानमापतप्रतीतिः। **वस्तुगतिं** वस्तुतत्त्वम्। तदेवोपपादयति—**तथाहीति**। **अभाव्यतां** भाव्यत्वाभावं। क्रियारूपत्वेन कष्टात्मकस्य यागस्य अपुरुषार्थत्वेन भाव्यत्वात् प्रच्यावितत्वादिति भावः। वाक्योपात्तं प्रतिपदं भावनया सम्बध्यते न वेति विचारो यत्र क्रियते तत् प्रतिपदाधिकरणम्। धात्वर्थस्य भावार्थस्य यत्र करणत्वेनान्वयो विचार्य निर्णीयते तद्भावार्थाधिकरणम्।

**सोमेन यजेतेत्यादि**ष्वित्यादिपदेन विशिष्टविधयो गृह्यन्ते। **लाघवात्** एकादृष्टकल्पनाप्रयुक्तलाघवात्। **एकस्यैव** गुणधात्वर्थान्यतरस्यैव।

भावार्थाधिकरणमुपक्षिपति-**यदाप्येकस्येति**। **द्रव्यगुणयोरिति**। द्रव्यरूपस्य गुणरूपस्य वोपपदार्थस्येत्यर्थः। **भूतं भव्यायोपदिश्यत इति**। सिद्धं वस्तु साध्यसम्पादकत्वेन विधीयत इत्यर्थः। **पदश्रुतेर्बलीयस्त्वादिति**। यद्यपि मीमांसकमते सर्वेषामेव पदार्थानां प्राथमिकशाब्दबोधे भावनान्वयात् न तत्र पदश्रुत्यादीनामुपयोगः, तथापि प्राथमिकभावनान्वये यस्य यत् प्रमाणं, तद्गतप्राबल्यस्य तदानीमकिञ्चित्करत्वेऽपि पार्ष्ठिके फलादिसम्बन्धे तदेव निश्चायकमङ्गीक्रियत इत्याशयेनेदम्। विचारशीलस्य नैवं प्रतीतिः संभवतीत्याह—**यदा त्विति**।

प्रवर्तनात्मकस्य विधेः प्रवृत्त्यतिरिक्तविषयत्वासम्भवेन गुणविधिस्थलेऽपि धात्वर्थावच्छिन्नप्रवृत्तिविषयकविधिरेव युक्त इत्याशङ्क्य **पार्थसारथिमिश्रैरुक्तम्**-यद्यपि न क्रियां

---

१. अभाव्यत्वम् भा० यत्वमजानतां २. पू. मी. २. १. १. ३. पू. मी. २. १. २
४. वासितान्तःकरणानां ५. भवत्येतादृशी

यदा तु "अग्निहोत्रं जुहोती"ति होमविधायकं वाक्यान्तरमालोच्यते तदा होमस्य वाक्यान्तरेणैव विहितत्वात्तदुद्देशेन गुणमात्रं विधीयते इत्यालोचनान्न मत्वर्थलक्षणेति। अतएवोक्तं पार्थसारथिमिश्रैः (१)राधाराग्निहोत्राधिकरणे–फलतो गुणविधिरयं न प्रतीतितः–इति।

यद्वा एतद्वार्तिकमधिकारविध्यभिप्रायम्। 'उद्भिदा यजेते' त्यादीनामधिकारविधित्वात्। तत्र हि यागो विधीयताम्, उत्पत्तिवाक्यसिद्धो वानूद्यताम्, उभयथापि धात्वर्थस्य करणत्वेनान्वयात् तृतीयान्तस्य तद्वाचित्वम्, अन्यथान्वयानुपपत्तेरिति। तस्माद् गुणविधौ विनापि लक्षणामन्वयोपपत्तेर्न मत्वर्थलक्षणेति। अतश्च 'सोमेन यजेते' त्यत्र न विशिष्टविधानम्, किंतु गुणमात्रविधानम्, यागस्तु 'ज्योतिष्टोमेन स्वर्गकामो यजेते' त्यस्मिन्वाक्ये विधीयते इत्येव युक्तम्। अन्यथा मत्वर्थलक्षणापत्तेरिति।

अत्रोच्यते–यद्यपि यागोद्देशेन सोमविधौ न मत्वर्थलक्षणा, तथापि यागस्याप्राप्तत्वात् 'सोमेन यजेते' त्यत्र न यागोद्देशेन सोमविधानं संभवति। न च 'ज्योतिष्टोमेने' त्यादिना यागस्य प्राप्तत्वात्तदुद्देशेन गुणमात्रं विधीयत इति वाच्यम्। तस्याधिकारविधित्वेनोत्पत्तिविधित्वानुपपत्तेः। कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः। तेन च विहितस्य कर्मणः फलविशेषसंबन्धमात्रमधिकारविधिना क्रियते। फलविशेषसंबन्धबोधकस्याधिकारविधित्वात्।

---

विहाय द्रव्ये विधिः प्रतीयते। तस्यामेव विशिष्टायां प्रतीयमानो विधिः स्वरूपेण तस्याः प्राप्तत्वात् अप्राप्तगुणमात्रपरतामवलम्बमानः फलतो गुणविधिरित्युच्यते न प्रतीतित" इति। एवं चानुवादस्थले विशिष्टविध्यङ्गीकारेऽपि विधिर्विशेषणमात्रे पर्यवस्यन् फलतो गुणविधिरेवायमिति वक्तव्यमिति।

**ननु** नेदं युक्तमापातप्रतीतिमवलम्ब्य वार्त्तिकं प्रवृत्तमिति; यद्येवं सर्वाणि वाक्यानि विप्लवेरन्। नाप्ययमर्थो मिश्रवाक्यस्य वस्तुगत्या गुणविधिरापातप्रतीत्या तु धात्वर्थविधिरिति भ्रम इति; किन्तु चेतनप्रवर्तनात्मकस्य विधेः स्वव्यापारादन्यत्र प्रवृत्त्यनुपपत्तेः गुणविधिस्थलेऽपि गुणविशिष्टस्य व्यापारस्यैव विधावङ्गीकृते पश्चात्प्राप्ताप्राप्तविवेकन्यायेन विधिर्गुणमात्रे पर्यवस्यतीति फलतो गुणविधिरित्युच्यते इत्येवार्थः। अतो नेयं गतिर्वार्तिकस्येत्यस्वरसादाह–**यद्वेति**। **अधिकारविध्यभिप्रायमिति**। यत्र धात्वर्थस्य फलसम्बन्धो बोध्यते तद्विषयकमित्यर्थः। एवं च उद्भिदधिकरणस्थस्याऽस्य वार्तिकस्य तद्वाक्यमधिकृत्यैव प्रवृत्तत्वेन तस्य चाधिकारविधित्वात् तत्सदृशेष्वेवाऽस्य प्रवृत्तिर्युक्ता नाऽन्यत्रेति भावः। **करणत्वेनेति**। फलस्याऽनुपादेयत्वेनाऽविधेयत्वस्य स्थापितत्वात् अधिकारविधिस्थलेऽपि फलविशेषोद्देशेन धात्वर्थस्यैव विधेयत्वात् करणत्वेनैवाऽन्वयो वक्तव्य इति भावः। उक्तार्थमुपसंहरति–**तस्मादिति**। पूर्वपक्षमुपसंहरति–**अतश्चेति**।

एवं '**सोमेन यजेत**' इत्यत्र गुणमात्रविधानेन विशिष्टविधेरभावान्न मत्वर्थलक्षणाया अवकाशलेशोऽपीति पूर्वपक्षे प्राप्ते सिद्धान्तमुपक्रमते–**अत्रोच्यत** इति। स्यादेवं यदि गुणमात्रं '**सोमेन यजेते**' त्यनेन विधियेत, नैतत्संभवतीत्याह–**यद्यपीत्यादिना**।

---

१. पू. मी. २. २. ५.

यथा 'यदाग्नेयोऽष्टाकपालो भवती' त्येतद्विहितस्य कर्मणः फलविशेषसंबन्धमात्रं 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति वाक्यं विधत्त इति तस्याऽधिकारविधित्वं, नोत्पत्तिविधित्वम्।

स्यादेतत् 'दर्शपूर्णमासाभ्या' मित्येतस्य नोत्पत्तिविधित्वं संभवति, ''यदाग्नेयोऽष्टाकपाल' इत्यादिवाक्यानर्थक्यापत्तेः। न हि तदा तेन कर्म विधीयते, तस्य 'दर्शपूर्णमासाभ्या' मित्यनेन विहितत्वात् ; नापि गुणविधानं संभवति, प्राप्ते कर्मणि अनेकविधाने वाक्यभेदापत्तेः। अतः 'आग्नेयोऽष्टाकपाल' इत्यस्योत्पत्तिविधित्वं दर्शपूर्णमासाभ्यामित्यस्य चाधिकारविधित्वं युक्तम्। 'ज्योतिष्टोमेने' त्यस्य तु अधिकारविधे 'रुद्भिदा यजेत पशुकाम' इत्यादिवदुत्पत्तिविधित्वेऽपि स्वीक्रियमाणे न कस्यचिदानर्थक्यम्। 'सोमेन यजेते' त्यस्य गुणविधित्वाद्यागोद्देशेन सोममात्रविधानाच्च न वाक्यभेद इति चेत् —

मैवम्। यद्यपि 'सोमेन यजेते' त्यत्र न वाक्यभेदः, तथापि 'ज्योतिष्टोमेने' त्यस्मिन्वाक्ये कर्मस्वरूपे तस्य च फलसंबन्धे विधीयमाने गौरवलक्षणो वाक्यभेदोऽस्त्येव। 'सोमेन यजेते' त्येतद्वाक्यविहितकर्मणः फलसंबन्धमात्रविधाने (१) तदभावात्। 'उद्भिदा यजेते' त्यत्र तु वचनान्तराभावेनागत्या तदाश्रयणम्। नच 'सोमेन यजेते' त्यत्रापि कर्मणः स्वरूपे गुणे च विधीयमाने वाक्यभेदः स्यादिति वाच्यम्। श्रूयमाणेन विधिना गुण(२)स्याविधेयत्वात्,

---

**यथेति**। यदाग्नेयादिवाक्यविहितकर्मणां दर्शपूर्णमासवाक्येन फलसम्बन्धो बोध्यत इति दर्शपूर्णमासवाक्यस्याधिकारविधित्वमेव नोत्पत्तिविधित्वं यथा, तथा ज्योतिष्टोमवाक्यस्यापि अधिकारविधित्वमेव नोत्पत्तिविधित्वमित्याशयः। उत्पत्तिरत्रज्ञापनम्। कर्मस्वरूपविषयकाज्ञातज्ञापनं येन विधिना क्रियते स कर्मोत्पत्तिविधिरित्यर्थः।

दृष्टान्तदार्ष्टान्तिकयोः वैषम्यं प्रतिपादयितुमारभते— **स्यादेतदिति**। **'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाऽच्युतो भवति'** इति समग्रं वाक्यम्। **तदा** दर्शपूर्णमासवाक्यस्योत्पत्तिविधित्वाङ्गीकारे। **अनेकेति**। अग्निरूपदेवता, कपालगतसंख्या, पुरोडाशः, अमावास्यादिकालः, इत्यनेकार्थेत्यर्थः। एवं च दार्ष्टान्तिके आग्नेयवाक्यानर्थक्यभिया दर्शपूर्णमासवाक्ये उत्पत्तिविधित्वानङ्गीकरणं युक्तम्, दृष्टान्ते तु न तथेत्याह—**ज्योतिष्टोमेत्यादि**।

ज्योतिष्टोमवाक्यस्योत्पत्तिविधित्वाङ्गीकारे तत्र सकलगुणविशिष्टभावनाविधिसंभवात् न विध्यावृत्तिलक्षणो वाक्यभेदः, नापि **सोमेन यजेते**त्यत्र लक्षणा; तथापि गौरवलक्षणो वाक्यभेदः समस्त्येवेत्याह—**गौरवलक्षण इति**। अप्रवृत्तप्रवर्तनरूपस्य विधिव्यापारस्याऽनेकविषयत्वाभावेऽपि अज्ञातज्ञापनरूपस्य तस्य तथात्वान्न तद्दोषान्मुक्तिरित्याशयः। **सोमेन यजेते**त्यत्र वाक्यभेदमाशंकते—**नचेति**। विशिष्टविधिस्थले सर्वत्र विशिष्ट एव विधिः प्रवर्त्तते; विशिष्टं विधाय विश्रान्ते विधौ तदन्यथानुपपत्त्या विशेषणानामपि पृथ-

---

१. लाघवात्. २. स्याविहितत्वात्.

विशेषणविधेरार्थिकत्वात्। सर्वत्र हि विशिष्टविधौ विशेषणविधिरार्थिकः। 'ज्योतिष्टोमेने' त्यस्य तूत्पत्तिविधित्वे कर्मस्वरूपं फलसंबन्धश्चेत्युभयं श्रूयमाणेनैव विधिना विधातव्यमिति दृढो गौरवलक्षणो वाक्यभेदः। यदाहुः—

श्रौतव्यापारनानात्वे शब्दानामतिगौरवम्।
एकोक्त्यवसितानां तु नार्थाक्षेपो विरुध्यते॥ इति।

न च 'सोमेन यजेते' त्यस्योत्पत्तिविधित्वे यद्यपि न वाक्यभेदः, तथापि मत्वर्थलक्षणा स्यादेवेति वाच्यम्। तस्याः स्वीक्रियमाणत्वात्। लक्षणातो वाक्यभेदस्य जघन्यत्वात्। लक्षणा हि पददोषः, वाक्यभेदस्तु वाक्यदोषः, पदवाक्ययोर्मध्ये पदे एव दोषकल्पनाया उचितत्वात्। (१) 'गुणे त्वन्याय्यकल्पना' इति न्यायात्।

अत एव 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इत्यत्राधानानुवादेन जातपुत्रत्वकृष्णकेशत्वविधाने वाक्यभेदात् पदद्वयेनावस्थाविशेषो लक्ष्यत इत्युक्तम्। तस्माद्वाक्यभेदप्रसक्तौ लक्षणैव स्वीकार्या। तस्मात् 'सोमेन यजेते' त्ययमेवो-

---

त्पत्तिविधिः कल्प्यते, विशिष्टस्य चैकत्वेन तत्रैव विधिव्यापाराङ्गीकरणात् नानेकविधानकृतो वाक्यभेद इति भावः। ज्योतिष्टोमवाक्ये तु श्रूयमाणो विधिः उभयमपि संस्पृशतीति अस्त्येव वाक्यभेदः इत्याह-**ज्योतिष्टोमेनेति**। अत्र वार्त्तिकं प्रमाणयति-**यदाहुरिति**। **श्रौतेति**। श्रुत्यैवानेकार्थविधायकत्वे **शब्दानां** विधिशब्दानां, **एकमुक्त्वा** एकं विधाय तावता निवृत्तव्यापाराणां **अर्थाक्षेपः** विशिष्टविध्यन्यथानुपपत्त्या विशेषणविधिकल्पनमित्यर्थः। अतश्च सोमेन यजेतेत्यत्र विशिष्टस्यैकत्वेन तन्मात्रविधानेन विधिव्यापारे उपरते अर्थात् विशेषणविधिकल्पनेऽपि न दोष इति भावः। सकृच्छ्रुतस्य अतएवैकमेवार्थं विधातुं स्वरसतः प्रवृत्तस्य बलादनेकविषयकत्वकल्पनं न युक्तम्। अतो विशिष्टमेकं विधाय तावतैव चरितार्थे तस्मिन् वैशिष्ट्यनिर्वाहाय पश्चादनेकविशेषणकल्पनेऽपि न दोष इति हृदयम्।

**जघन्यत्वात्** निकृष्टत्वात्। जघन्यतामुपपादयति-**लक्षणा हीति**। **उचितत्वादिति**। पदसमूहात्मकत्वात् वाक्यस्यानेकपदात्मके वाक्ये लक्षणाकल्पनापेक्षया एकस्मिन् पदे तत्कल्पनमेव न्याय्यमिति भावः। **गुणेति** व्याख्यातपूर्वम्। **अतएव** लक्षणातो वाक्यभेदस्य जघन्यत्वादेव। **आधानानुवादेन 'वसन्ते ब्राह्मणोऽग्नीनादधीत'** इति वाक्यप्राप्तेत्यादि। **पदद्वयेनेति**। जातपुत्रः, कृष्णकेशः इति पदद्वयेनेत्यर्थः। यद्यप्यत्र पदद्वयाभ्यामवस्थाविशेषो लक्ष्यते इति क्वचिदुपलभ्यते पाठः। व्याख्यातं च भाट्टालंकारकारैरमुमेव पाठमङ्गीकृत्य "द्वयाभ्यामिति जातपुत्रकृष्णकेशपदयोः प्रत्येकमनेकपदात्मकताशय" मिति। तथापि पदद्वयेनेति पाठस्य बहुत्रोपलम्भात् तत्रैव स्वरसतां मन्वानैरस्माभिरयमेव पाठः स्वीकृतः। **अवस्थाविशेषः** वयोविशेषः। यदा जातपुत्रत्वं कृष्णकेशत्वं च सम्भाव्यते तादृशे वयसीत्यर्थः। अतः सोमेन यजेतेत्यत्रैव उत्पत्तिविधित्वमङ्गीकार्यं इत्यमुमर्थमुपसंहरति—**तस्मादिति**।

---

१. जै. सू. ९. २. १५

त्पत्तिविधिर्न 'ज्योतिष्टोमेने' त्ययम् ; गौरवलक्षणवाक्यभेदापत्तेः।
किंच 'सोमेन यजेते' त्यत्र यागविधाने श्रुत्यर्थविधानं (१)स्यात्, गुणविधाने तु वाक्यार्थविधानम्, तच्च श्रुत्यर्थवि(२)धानसंभवेऽयुक्तम्। यथाहुः–

वाक्यार्थविधिरन्याय्यः श्रुत्यर्थविधिसंभवे। इति।

वाक्यार्थः पदान्तरार्थ इत्यर्थः। 'ज्योतिष्टोमेने' त्यत्रापि फलोद्देशेन यागस्यैव विधानान्न वाक्यार्थविधानम्, तदुत्पत्तिविधित्ववादिनापि तदङ्गीकाराच्च। तस्मात् 'ज्योतिष्टोमेने' त्ययमधिकारविधिरेव।

अपि च कर्मस्वरूपविधिस्तत्र स्वीकार्यो यत्र कर्मणो रूपमुपलभ्यते। यागस्य हि द्वे रूपे, द्रव्यं देवता चेति। 'सोमेन यजेते'त्यत्र यद्यपि देवता नोपलभ्यते सोमयागस्याव्यक्तत्वात्; अव्यक्तत्वं च स्वार्थचोदितदेवताराहित्यम्, न तु देवताराहित्यमात्रम्; 'ऐन्द्रवायवं गृह्णाती' त्यादिवाक्यविहित(३)ग्रहणदेवतानां सत्त्वात्, ग्रहणार्थाभिरपि देवताभिः प्रसङ्गतो यागोप-

---

नन्विदमनुपपन्नम्। कर्मस्वरूपमात्रबोधक उत्पत्तिविधावपि फलसम्बन्धबोधनस्याऽवर्जनीयत्वात्। अन्यथा पुरुषप्रवृत्तेरेवानुदयात्। उत्पत्तिवाक्ये विधेरिष्टसामान्यविषयता। अधिकारविधौ तु तद्विशेषविषयतेत्येतावानेव विशेषः। नैतावता फलसम्बन्धस्य विध्यविषयता, येन तज्जन्यं गौरवं परिह्रियेत। अतश्चोभयत्र दोषसाम्यान्मत्वर्थलक्षणापरिहाराय ज्योतिष्टोमवाक्यस्यैवोत्पत्तिविधित्वाङ्गीकरणं युक्तमित्यत आह—**किञ्चेति**।

**श्रुत्यर्थेति**। अत्र श्रुतिपदेन समानपदश्रुतिर्गृह्यते। वाक्यपदेन च पदद्वयसमभिव्याहारः। **अन्याय्य** इति। भावनायाः करणाकांक्षायां समानपदोपात्तधात्वर्थस्यैव शीघ्रोपस्थितत्वेन तत्त्वेनान्वयो युक्तः, न तु पदान्तरोपात्तस्य विलम्बोपस्थितस्य गुणस्येति भावः। **यागस्यैव विधानादिति**। फलस्याविधेयत्वेनोत्पत्तिवाक्यविहितस्यापि यागस्याधिकारवाक्ये पुनर्विधानादिति भावः। उभयवादिसम्मतोऽयं पक्ष इत्याह—**तदुत्पत्तीति**।

सोमेन यजेतेत्यत्रैवोत्पत्तिविधित्वमङ्गीकार्यमित्याह—**अपिचेति**। **कर्मस्वरूपविधिः** कर्मस्वरूपबोधको विधिः। यागस्य देवतोद्देश्यकद्रव्यत्यागरूपत्वेन तत्स्वरूपनिष्पादकत्वात् यागरूपत्वं द्रव्यदेवतयोः। **ननु** सोमेन यजेतेत्यत्र द्रव्यश्रवणेऽपि देवताया अभावात् कथं तस्योत्पत्तिविधित्वमङ्गीकर्तुं शक्यते? अत आह—**सोमेनेति**। उपलभ्यभावे हेतुमाह—**अव्यक्तत्वादिति**। **ननु** व्यक्तत्वं यागस्य द्रव्यदेवताभ्यां भवति। अव्यक्तत्वं द्रव्यदेवताभावरूपं वाच्यं, न च तत्सोमयागे संभवति, द्रव्यस्य सोमरूपस्य देवतानामिन्द्रवाय्वादीनां सत्त्वात्। नचोत्पत्तिवाक्ये देवताभाव एवाव्यक्तत्वं तच्च सोमयागेऽप्यस्तीति वाच्यं, उपांशुयाजे उत्पत्तिवाक्ये देवताभावेन तस्याऽप्यव्यक्तत्वापत्तेरित्यत आह—**अव्यक्तत्वं चेति**। यागोद्देशेन विहितदेवताभाववत्त्वम्, न तु सर्वथा देवताभावः, नाप्युत्पत्तिवाक्ये देवताभावमात्रमित्यर्थः। कुतो न सर्वथा देवताभावः? अत आह—**ऐन्द्रवायवमिति**। गृह्णातीत्यादिपदेन **"मैत्रावरुणं गृह्णाति" "आश्विनं गृह्णाति"**, इत्यादयो गृह्यन्ते। ग्रहणदेवतासत्त्वे यागस्य किमायातम्? इत्यत आह—**ग्रहणार्थाभिरिति**। **प्रसङ्गत इति**। अन्यार्थमुपात्तस्याङ्गस्यान्येनोपजीवनं **प्रसङ्गः**। उपांशु-

---

१. स्यात् इति नास्ति क. पु. २. विधाने सम्भवति ३. ग्रह.

कारस्य क्रियमाणत्वात्, तथापि द्रव्यमुपलभ्यत एव, तेनापि यागस्वरूपं ज्ञातुं शक्यमेव। 'ज्योतिष्टोमेन स्वर्गकामो यजेते' इत्यत्र न द्रव्यं देवता वा श्रूयते। अतस्तस्योत्पत्तिविधित्वे यागविशेषज्ञानं यागसामान्यस्याविधेयत्वात् विशेषस्यैव विधेयत्वादित्यादिक्लेशेन स्यात्। अतो नायं कर्मोत्पत्तिविधिः।

नन्वेवमपि 'अग्निहोत्रं जुहोती' त्ययमपि होमोत्पत्तिविधिर्न स्यात् रूपाश्रवणात्। तच्छ्रवणाच्च 'दध्ना जुहोती' त्ययमेवोत्पत्तिविधिः स्यात्। तथा चाऽऽघाराग्निहोत्राधिकरणविरोधः। तत्र हि 'अग्निहोत्रं जुहोती' त्यस्योत्पत्तिविधित्वं 'दध्ना जुहोती' त्यादीनां च गुणविधित्वमुक्तमिति चेत्-सत्यम्, 'अग्निहोत्रं जुहोती' त्यत्र यद्यपि रूपं नोपलभ्यते, अग्निहोत्रशब्दस्य तत्प्रख्यन्यायेन नामधेयत्वात्, तदेतदग्रे वदयामः; तथापि तस्योत्पत्तिविधित्वं स्वीक्रियते, अन्यथाऽऽनर्थक्यापत्तेः। 'दध्ना जुहोती'त्यस्य च नाऽऽनर्थक्यं, गुणविधित्वात्। अतः 'अग्निहोत्रं जुहोती' त्ययं कर्मोत्पत्तिविधिरिति युक्तम्। 'ज्यो-

---

याजे उत्पत्तिवाक्ये देवताभावेऽपि मन्त्रवर्णकल्पितविधिना यागोद्देशेनैव देवताविधानात् नाऽव्यक्तत्वं; ततश्च नाऽसंभवो नाऽप्यतिव्याप्तिरिति भावः। केचित्तु न यागोद्देशेनाविहितदेवताकत्वं अव्यक्तत्वं, ग्रहणार्थमुपात्तानां देवतानां यागसम्बन्धं विनाऽऽकांक्षानुपरमात्, न हि ग्रहणनिरूपितं देवतात्वं संभवति, त्यज्यमानद्रव्योद्देश्यत्वरूपत्वात् देवतात्वस्य; न हि ग्रहणकाले द्रव्यं त्यज्यते, अत एव च न प्रसङ्गादुपकारसिद्धिः। अन्यार्थमुपात्तस्य तत्र संभवदुपयोगस्य हि अन्येनोपजीवनं प्रसङ्गः। यथा पशुपुरोडाशे प्रयाजादेः, न च ग्रहणमात्रे उपयोगस्सम्भवतीत्युक्तं; किञ्च यदि प्रसङ्गादुपकारकत्वं देवतानां तदा अङ्गत्वाभावात् गुणकामवत् विकृतावतिदेशो न स्यात्, अतो नेदमव्यक्तलक्षणम्, किन्तु यत्र तद्धितचतुर्थीमन्त्रवर्णैः प्रथमं यागार्थतयैव देवता विनियुक्ता तत् व्यक्तम्, तद्भिन्नमव्यक्तम्, तत्त्वमव्यक्तत्वम्। न 'ह्यैन्द्रवायव'मित्यादिभिः प्रथमं यागोद्देशेन देवता विधीयते, तत्र पश्चात् आर्थिकत्वाद्देवतासंबन्धस्य, अत एव तृतीये भट्टपेटिकायां "स्वाङ्गतयाऽविहितदेवताकत्वमेवाव्यक्तत्व" मित्युक्तं **कौस्तुभे**। अतो न दोष इत्याहुः। **शक्यमेवेति**। एकतरसत्त्वेऽपि एकदेशस्य ज्ञातत्वेन तेन समुदायज्ञानं सुकरमेवेत्यर्थः। विशेषज्ञानं क्लेशेन स्यादित्यन्वयः। क्लेशप्रकारमाह-**यागसामान्यस्येति**। विशेषज्ञानमन्तरा सामान्ये कस्यापि प्रवृत्त्यनुदयादिति भावः। सत्यां गतौ तादृशक्लेशसहनं न युक्तमिति हृदयम्।

यत्र रूपोपलब्धिः तत्रैव कर्मविधिरिति स्वीकारे दोषमाशङ्कते—**नन्वेवमिति**। **तच्छ्रवणात्** रूपश्रवणात्। अस्तु नाम 'दध्ना जुहोती'त्यस्योत्पत्तिविधित्वं को दोषः? अत आह-**तथाचेति**। 'आघाराग्निहोत्रमरूपत्वा'दित्यधिकरणे इत्यर्थः। आदिपदेन पयसा जुहोति, इत्यादिपरिग्रहः। **ननु**-कथं न रूपोपलब्धिः? अग्निहोत्रपदस्यैव रूपोपलम्भकत्वात्, अत आह-**अग्निहोत्रशब्दस्येति**। **अग्रे** नामधेयनिरूपणावसरे। **तथापि** रूपोपलम्भाभावेऽपि। **आनर्थक्यापत्तेरिति**। धात्वर्थस्य वाक्यान्तरेण विहितत्वात् नामधेयस्य च वैश्वदेवादिशब्दवत् अनुवादप्रयोजनस्यापि कस्यचिदभावात् आनर्थक्यापत्ते

**तिष्टोमेने' त्यस्य च नाऽऽनर्थक्यम्। अधिकारविधित्वोपपत्तेः। अतः किमर्थं संभवति रूपवति वाक्ये कर्मविधाने तद्रहिते तत्स्वीकार्यम्?**

**किं च 'दध्ना जुहोती'त्यस्य कर्मोत्पत्तिविधित्वे 'पयसा जुहोती'त्यनेनैतत्कर्मानुवादेन न पयो विधातुं शक्यते, उत्पत्तिशिष्टदध्यवरोधात्। उत्पत्तिशिष्टगुणावरुद्धे हि न गुणान्तरं विधीयते, आकाङ्क्षाया उत्पत्तिशिष्टेनैव निवृत्तत्वात्। अतस्तेनापि विशिष्टं कर्मान्तरं विधेयम्। तथाचानेकादृष्टकल्पनागौरवम्। 'अग्निहोत्रं जुहोती'त्यस्य तु उत्पत्तिविधित्वे एतद्वाक्यविहितस्य कर्मणो द्रव्याकाङ्क्षायां युगपदेव खलेकपोतन्यायेन 'दध्ना जुहोति', 'पयसा जुहोति' इत्यादिवाक्यैर्गुणा विधीयन्त इति नानेकादृष्टकल्पनागौरवम्। अतोऽग्निहोत्रं जुहोती'त्ययमुत्पत्तिविधिः, 'पयसा जुहोती'त्यादयस्तु गुणविधय इति युक्तम्।**

**'सोमेन यजेते'त्यत्र तु रूपवति वाक्ये कर्मोत्पत्तिविधाने स्वीक्रियमाणे न किंचिद्दूषणं, पक्षद्वयेऽप्येकस्यादृष्टस्य तुल्यत्वात्। तस्माद्युक्तं सोमेन यजेतेत्ययमेवोत्पत्तिविधिरित्यलमनया विधिनिरूपणानुगतप्रसङ्गचिन्तया। प्रकृतमनुसरामः। तत्सिद्धं विधिः प्रयोजनवन्तमप्राप्तमर्थं विधत्त इति॥**

---

रिति भावः। **रूपवति** द्रव्यदेवताऽन्यतरबोधके **वाक्ये कर्मविधाने संभवति** सतरूपाभाववति ज्योतिष्टोमवाक्ये किमर्थं कर्मविधानं स्वीक्रियत इत्यर्थः।

**एतत्कर्मानुवादेन**। दधिवाक्यविहितहोममनूद्य। **उत्पत्तिशिष्टेति**। उत्पत्तिवाक्यविहितेत्यर्थः। विध्यभावे हेतुमाह-**आकांक्षाया** इति। द्रव्याकांक्षाया इत्यर्थः। **तेनापि** पयसा जुहोती'त्यनेनापि। **विशिष्टं** पयोरूपगुणविशिष्टम्। अस्तु नाम तत्रापि विशिष्टकर्मविधानं, का हानिः? अत आह-**अनेकेति**। फलोद्देशेन कर्मणो विधेयत्वेन तस्य च कालान्तरभाविनः अदृष्टमन्तरेणासंभवात् एकैकस्यापि कर्मण एकैकमदृष्टमिति अनेकादृष्टकल्पनाप्रसङ्ग इत्यर्थः। पक्षान्तरे दोषाभावं दर्शयति—**अग्निहोत्रमिति**। द्रव्याननुरक्तस्य शुद्धस्यैव कर्मणोऽग्निहोत्रवाक्येन विहितत्वात् तस्य च द्रव्याकांक्षायां तत्सन्निहितैः दध्यादिवाक्यैस्सर्वैरपि अविशेषाद्युगपदेव द्रव्ये समर्पिते **'एकार्थास्तु विकल्पेरन्'** इति न्यायेन कर्मणा द्रव्याणां विकल्पेन ग्रहणादेकदा एकस्यैव यागसाधनत्वादेकमेवादृष्टं कल्पनीयमिति नानेकादृष्टकल्पनाप्रयुक्तं गौरवम्। युगपदन्वयाच्च नोत्पत्तिशिष्टत्वादिकमपीति भावः। सर्वेषामुत्पन्नशिष्टत्वात् युगपदन्वयो युक्त इत्याशयः। **खलेकपोतन्यायेनेति**। कणिशानां मर्दनेन धान्यनिष्पादनस्थानं खलम्। तत्र धान्ये प्रसारिते तद्भक्षणार्थं बाला युवानो वृद्धाश्च कपोता ( अन्ये वा पक्षिणः ) युगपदेव पतन्ति। न क्रमशः। सोऽयं **खले कपोतन्यायः**।

**पक्षद्वयेऽपीति**—गुणविधिपक्षे विशिष्टविधिपक्षे चेत्यर्थः। गुणस्य दृष्टविधयैव यागस्वरूपनिष्पादकत्वेन नात्रादृष्टकल्पनम्। यागस्य स्वर्गजनकत्वे परं एकमदृष्टं कल्पनीयम्। तच्चोभयोस्तुल्यमिति भावः। **विधिनिरूपणानुगतप्रसङ्गचिन्तयेति**। विधिनिरूपणमनुसृत्य तत्प्रसङ्गागता या चिन्ता तयाऽलमित्यर्थः। विधेः प्रयोजनवदर्थबोधकत्व-निरूपणमुपसंहरति--**तत्सिद्धमिति**।

**स च विधिश्चतुर्विधः—उत्पत्तिविधिः, विनियोगविधिः, प्रयोगविधिः, अधिकारविधिश्चेति ।**

( उत्पत्तिविधिनिरूपणम् )

**तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः, यथा—अग्निहोत्रं जुहोतीति । उत्पत्तिविधौ च कर्मणः करणत्वेनैवान्वयः-होमेनेष्टं भावयेदिति । न तु होमं कुर्यादिति साध्यत्वेन । तथा सति साध्यस्य साध्यान्तरान्वयायोगेनाधिकारवाक्यावगतफलसंबन्धो न स्यात् । करणत्वेन त्वन्वये होमेनेष्टं भावयेत्' किं तदिष्टमित्याकांक्षायां फलविशेषसंबन्धो घटते ।**

**न च उत्पत्तिविधाविष्टवाचकपदाभावेन कर्मणा इष्टं भावयेदिति कथं वाक्यार्थ इति वाच्यम् । विधिश्रुतेरेवेष्टबोधकत्वात् । सा हि(१) पुरुषार्थं पुरुषं प्रवर्तयन्ती कर्मणः फलसंबन्धमात्रं बोधयति । तस्माद्युक्तमुत्पत्तिविधौ कर्म करणत्वेनान्वेतीति ।**

**अत एवो'द्भिदा यजेते'त्यादौ तृतीयान्त उद्भिच्छब्द उपपद्यते—उद्भिदा**

एवं विधेः प्रयोजनवत्त्वं निरूप्य इदानीं तं चतुर्धा विभजते—**स चेति** । प्रथमं कर्मस्वरूपज्ञानमन्तरा तदनुष्ठानासंभवात् गुणादिविधेरसंभवाच्च सर्वोपजीव्यत्वेन प्रथममुत्पत्तिविधिः, अनन्तरमुत्पन्नस्य प्रयोजनाकांक्षायां विनियोगविधिः, विनियुक्तस्य चानुष्ठानापेक्षायां अनुष्ठानविशेषबोधकः प्रयोगविधिः, एतावत्यनुष्ठेयपदार्थकलापे कोऽधिकरोतीत्यधिकारिविशेषापेक्षायां **'भारो यो येन वोढव्यः स प्रागातोलितो यदि । तदा कस्तस्य वोढेति युक्तं कर्तृनिरूपणम्'** इति न्यायेनाधिकारप्रतिपादकोऽधिकारविधिश्च निरूपणीयः । अत एव सूत्रकारेणापि प्रथमद्वितीययोरध्याययोः प्रमाणभेदनिरूपणद्वारा उत्पत्तिविधिनिरूपणं, तृतीये ऽङ्गत्वनिरूपणद्वारा विनियोगविधिनिरूपणं, चतुर्थपञ्चमयोः प्रयोगविधिनिरूपणं, षष्ठेऽधिकारविधिनिरूपणञ्च कृतं इत्यभिसन्धाय तेनैव क्रमेण विधिं विभजते—**उत्पत्तीति** । **तत्र** विधिचतुष्टयमध्ये । **कर्मस्वरूपमात्रेति** । मात्रपदेन गुणफलादयो व्यावर्त्यन्ते । एवं च यत्रोत्पत्तिवाक्य एव गुणफलादयः श्रूयन्ते तत्रैकस्यैव वाक्यस्य कर्मस्वरूपांशमादायोत्पत्तिविधित्वं, गुणाद्यंशमादाय विनियोगविधित्वं, अधिकारविधित्वमित्यादि बोध्यम् । **कर्मणः** धात्वर्थस्य । **करणत्वेनेति** । भावनायामिति शेषः । भावनायां धात्वर्थस्य साध्यत्वेनान्वयवादिनो **बादरेस्**तदनुयायिनां च मतं खण्डयति—**न त्विति** । तथान्वये दोषमाह—**तथा सतीति** । **इष्टं भावयेदित्य**नन्तरं इति बोधे जाते इति पूरणीयम् ।

**विधिश्रुतेरिति** । एतच्च पूर्वमेवास्माभिरुपपादितम् । **अत एव** कर्मणः करणत्वेनान्वयाभ्युपगमादेव । **उपपद्यत इति** । धात्वर्थस्य भावनायां करणत्वेनान्वयाभ्युपगमादेवोद्भिदादिपदानां तन्नामत्वस्य वक्ष्यमाणत्वेन तत्सामानाधिकरण्यात् तन्निष्ठकरणत्वानुवादकस्सन् उपपद्यत इत्यर्थः । तदेवाभिलपति-**उद्भिदा यागेनेति** । केचित्तु मण्डनमिश्रप्रभृतयो मीमांसका **वैयाकरणाश्च** इष्टसाधनत्वमेव लिङर्थमभ्युपगच्छन्ति ।

---

१ पुरुषार्थं प्रति

**यागेन इष्टं भावयेत् इत्यन्वयोपपत्तेः। येषामपीष्टसाधनत्वं लिङर्थः, तेषामपि तृतीयान्तानां कर्मनामधेयानामन्वयोऽनुपपन्न एव। न हि संभवति याग इष्टसाधनमुद्भिदेति, तृतीयोपात्तस्य कारकस्य लिङ्गसंख्यान्वयायोग्यस्य क्रिययैवान्वयात्।**

**ननु-तवाप्य'ग्निहोत्रं जुहोती' त्यादिषु कर्मोत्पत्तिविधिषु द्वितीयान्तानां कर्मनामधेयानामन्वयोऽनुपपन्नः, न हि संभवति होमेन भावयेदग्निहोत्रमिति। सत्यम्; श्रूयमाणा तावद्द्वितीयाऽर्थाक्षिप्तसाध्यत्वानुवादः, होमस्य हि करणत्वेनान्वयात् असाधितस्य च करणत्वानुपपत्तेः तस्याश्चानन्वयोपस्थितौ सा 'सक्तून् जुहोती'तिवत् तृतीयार्थं लक्षयति-अग्निहोत्रेण होमेनेष्टं भावयेदितीत्युक्तं पार्थसारथिमिश्रैः। अतश्च द्वितीयान्तानां कर्मनामधेयानामन्वयो नानुपपन्नः। तत्सिद्धमुत्पत्तिविधौ कर्म करणत्वेनान्वेतीति।**

( विनियोगविधिनिरूपणम् )

**अङ्गप्रधानसम्बन्धबोधको विधिर्विनियोगविधिः। यथा-दध्ना जुहोती-**

---

तेषां मते तृतीयान्तानामन्वयानुपपत्तिं दर्शयति—**येषामिति**। इष्टसाधनत्वस्य लिङर्थत्वे यजेतेत्यस्य याग इष्टसाधनमित्यर्थः पर्यवसितः, तेन सह तृतीयान्तस्यान्वयो न सम्भवतीत्यर्थः। तत्र हेतुमाह—**तृतीयेति**। **क्रिययैवान्वयादिति**। संख्यानन्वयिपदोपस्थाप्यार्थप्रकारकशाब्दबोधं प्रति आख्यातपदजन्योपस्थितेः कारणत्वात् क्रियान्वयाभावे क्रियान्वयित्वरूपकारकत्वभङ्गापत्तेरिति भावः।

**ननु**—भवन्मतेऽपि केषाञ्चित् द्वितीयान्तानां नामधेयानामन्वयो ऽनुपपन्न एव। सत्येवमुभयोर्दोषसाम्ये कथमहमेव पर्यनुयोगार्हः, **"यश्चोभयोस्समो दोषः परिहारोऽपि वा समः। नैकः पर्यनुयोक्तव्यः तादृगर्थविचारणे"** इति ह्यभियुक्ताः कथयन्ति इत्याशयेन शङ्कते—**नन्विति**। इत्यादिष्वित्यादिपदेन **'आघारमाघारयति' 'समिधो यजति' 'आज्यभागौ यजती'** त्यादिपरिग्रहः। सत्यमन्वयानुपपत्तिरूपो दोष उभयोरपि समानः, तदर्थं च लक्षणायामाश्रीयमाणायां यथा द्वितीयान्ते तथैव तृतीयान्त इत्येतदपि तुल्यमेव; तथापि मन्मते द्वितीयया करणत्वे लक्षणीये असाधितस्य धात्वर्थस्य करणत्वानुपपत्त्या अर्थाक्षिप्तस्य स्वशक्यार्थस्य साध्यत्वस्य **"सौर्यं चरुं निर्वपेदि"** त्यादौ निर्वापादिवत् यथानुवादः, नैवं सम्भवति भवत्पक्षे तृतीयया साध्यत्वलक्षणायामित्यस्मन्मत एव लाघवमित्याशयवान् परिहरति—**सत्यमिति**। **असाधितस्येति**। नासाधितं करणमिति न्यायादिति भावः। **तस्याः** द्वितीयायाः। **अनन्वयोपस्थितौ** अन्वयानुपस्थितौ। अन्वयानुपपत्त्येति यावत्। **सक्तून् जुहोतीतिवदिति**। यथा **'सक्तून् जुहोती'**त्यत्र सक्तूनां भूतभाव्युपयोगाभावेन संस्कार्यत्वानुपपत्तेः श्रूयमाणापि द्वितीया करणत्वलक्षिकेत्युक्तं तद्वदित्यर्थः। **उक्तमिति**। तत्प्रख्याधिकरण इति शेषः। उत्पत्तिविधिनिरूपणमुपसंहरति—**तत्सिद्धमिति**।

क्रमप्राप्तं विनियोगविधिं निरूपयति—**अङ्गप्रधानेति**। अङ्गस्य प्रधानस्य च

**तिति। स हि तृतीयाप्रतिपन्नाङ्गभावस्य दध्नो होमसम्बन्धं विधत्ते-दध्ना होमं भावयेदिति।**

**एतस्य च विधेः सहकारिभूतानि षट् प्रमाणानि-श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि। एतत्सहकृतेन विधिना अङ्गत्वं परोद्देशप्रवृत्तकृतिव्याप्यत्वरूपं पारार्थ्यापरपर्यायं ज्ञाप्यते।**

( श्रुतिनिरूपणम् )

**तत्र निरपेक्षो रवः श्रुतिः। सा च त्रिविधा-विधात्री, अभिधात्री, विनि-**

---

यः सम्बन्धः साध्यसाधनभावः तद्बोधक इत्यर्थः। **तृतीयाप्रतिपन्नेति**। तृतीयया ज्ञातेत्यर्थः। एवञ्च दध्नेति तृतीया करणत्वापरपर्यायं साधनत्वं बोधयति, तच्च जुहोतीति विधिप्रत्ययो विदधातीत्यर्थः। तत्र च भावनायां होमस्य भाव्यत्वेनान्वयः, तदेवाभिलपति-**दध्ना होममिति**। एवं विनियोगविधिस्स्वरूपं निरूप्य तदुपकारकाणि श्रुत्यादीनि षट् प्रमाणानि निरूपयितुमुपक्रमते-**एतस्येति**। षडित्यधिकसंख्याव्यवच्छेदार्थम्। एतेन उपादानाख्यं सप्तमं प्रमाणं विनियोगकारणमभ्युपगम्य तेन प्रोक्षणादेः क्रत्वर्थत्वं बोध्यते। अत एव तस्य चतुर्थाध्यायनिरूपणीयत्वमिति चतुर्थाध्याये उपादानाख्यं प्रमाणमेव निरूप्यते इति वदन्तः प्राभाकरा निरस्ताः। नह्युपादानाख्यप्रमाणाभ्युपगमे प्रमाणमस्ति। प्रोक्षणादीनां क्रत्वर्थत्वस्यापूर्वार्थत्वस्य वा श्रुत्यैवावगमात्। प्रोक्षणादीनां श्रुत्या बोधितमङ्गत्वं व्रीह्यादिस्वरूपे अनर्थकं सत् अपूर्वसाधनत्व एव पर्यवस्यतीति तावत्पर्यन्तं श्रुतिव्यापाराभ्युपगमावश्यंभावात्। विस्तरेणायमर्थो **न्यायरत्नमालायामङ्ग**निर्णये निरूपित इति तत एवावगन्तव्यम् इत्यभिसन्धिमान् प्रमाणानि परिगणयति—**श्रुतीति**। **एतत्सहकृतेन** प्रमाणषट्कसहकृतेन। **ननु** किं नामाङ्गत्वम्, नोपकारकत्वमङ्गत्वम् गोदोहनादेरपि प्रणयनाद्युपकारकत्वेन तदङ्गतापत्तेः; जामात्रर्थं कृतस्य दीपस्य शिष्योपकारकत्वेऽपि तदनङ्गत्वाच्च; नाप्यविनाभावः, आग्नेयादीनां परस्पराङ्गत्वापत्तेः; नापि प्रयोज्यत्वं तत्, **'पुरोडाशकपालेन तुषानुपवपती'** त्यत्र पुरोडाशकपालस्य तुषोपवापप्रयोज्यत्वाभावेऽपि अङ्गत्वसत्वात्, अत आह—**परोद्देशेति**। अन्योद्देशेन प्रवृत्तस्य पुरुषस्य या कृतिः तद्व्याप्यत्वं कारकत्वेन तत्सम्बन्धित्वमित्यर्थः। अतः कालादेः कृतिसाध्यत्वाभावेऽपि नाङ्गत्वव्याघातः, फलस्यापि कारकत्वेन तत्सम्बन्धित्वात् स्वस्यैव स्वाङ्गत्ववारणाय—**परेति**। किमिदं जैमिनीयात् पारार्थ्यरूपादङ्गत्वात् भिन्नम्? नेत्याह—**पारार्थ्येति**। पारार्थ्यमित्यपरः पर्यायो वाचकशब्दो यस्य तदित्यर्थः। एवंच विधिरेवाङ्गत्वं विदधाति। विधेयसमर्पकं श्रुत्यादिकं तत्सहकारि भवतीति भावः।

**तत्र** प्रमाणषट्कमध्ये। **निरपेक्ष इति**। अङ्गत्वबोधने लिङ्गादिवत् प्रमाणान्तरमनपेक्षमाण इत्यर्थः। श्रुतिं विभजते-**सा चेति**। यद्यप्यत्र विनियोगप्रस्तावे विधात्र्यभिधात्र्योः निरूपणं नातीव सङ्गतम्, तथापि श्रुतिप्रसङ्गात् तयोः विधिसहकारित्वात् ग्रन्थकर्तृभिरुक्तत्वाच्च तन्निरूपणमिति बोध्यम्। उक्तं हि **न्यायरत्नमालायां पार्थसारथिमिश्रैः—तत्र श्रुतिस्त्रिधा भिन्ना विध्युक्तिविनियोगकृत्। विनियोक्त्री-**

**योक्त्री चेति । तत्र विधात्री लिङाद्यात्मिका । अभिधात्री व्रीह्यादिश्रुतिः । यस्य च शब्दस्य श्रवणादेव सम्बन्धः प्रतीयते सा विनियोक्त्री । सा च त्रिधा-विभक्तिरूपा, समानाभिधानरूपा, एकपदरूपाचेति । तत्र विभक्तिश्रुत्याङ्गत्वं यथा-'व्रीहिभिर्यजेते'ति तृतीयाश्रुत्या व्रीहीणां यागाङ्गत्वम् ।**

**न च उत्पत्तिशिष्टपुरोडाशावरुद्धे यागे कथं व्रीहीणामङ्गत्वमिति वाच्यम् । पुरोडाशप्रकृतितयोपपत्तेः, पशोरिव हृदयादिरूपहविष्प्रकृतितया यागाङ्गत्वम् । न च साक्षात्पशोरेवाङ्गत्वं किं न स्यादिति वाच्यम्, तस्य विशसनात्, अवदीयमानत्वाच्च हृदयादीनाम् । अवदीयमानं हि हविः, यथा पुरो-**

---

**त्रिधा भिन्ना तुल्यशब्दादिभेदतः ॥** इति । **तत्र** श्रुतित्रयमध्ये । **लिङाद्यात्मिकेति** । यः प्रत्ययो विधायको लिङादिः स एव विधात्री श्रुतिरित्यभिधीयते इत्यर्थः । **श्रवणादेवेति** । शब्दान्तरापेक्षां विनैवेत्यर्थः । **सा** विनियोक्त्री । एवं श्रुतिं विभज्य विधात्र्याः अभिधात्र्याश्च साक्षाद्विनियोजकत्वस्याभावेन ते उपेक्ष्य विनियोक्त्र्याः विनियोजकत्वमुपपादयति—**तत्रेति** । विनियोक्त्रीत्रयमध्य इत्यर्थः ।

**ननु-'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्याञ्चाच्युतो भवति, ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्'** इत्यादिभिः द्रव्यविशिष्टस्यैव यागस्य विधानादुत्पत्तिशिष्टद्रव्यावरोधे वाजिनन्यायेन द्रव्यान्तरनिवेशस्यासम्भवात् कथं व्रीहीणां यागाङ्गत्वेन विधानं इति शङ्कते—**न चेति** । **पुरोडाशप्रकृतितयेति** । पुरोडाशस्य पिष्टपिण्डरूपत्वेन पिष्टानां प्रकृतिद्रव्यापेक्षायां तत्वेन व्रीहीणां विधानमित्यर्थः । दृष्टान्तमाह—**पशोरिवेति** । **"अग्नीषोमीयं पशुमालभेत"** इत्यनेन वाक्येन यथा हृदयादिहविःप्रकृतित्वेनैव पशोर्विधानं तद्वदत्रापीत्यर्थः । **ननु** उत्पत्तिवाक्ये पुरोडाशस्य साक्षाद्देवतासम्बन्धबोधनेन यागसाधनत्वावगमात् न तेन विकल्पः समुच्चयो वा सम्भवतीति युक्तं तत्प्रकृतित्वेन व्रीहीणां विधानं, पशोस्तु साक्षादेवोत्पत्तिवाक्ये देवतासम्बन्धोऽवगम्यत इति साक्षादेव यागसाधनत्वमस्तु, किमर्थं हविःप्रकृतित्वेन विधानमङ्गीक्रियत इति शङ्कते—**न चेति** । **विशसनादिति** । **'पशुं विशास्ति'** इत्यनेन विशसनस्य विहितत्वात् साक्षादेवाङ्गत्वे तथैव त्यागस्यापि कर्तव्यतया तदाम्नानं व्यर्थं स्यादिति भावः । **विशसनं** छेदनम् । **ननु** न केवलं विशसनाम्नानमात्रेण प्रकृतित्वं वक्तुं शक्यते, विशस्यावदायापि पुरोडाशवत् त्यागहोमयोः कर्तुं शक्यत्वादित्यत आह—**अवदीयमानत्वाच्च हृदयादीनामिति** । एकादशानामिति शेषः । **एवञ्च** पशोः यागसाधनत्वान्यथानुपपत्या यद्यपि प्रत्येकं द्व्यवदानं प्राकृतं निखिलाङ्गेषु प्राप्नोति, तथापि तस्यैवातिदेशेनोपस्थापितस्यावदानान्तरस्य वा तत्स्थानापन्नस्य हृदयादिवाक्यैः हृदयादिसंस्कारकत्वेन विधानात् तेन च हृदयादीनां एकादशानामेवाङ्गानां हविष्ट्वसिद्धेः इतरेषां हविष्ट्वपरिसंख्यानाच्च सिद्धं पशोः प्रकृतिद्रव्यत्वमिति भावः । **हृदयादीना**मित्यादिपदेन जिह्वा, वक्षः, यकृत्, वृक्कौ, सव्यं दोः, उभे पार्श्वे, दक्षिणा श्रोणिः, गुदतृतीयं, इत्येतानि गृह्यन्ते । **अवदीयमानं हि हविरिति** । द्विर्ह-

**डाशादिः, "मध्यात्पूर्वार्धाच्चावद्यती"ति वाक्यात् । हृदयादीनि चावदोयमानानि, न पशुः, 'हृदयस्याग्रेऽवद्यती'ति वाक्यात् । अतो हृदयादीन्येव हवींषि, पशुस्तु प्रकृतिद्रव्यम् ।**

**पात्नीवतयागे तु साक्षात्पशुरेवाङ्गम् । तस्य जीवत एव 'पर्यग्निकृतं पात्नीवतमुत्सृजति" इत्युत्सर्गविधानात् । यत्र तु विशसनं तत्र पशुः प्रकृतिद्रव्यमित्येव सिद्धम् । एवं व्रीहयोऽपि प्रकृतिद्रव्यतया यागाङ्गं तृतीयाश्रुत्येति ।**

**आरुण्यस्यापि क्रयाङ्गत्वं तृतीयाश्रुत्या । न चामूर्तस्य तस्य कथं क्रयाङ्गत्वमिति वाच्यम् । एकहायनीरूपद्रव्यपरिच्छेदद्वारा तदुपपत्तेः ॥**

**'व्रीहीन् प्रोक्षती'त्यत्र प्रोक्षणस्य व्रीह्यङ्गत्वं द्वितीयाश्रुत्या । तच्च प्रोक्षणं न व्रीहिस्वरूपार्थम् , स्वरूपे आनर्थक्यात्, व्रीहिस्वरूपस्य प्रोक्षणं वि-**

---

**विषोऽवद्यती"ति** हविष एवावदानश्रवणादिति भावः । **मध्यादिति** । मध्यात्प्रथममवद्यति, पूर्वार्धाद्द्वितीयमवद्यतीत्यर्थः । यद्यपीदं अवदानप्रदेशमात्रविधायकं, नावदानविधायकं, तथापि हविस्सम्बन्धिमध्यादिदेशविधायकत्वेनास्यापि हविस्सम्बन्धोऽस्तीत्याशयेनोदाहृतम् । **हृदयस्याग्रेऽवद्यतीति वाक्यादिति** । अनेन न प्राकृतमवदानमतिदेशतस्तथैव प्राप्नोति हृदयादिषु । किन्तु अनेनैव वाक्येन प्राकृतमेवावदानं अवदानान्तरं वा प्राकृतकार्यापन्नं हृदयादिसंस्कारत्वेन विधीयत इति सूचितम् । हृदयादीनामेव हविष्ट्वमिति सिद्धे अर्थसिद्धं प्रकृतिद्रव्यत्वं पशोरित्याशयेनाह – **पशुस्त्विति ।**

एवञ्च यत्र विशसनाद्याम्नातं तत्रैव पशोः प्रकृतिद्रव्यत्वं, यत्र तु तन्नास्ति तत्र साक्षादेवाङ्गतेत्याह–**पात्नीवतेति** । **'त्वाष्ट्रं पात्नीवतमालभेत'** इत्यनेन विहित इत्यर्थः । साक्षादेवेत्यन्वयः । **उत्सर्गविधानादिति** । पर्यग्निकृतमिति वाक्येन क्लृप्तोपकारप्राकृतपर्यग्निकरणान्ताङ्गरीतिविधानेन भावनाया नैराकाङ्क्षयात् उत्तराङ्गानामर्थादेव निवृत्तत्वेन जीवत एव पशोः देवतोद्देशेन त्यागस्यावश्यम्भावादिति भावः ॥

एवं द्रव्यस्य श्रुत्याङ्गत्वमुपपाद्य गुणस्येदानीं तया तदुपपादयति—**आरुण्यस्येति । 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति'** इति वाक्यविहितक्रयाङ्गत्वमित्यर्थः । **द्रव्यपरिच्छेद इति** । प्राथमिकबोधे क्रयभावनायां साक्षात्करणत्वेन आरुण्यस्यान्वयेऽपि अनन्तरं योग्यतागवेषणादशायां स्ववाक्योपात्तद्रव्यद्वारकं तदित्यध्यवसीयत इति भावः ।

द्वितीयाश्रुतेरुदाहरणमाह—**व्रीहीन् प्रोक्षतीति** । अत्र द्वितीया व्रीहीणामुद्देश्यत्वं बोधयन्ती प्रोक्षणादेरङ्गत्वे हेतुरिति ध्येयम् । **ननु** प्रोक्षणस्य व्रीह्यङ्गत्वे आरुण्येन क्रय इव प्रोक्षणेनापि व्रीहयो जननीयाः । तच्च न सम्भवति । प्रोक्षणात् पूर्वमेव व्रीहिस्वरूपस्य सिद्धत्वात् । अतः कथं प्रोक्षणस्य व्रीह्यङ्गत्वमित्यत आह—**तच्चेति । ननु** आधानस्याहवनीयादिस्वरूपार्थत्वेऽपि यथा नानर्थक्यं तद्वदत्राप्यस्तु, अत आह—**व्रीहिस्वरूपस्येति**—आहवनीयादेरपूर्वरूपत्वेन तत्स्वरूपस्यान्यथोपपत्तौ प्रमा-

**नाऽनुपपत्त्यभावात्, किं त्वपूर्वसाधनत्वप्रयुक्तम्। यदि व्रीहिषु प्रोक्षणं क्रियते तदा तैर्यागेऽनुष्ठितेऽपूर्वं भवति नान्यथेति। अतः प्रकरणसहकृतया द्वितीयाश्रुत्या तण्डुलनिर्वृत्तिप्रणाड्या यदपूर्वसाधनं तदङ्गत्वं प्रोक्षणस्योच्यत इति। एवं सर्वेष्वप्यङ्गेषु अपूर्वप्रयुक्तत्वं वेदितव्यम्।**

**एवं 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्यत्रापि द्वितीयाश्रुत्या मन्त्रस्याश्वाभिधान्यङ्गत्वम्। यत्तु वाक्यीयोऽयं विनियोग इति, तन्न, तथा सति वाक्याल्लिङ्गस्य बलीयस्त्वेन यावद्वाक्यादश्वाभिधान्यङ्गं(१) भवति तावल्लिङ्गाद्रशनामात्राङ्गत्वमेव स्यात्, 'स्योनं ते सदनं कृणोमि' त्यस्येव सदनाङ्गत्वम्। श्रौतविनियोगपक्षे तु यावल्लिङ्गाद्रशनामात्राङ्गत्वं (२)सम्भवति तावत् श्रुत्या 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यत्र तृतीयाश्रुत्या ऐन्द्र्या ऋचो गार्हपत्योपस्थानाङ्गत्ववदश्वाभिधान्यां विनियोगः क्रियते इति युक्तं मन्त्रस्याश्वाभिधान्यङ्गत्वम्। तस्माच्छ्रौत एवायं विनियोगः।**

---

णाभावादित्याशयः। **अपूर्वसाधनत्वप्रयुक्तमिति**। व्रीहिनिष्ठं यत्प्रकृतापूर्वसाधनत्वं तन्निष्ठप्रयोजकतानिरूपितप्रयोज्यताशालीत्यर्थः। अत्र प्रयोज्यत्वं न परम्पराजन्यत्वरूपम्। प्रोक्षणादेरपूर्वजन्यत्वाभावात्, किन्तु अनुष्ठाप्यस्वरूपम्, अपूर्वं हि स्वसिद्ध्यर्थं व्रीहिषु प्रोक्षणमनुष्ठापयतीत्याशयेनाह—**यदीति**। **प्रकरणसहकृतयेति**। अपूर्वसम्बन्धित्वबोधकप्रकरणमन्तरा श्रुत्यादेः स्वतो विनियोजकत्वासम्भवादिदमुक्तम्। **तण्डुलनिर्वृत्तिप्रणाड्येति**। आज्यादेरप्यपूर्वसाधनत्वाविशेषात् तत्र प्रोक्षणप्राप्तौ तद्व्यावृत्त्यर्थमिदं विशेषणम्। **यदपूर्वसाधनमिति**। एवं च अपूर्वसाधनत्वस्यैवोद्देश्यतावच्छेदकत्वात् व्रीहित्वादेरुद्देश्यतावच्छेदककोटावप्रवेशात् सिद्ध्यति यवेष्वपि प्रोक्षणम्। तण्डुलनिष्पत्तिप्रणाड्येतिविशेषणाच्च नाज्यादिषु प्रोक्षणप्रसक्तिरित्याशयः। **सर्वेष्वपीति**। यत्र दृष्टार्थता न सम्भवति, तादृशाङ्गेषु केवलापूर्वप्रयुक्तत्वम्, यत्र तु दृष्टार्थता, तत्र नियमापूर्वप्रयुक्तत्वमित्यर्थः।

द्वितीयाश्रुतेरुदाहरणान्तरमाह—**एवमिति**। **इमामगृभ्णन्निति**। अस्ति महाग्निचयनप्रकरणे उख्याग्निर्मुञ्जमये शिक्येऽवधाय संवत्सरं यावत् यजमानेन भरणीयः। तादृशाग्न्याधारपात्रमुखा। सा च मृदा निर्मातव्या तत्र मृदाहरणार्थमरण्यं गच्छन्नध्वर्युरश्वमेकं गर्दभमेकं च नयेत्। अश्व आक्रमणादिना मृत्संस्कारार्थः। गर्दभस्तु मृदाहरणार्थः। तत्राश्वगले बद्धा रज्जुरश्वाभिधानी। तद्ग्रहणे मन्त्रोऽयं विनियुज्यते। **अश्वाभिधानीं** अश्वरशनाम्। अनेन मन्त्रेणाश्वरशनां गृह्णीयादिति वाक्यार्थः। **द्वितीयाश्रुत्येति** मध्यमपदलोपिसमासः। अत्र मन्त्रस्य इतिकरणविनियुक्तत्वेन वाक्यादेवाश्वाभिधान्यङ्गत्वं इति वदतां पार्थसारथिमिश्राणां मतमनूद्य दूषयति—**यत्त्विति**। **बलीयस्त्वेनेति**। एतच्चोपरिष्टान्निरूपयिष्यते। **रशनामात्रेति**। रशनाद्वयेत्यर्थः। **स्योनं त इति**। एतदप्युपरिष्टान्निरूपयिष्यते। **यावल्लिङ्गादिति**। लिङ्गस्य स्वतो विनियोजकत्वाभावेन श्रुतिं कल्पयित्वैव विनियोजकत्वं वाच्यम्। अतश्च यदा लिङ्गेन

---

१. ङ्गत्वं सम्भ. २. भवति

**'यदाहवनीये जुहोती'त्याहवनीयस्य होमाङ्गत्वं सप्तमीश्रुत्या। एवमन्योऽपि विभक्तिश्रुत्या विनियोगो ज्ञेयः।**

**पशुना यजेतेत्यत्रैकत्वपुंस्त्वयोः समानाभिधानश्रुत्या कारकाङ्गत्वम्। यजेतेत्याख्याताभिहितसङ्ख्याया भावनाङ्गत्वं समानाभिधानश्रुतेः। एकपदश्रुत्या च यागाङ्गत्वम्। न चामूर्तायास्तस्याः कथं यागाङ्गत्वमिति वाच्यम्; कर्तृपरिच्छेदद्वारा तदुपपत्तेः। कर्ता चाक्षेपलभ्यः। आख्यातेन हि भावनोच्यते।**

---

श्रुतिं कल्पयित्वा रशनामात्रे विनियोगः क्रियते, ततः पूर्वमेव प्रत्यक्षा श्रुतिरश्वाभिधान्यां मन्त्रं विनियुङ्क्त इति लिङ्गस्य श्रुत्या बाधितत्वात् युज्यतेऽश्वाभिधान्यङ्गत्वं मन्त्रस्येति भावः।

सप्तमीश्रुतेरुदाहरणमाह—**यदिति**। **अन्योऽपीति**। **सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ, मैत्रावरुणाय दण्डं प्रयच्छति, अग्नेः तृणान्यपचिनोति, गोदोहनेन पशुकामस्य प्रणयेत्, यजमानस्य याज्या** इत्यादौ चतुर्थीपञ्चमीषष्ठीविभक्तिभिः विनियोगो बोध्य इत्यर्थः।

एवं विनियोक्त्रीं विभक्तिरूपां श्रुतिं निरूप्येदानीं समानाभिधानरूपां तां निरूपयति—**पशुनेति**। **'यो दीक्षितो यदग्नीषोमीयं पशुमालभते'** इतीदमेव वाक्यं तृतीयान्तत्वेन विपरिणतपशुपदं त्यक्ताग्नीषोमीयपदं **'पशुनायजेते'** त्यर्थतः सर्वत्रोदाह्रियते नान्यदतोऽस्ति पशुना यजतेति वाक्यम्। अत एव चतुर्थे पश्वेकत्वाधिकरणे इदमेव वाक्यमुदाहृतं भाष्यकारैरिति ध्येयम्। **वस्तुतस्तु** पौर्णमास्यधिकरणशास्त्रदीपिकापर्यालोचनया तदधिकरणस्थ 'चोदना वा गुणाना' मिति सूत्रकौस्तुभपर्यालोचनया च पशुना यजेतेति अग्नीषोमीयवाक्यतो भिन्नं वाक्यान्तरप्राप्तकर्मोद्देशेन जातिसंख्याविशिष्टकारकविधायकं शाखान्तरीयं वाक्यमित्येव युक्तं प्रतीयते। **समानाभिधानश्रुत्येति**। त्रयाणामेकेनैव प्रत्ययेनभिहितत्वात् एकाभिधानरूपया श्रुत्येत्यर्थः। **कारकाङ्गत्वं** करणत्वसम्बन्धः। यद्यपि लिङ्गसंख्ययोः प्रातिपदिकार्थनिष्ठत्वेन तदङ्गत्वमेव वक्तुं युक्तम्, तथापि करणत्वस्य एकप्रत्ययगम्यत्वेन शीघ्रमुपस्थितत्वात् प्रत्ययार्थत्वेन प्राधान्याच्च पूर्वं तत्रैवाऽन्वयः। तत्रैव चान्वितेन प्रातिपदिकार्थेन पाष्ठिकस्सम्बन्ध इति भावः। एवं च पुमानेक एव पशुरालब्धव्य इति सिद्धम्। तिङन्तस्थलमप्युदाहरति—**यजेतेति**। **एकपदश्रुत्येति**। 'सुप्तिङन्तं पद' मिति व्याकरणस्मृत्यनुरोधेन तिङन्तस्यैव पदत्वाभ्युपगमात्तिङन्तस्यैव पदत्वादिति भावः। आख्याताभिहितसंख्याया इत्यनुषज्यते। **ननु** मूर्तस्यैव द्रव्यस्य क्रियासाधनत्वं सम्भवति, न त्वमूर्तस्य गुणसंख्यादेः, अतः कथमस्य यागाङ्गत्वमिति शङ्कते—**न चेति**। **कर्त्रिति**। सत्यं अमूर्ताया न साक्षात् क्रियाजनकत्वं, तथापि प्रथमतो भावनान्वये पश्चाद्योग्यताजिज्ञासायां आख्यातोपात्तकर्तृरूपद्रव्यसम्बन्धद्वारा आरुण्यवत् तदध्यवसीयत इति भावः। नात्र कर्त्तोपलभ्यते, यद्द्वारा संख्यान्वयः स्यात्। अत आह—**कर्त्ता चेति**। **आक्षेपलभ्य इति**। अन्यथानुपपत्तिप्रमाणगम्य-

सा च कर्तारं विनाऽनुपपन्ना तमाक्षिपति ।

( आख्यातार्थनिरूपणम् )

ननु-किमित्येवं वर्ण्यते-आक्षेपलभ्यः कर्तेति । आख्यातवाच्य एव किं न स्यात् । आख्यातश्रवणे भावनाया इव कर्तुरपि प्रतिपत्तेः । न च भावनयैवाक्षेपसंभवे किमिति तद्वाचकत्वं कल्पनीयमिति साम्प्रतम् । तथा सति आख्यातवाच्यकर्त्रैव भावनाक्षेपसंभवे तद्वाचकत्वमपि न स्यात् ।

किं च भावनाया न केवलं कर्त्रैव सम्बन्धः, कारकान्तरेणापि सम्बन्धात् । अतः सा न झटिति कर्तारमेवाक्षिपेत्, विशेषाभावात् । कर्ता तु भावनयैव संबद्धो न कारकान्तरेण, 'गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यात्' इति न्यायात् । अतः स झटिति तामाक्षिपेदिति स एवाख्यातवाच्यः । भावना तु आक्षेपलभ्यैव किं न स्यात् ।

किंचैवं तृतीयादिविभक्तीनामपि करणादिवाचकत्वं न स्यात्, तेषामपि कर्तृवदाक्षेपलाभसंभवात् ।

किंच यदि कर्ता न वाच्यः स्यात् कथमेकत्वं तेनान्वियात्? न हि शाब्दमशाब्दे(१)नान्वेतीति युक्तम् । अन्यथा ऊहादिलोपप्रसङ्गः । किंच देवदत्तः

---

इत्यर्थः । आक्षेपलभ्यत्वमुपपादयति—**आख्यातेन होति** । **अनुपपन्नेति** । तस्याः चेतनव्यापाररूपत्वेनाऽऽश्रयमन्तराऽवस्थानासम्भवादिति भावः ।

इदानीं कर्तुराख्यातवाच्यत्ववादी वैयाकरणः प्रत्यवतिष्ठते—**नन्विति** । आख्यातवाच्यत्वमुपपादयति-**आख्यातश्रवण इति** । यद्यस्मान्नियमेन प्रतीयते तत्तस्य वाच्यमिति पूर्वमप्युक्तत्वादिति भावः । **तद्वाचकत्वं** कर्ताऽऽचकत्वम् । **न स्यादित्यनन्तरं** इत्यपि वक्तुं शक्यत्वादिति पूरणीयम्, तथा च कर्तुराख्यातवाच्यः तेन भावनाक्षिप्यते, भावनाया आख्यातवाच्यत्वं, तया वा कर्तुराक्षेप इत्यत्र विनिगमनाविरह इत्याशयः ।

नन्वस्तु विनिगमनाविरहः, न तावता भवदिष्टसिद्धिः, अत आह—**किञ्चेति** । यदि कर्त्रैव परमसाधारणः सम्बन्धः स्यात् तर्ह्याक्षिपेत् भावना कर्त्तारं, नैतदस्तीति भावः । **झटिति** इतरकारकाक्षेपतः पूर्वम् । स्वमत एतद्वैषम्यमाह—**कर्त्ता त्विति** । कर्तुः कारकत्वेन क्रियान्वयस्यैवोचितत्वादिति भावः । **गुणानामिति** । गुणानां प्रधानार्थत्वेन समत्वात् परस्परं सम्बन्धो न भवतीति सूत्रार्थः ।

**ननु** भावनायाः सर्वकारकसम्बन्धेऽपि प्रथमतः कर्त्रैव सा सम्बध्यते तदधीनत्वादितरकारकसमवधानस्य, कर्तृव्यापारसामान्यरूपा हि सा तमेव विशेषतः पर्युपस्थापयति, कारकान्तराणि तु धात्वर्थसम्बन्धित्वाद्बहिरङ्गाणि भवन्ति । अतः प्रथमोपस्थितत्वात्प्रथमातिक्रमणे कारणाभावाच्च कर्त्ताऽऽक्षिप्यत इत्यस्वरसादाह—**किञ्चेति** । **आक्षेपलाभसम्भवादिति** । आक्षेपलाभमात्रेण वाच्यत्वाङ्गीकारे तया कर्तृवदितरेषामप्याक्षेपसम्भवाद्वाच्यत्वं न स्यादित्यर्थः ।

**ननु** यथा नियमेन कर्त्ताऽऽक्षिप्यते, न तथा कारकान्तराणि । अतस्तेषां व्यभि-

---

१. न्वेति.

पचतीति सामानाधिकरण्यं न स्यात् । न हि केवलं भावनावाचकस्याख्यातस्य देवदत्तपदेन सामानाधिकरण्यमुपपद्यते, एकार्थनिष्ठत्वाभावात् । कर्तृवाचकत्वे तूपपद्यत एव । 'लः कर्तरी'ति व्याकरणस्मृतिविरोधस्तु कर्तुरनभिधेयत्वे स्पष्ट एव ।

किं च कर्तुरनभिधेयत्वे देवदत्तेन पचतीति प्रयोगप्रसङ्गः । तृतीया हि अनभिहितयोः कर्तृकरणयोर्विहिता, आख्यातेन कर्ता(१) नाभिहित इति कर्तृवाचिनी तृतीया स्यादेव । कर्तुरभिधाने तु अभिहितत्वादेव तृतीया न प्राप्नोति, तस्या अनभिहिताधिकारस्थत्वात् । देवदत्तः पचतीति प्रथमा तु प्राप्नोत्येव, प्रथमाया अभिहितकारकविभक्तित्वात्, प्रातिपदिकार्थमात्रवाचि-

---

चारदर्शनादव्यभिचाराच्च कर्तुराक्षेप इत्यरुचेराह—किञ्चेति । **ऊहादिलोपप्रसङ्गादिति** । प्राकृतस्य मन्त्रस्य विकृतौ कार्यमुखेनागतस्य विकृतिसम्बन्धिपदार्थप्रकाशनार्थं प्राकृतपदत्यागेन पदान्तरप्रक्षेपोऽत्र **ऊहः** । तत्र यद्यशाब्दस्यापि शाब्देनान्वयोऽङ्गीक्रियेत तदा सौर्यादौ सूर्यपदप्रक्षेपमन्तराऽपि स्मृतया सूर्यदेवतया सह शाब्दस्य निर्वापादेरन्वयसम्भवादूहलोपः प्रसज्येतेत्यर्थः । आदिपदेन अतिदेशानुषङ्गाध्याहाराणां परिग्रहः । विकृतिभावनाया इतिकर्तव्यताकाङ्क्षायामुपमितिप्रमाणेनोपस्थितप्राकृतपदार्थान्वयमात्रेणाकाङ्क्षाशान्तेः प्रकृतिवच्छब्दकल्पनं न स्यात्; **इषे त्वे**त्यादौ "छिनद्मि" इत्यध्याहारो न स्यात्; **"या ते अग्ने रजाशये"**त्यादौ तनूरित्यादेरनुषङ्गश्च न स्यात् इति भावः ।

**सामानाधिकरण्यं** एकार्थविषयकबुद्धिजनकत्वम् । **केवलं भावनावाचकस्येति** । एतेन नाख्यातस्य कर्तृलक्षकत्वमपि सम्भवति; गोत्वारुण्यादीनि साक्षात् व्यक्त्याश्रितत्वेन स्वानुरक्तां व्यक्तिविषयिणीं बुद्धिमुत्पादयन्तीति युक्तं गवादिशब्दानामाकृत्यधिकरणन्यायेन जातिगुणवाचित्वे सिद्धे अभेदोपचारात् व्यक्तिलक्षकत्वम्, भावनायास्तु व्यापाररूपत्वेन देहसमवायात् देहदेहिनोरभेदोपचारेण देह्यात्मसमवेतत्वव्यपदेशेऽपि साक्षादात्मसमवेतत्वाभावात्, देहस्य चाचेतनत्वेनास्वातन्त्र्यात् कर्तृत्वानुपपत्तेः चेतनस्यैव कर्तृत्वस्य न्याय्यत्वात् तस्य च विशेष्यस्य कर्तृत्वेनाभिमतस्याधिश्रयणाद्यनुरक्तत्वावगतेः अभेदोपचारासम्भवात्, यथा "दण्डो देवदत्तः" इति न सामानाधिकरण्यं, न वा दण्डशब्दस्य पुरुषलक्षकत्वं, एवमाख्यातस्यापि न पुरुषलक्षकत्वमिति ध्वनितम् । **लः कर्तरीति** । **'लः कर्मणि'**त्यस्यानुषक्तकर्तृपदस्यार्थतोऽनुवादोऽयम् । तेन सूत्रेण सकर्मकेभ्यो धातुभ्यो लकाराः कर्मवाचकाः कर्तृवाचकाश्च; अकर्मकेभ्यस्ते भाववाचकाः कर्तृवाचकाश्चेत्यर्थकेन लकारस्य कर्त्रादिवाचकत्वानुशासनादिति भावः । **स्पष्ट एवेति** । **'कर्तरि कृ'**दितिसूत्रस्थस्य कर्तुः कृदभिधेयत्वबोधकस्यात्रानुषक्तस्य कर्तरीति पदस्यात्रापि कर्तुः तिङभिधेयत्वबोधकत्वमेव युक्तम्, अन्यथा स्मृतिविरोधस्स्पष्ट एवेत्यर्थः ।

**अनभिहिताधिकारस्थत्वादिति** । **'अनभिहिते'** इत्यधिकृत्य **'कर्तृकरणयोस्तृतीया'** इति कर्तरि करणे च तृतीयाया विहितत्वादित्यर्थः । **अभिहितकारकेति** ।

---

१. र्तानभि.

त्वाद्वा । न च तदा प्रातिपदिकेनैवार्थस्योक्तत्वात् प्रथमावैयर्थ्यम् । लिङ्गसङ्ख्याप्रतिपत्त्यर्थं तस्या आवश्यकत्वात् । केवलप्रातिपदिकस्य प्रयोगासाधुत्वाच्च । ततश्च यदि कर्ता न वाच्यस्स्यात् देवदत्तेन पचतीति प्रयोगस्स्यात् । तस्मादाख्यातवाच्यः कर्तेति सिद्धमिति पूर्वपक्षसङ्क्षेपः ।

अत्राहुः—स एव हि शब्दस्यार्थो यः प्रकारान्तरेण न लभ्यते, 'अनन्यलभ्यश्शब्दार्थ' इति न्यायात् । अत एव न गङ्गापदस्य तीरमर्थः, लक्षणयैव प्रतिपत्तिसम्भवात् । अत एव च न वाक्यार्थे शक्तिः । एवं चाख्यातवाच्यभावना कर्तारं विनानुपपन्ना तमाक्षिपतीत्याक्षेपादेव कर्तुः प्रतिपत्तिसम्भवे किमिति तद्वाचकत्वमाख्यातस्य कल्पनीयम् ।

---

अभिहितं यत्कर्तृकारकं कर्मकारकं वा तद्बोधकविभक्तित्वादित्यर्थः । ननु—न प्रथमायाः अभिहितकारकवाचित्वं सम्भवति '**प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा**' इति प्रातिपदिकाद्यर्थमात्रे प्रथमाविधानात्, अत आह—**प्रातिपदिकेति** ।

**ननु** न सर्वत्र विभक्त्या लिङ्गसङ्ख्याप्रत्तिपतिस्सम्भवति । अलिङ्गनियतलिङ्गेषु प्रातिपदिकार्थमात्रप्रतीतेः इत्यस्वरसादाह—**केवलेति** । '**न केवला प्रकृतिः प्रयोक्तव्या**' इति न्यायादिति भावः । आख्यातस्य कर्तृवाचकत्वमुपसंहरति-**तस्मादिति** ।

सिद्धान्तयति-**अत्राहुरिति** । **अयं भावः**—सर्वत्रैव तावत् उच्चरितात् शब्दात् अनेकेऽर्थाः प्रतीयन्ते । न चैतावता सर्वेषां शब्दाभिधेयत्वं सम्भवति । '**अन्याय्यं चानेकार्थत्व**'मिति न्यायात् । अतः कचिदेव शक्तिः ; इतरेषां तु लक्षणादिना प्रतीतिरित्येवाभ्युपगन्तव्यम् । तद्यत्र शक्तिकल्पनामन्तरा प्रतीतिप्रयोगौ नावकल्पेते तत्रैव शक्तिः, यत्र त्वन्यविषयिण्यैव शक्त्या प्रतीतिप्रयोगौ अन्येषामुपपद्येते तत्र न कल्प्यते शक्तिः । यथा गङ्गापदस्य न तीरे शक्तिः, यथा वा सिंहपदस्य न माणवके शक्तिः । तदिह आख्यातश्रवणात् भावनाकर्तृतत्संख्यापुरुषोपग्रहकालविशेषाः प्रतीयन्ते । नैतेष्वेकेनापि भावना आक्षिप्यते । तथाहि-न तावत् कालसङ्ख्यादीनां तदाक्षेपकत्वम् । विनापि भावनां कालसंख्यादीनां सत्वात् । न च सङ्ख्यादीनां व्यभिचारेऽपि कर्तुरव्यभिचारात् तेन तदाक्षेपोऽस्त्विति वाच्यम्, कर्तुरप्रयतमानस्य पाकादौ कर्तृत्वस्यैवाऽसिद्धेः । तत्सिद्ध्यर्थं गम्यमानायाः प्रयत्नरूपाया भावनायाः तदपेक्षया प्राधान्यायोगात् । न चेष्टापत्तिः । '**भावप्रधानमाख्यातम्**' इति स्मृतिविरोधापत्तेः, विशिष्टे शक्तिकल्पनारूपगौरवप्रसङ्गाच्च । अतो लाघवात् भावनायामेव कृत्यपरपर्यायायां शक्तावक्धारितायां तया कर्तुराक्षेप इत्यन्यलभ्यत्वान्नाख्यातस्य कर्तृवाचकत्वमिति ।

**न च** कर्तुरिव कालादीनामपि तयैवाक्षेपसम्भवात् तेषामप्याख्यातवाच्यत्वानापत्तिरिति वाच्यम् । भावनया नियमेन कालसंख्यादिविशेषाणामनाक्षेपात् । दृश्यते हि भावना कालान्तरपुरुषान्तरोपग्रहान्तरेष्वपीति । **तीरमर्थः इति** । गङ्गायां घोषः इत्यत्रेत्यर्थः । **प्रतिपत्तिः** ज्ञानम् । **अत एव** अनन्यलभ्यस्यैव शब्दार्थत्वादेव । प्रत्येकं पदैः पदार्थोपस्थितौ समभिव्याहारादेव परस्परसम्बन्धरूपस्य वाक्यार्थस्य प्रतिपत्तिसम्भवेन न वाक्यस्य वाक्यार्थे शक्तिकल्पनमावश्यकमिति भावः । एतेन वाक्यस्य वा-

न च विनिगमनाविरहः। कृतिमान् हि कर्ता, एवं च कृतेरेव भावनापर्यायाया आकृत्यधिकरणन्यायेनाख्यातवाच्यत्वसम्भवे न तद्वतः कर्तुर्वाच्यत्वं कल्पनीयम्, गौरवप्रसङ्गात्। न च भावना कारकान्तरेणापि सम्बद्धा तदुज्झित्वा न झटिति कर्तारमाक्षिपतीति वाच्यम्। सा हि यथा नियमेन कर्त्रा संबद्धा न तथा करणादिकारकान्तरेण, तिष्ठतीत्यादिषु तया तदनाक्षेपात्। अतः प्रथमं सा कर्तारमेवाक्षिपति, न कारकान्तरम्। अत एव चाख्याताभिहिता सङ्ख्या न कारकान्तरेण सम्बध्यते, तस्य प्रथममनुपस्थितेः। अत एव तृतीयादिविभक्तीनां करणादिवाचित्वम्, भावनायास्तैस्सह नियतसम्बन्धाभावेन तया तेषां नियमेनानाक्षेपात्। आख्यातश्रवणात्प्रागपि तृतीयादिविभक्तिश्रवणे करणादिप्रतीतेर्जायमानत्वाच्च। न च शाब्दी सङ्ख्या कथमशाब्देन कर्त्रान्वेतीति वाच्यम्। कर्तुर्लक्षणाङ्गीकारात्। यथा च लक्षितं तीरं शाब्देन घोषेणान्वेति, एवं लक्षितः कर्ता एकत्वेनान्वेष्यति। अत एव देवदत्तः पचतीति सामानाधिकरण्यमुपपद्यते, कर्तुर्लक्षणात्। न च मुख्ये सम्भवति किमिति लाक्षणि (१) कत्वं स्वीकार्यमिति वाच्यम्। अनन्यलभ्यशब्दार्थत्वस्य व्यवस्थापितत्वात्। अन्यथा सिंहो देवदत्त इत्यपि सामानाधिकरण्यं मुख्यं स्यात्।

किं च आख्यातवाच्यः कर्तेति वादिनोऽपि मते देवदत्तः पचतीति सा-

---

क्यार्थेऽखण्डशक्तिमङ्गीकुर्वतां वैयाकरणानां मतमपि निरस्तं वेदितव्यम्। **आकृत्यधिकरणन्यायेनेति**। आकृतिः पदार्थो वा व्यक्तिर्वा पदार्थ इति विचार्य यत्र निर्णीतं प्रथमतृतीयान्तिमाधिकरणे तदधिकरणसिद्धेन **"नागृहीतविशेषणा बुद्धिः विशेष्यमुपसङ्क्रामति"** इति न्यायेनेत्यर्थः। **गौरवप्रसङ्गादिति**। विशिष्टे शक्तिकल्पने विशेष्येऽपि पदव्यापारप्रवृत्त्यावश्यकतया तत्कृतगौरवस्यावश्यापातादित्यर्थः। **तिष्ठतीत्यादिष्विति**। तिष्ठतीत्यत्र करणानाक्षेपात्, चलतीत्यादावकर्मकेषु कर्माभावात् आसनस्नानशयनादिषु अपादानसम्प्रदानाभावात् न नियमेन तेषां भावनया आक्षेप इत्यर्थः। **अत एव** कारकान्तरस्यानाक्षेपादेव। **तैः** करणादिकारकान्तरैः। **नियमेनानाक्षेपादिति**। एवं च भावनया यन्नियमेनाक्षिप्यते, तस्यैव वाच्यत्वानङ्गीकारेण करणादीनामतथात्वेन तेषां तृतीयादिवाच्यत्वमक्षतमेवेति भावः। **न च** दह्यमानगृहान्तर्गततण्डुलपूर्णकाष्ठमयकुसूलासन्नायां सोदकायां पात्र्यां कथञ्चित्पतितानां तण्डुलादीनामपि विनैव कर्तारं पाकसम्भवात् न नियमेन भावनया कर्तुराक्षेप इति वाच्यम्, तत्र पाकस्य धात्वर्थस्यकर्तारं विना कथञ्चिदुपपत्तावपि तस्य भावनात्वाभावात् भावनायाः प्रयत्नरूपायाः तत्राभावात्। **अत एव** कारकान्तरस्य प्रथममनाक्षेपादेव।

**ननु** सिंहो देवदत्त इत्यत्र देवदत्ते सिंहत्वस्य प्रत्यक्षबाधितत्वेन मुख्यसामानाधिकरण्यासम्भवात् सिंहनिष्ठक्रौर्यसजातीयक्रौर्यवत्त्वरूपं गौणं सामानाधिकरण्यमङ्गीकृतम्। अत्र तु मुख्यसामानाधिकरण्याङ्गीकरणे न किञ्चित् बाधकं इत्यत आह—**किञ्च**

---

१. कत्वी.

**मानाधिकरण्यं न मुख्यम् ; तन्मते आख्यातेन तृतीयावन्निष्कृष्टशक्तिमात्ररूपकर्तृकारकाभिधानात्, शक्तिमद्द्रव्यस्याकृत्यधिकरणन्यायेनानभिधानात्, देवदत्तशब्देन च द्रव्यमात्राभिधानात्, अतश्च भिन्नार्थनिष्ठत्वात्तन्मतेऽपि न मुख्यं सामानाधिकरण्यम्, किंतु लाक्षणिकमेवेति न कश्चिद्विशेषः।**

**न च 'लः कर्तरीति व्याकरणस्मृतिबलादाख्यातवाच्यः कर्तेति वाच्यम्। न हि वाच्यवाचकभावो व्याकरणस्मृत्यधीनः। तस्य न्यायसहितान्वयव्यतिरेकगम्यत्वात्। भवतु वा स्मृतिगम्यः, तथापि नेयं स्मृतिः कर्तुराख्यातवाच्यत्वे प्रमाणम्; किन्तु कर्तुरेकत्वे एकवचनात्मको लकारः, द्वित्वे द्विवचनात्मकः, बहुत्वे बहुवचनात्मक इत्यस्मिन्नर्थे प्रमाणम्, 'द्व्येकयोर्द्विवचनैकवचने, बहुषु बहुवचनमि'त्यनेनास्याः स्मृतेरेकवाक्यत्वात्।**

---

ति। **तृतीयावदिति**। कारकाणामेव क्रियान्वयात् तृतीयायाः कर्तृत्ववाचित्व एव क्रियान्वयो घटते, न तु तदाश्रयवाचित्व इत्यर्थः। **शक्तिमात्रेति**। मात्रपदेन तदाश्रयव्यावृत्तिः। **आकृत्यधिकरणन्यायेनेति**। **अयं भावः**-द्रव्यकारकवादिनो वैय्याकरणस्य पक्षेऽपि निश्शक्तिकस्य कारकत्वायोगात्, शक्तिविशिष्टस्य कारकत्वमभ्युपगन्तव्यम्। तथा च **'नागृहीतविशेषणा'** न्यायेन शक्तेः पूर्वं ज्ञानावश्यम्भावेन तत्रैव शब्दव्यापारोपरमात् विशिष्टे शक्तिकल्पनायां गौरवापत्तेः न शक्तिमद्द्रव्यस्याभिधानमिति। **भिन्नार्थनिष्ठत्वादिति**। देवदत्तशब्दस्य द्रव्यमात्रपरत्वस्योभयवादिसिद्धत्वात् आख्यातस्य शक्तिमात्रपरत्वस्य भवताप्यवश्याभ्युपगमनीयत्वाच्चेति भावः। एवं च भवन्मतेऽपि मुख्यसामानाधिकरण्यासम्भवेऽपि गौणसामानाधिकरण्यमङ्गीकृत्यैव यथा निर्वाहः कथंचित् कार्यः, एवं ममापि भविष्यतीति नात्र पर्यनुयोगावसर इत्याशयेनाह—**न कश्चिद्विशेष इति**।

इदानीं न्यायसिद्धविषये स्मृतिविरोधमुक्तमनूद्य परिहरति—**नचेति**। तत्रैव स्मृतिन्याययोः विरोध उद्भावनीयो यत्र स्मृतिन्यायौ समानविषयौ। अत्र तु न्यायस्यान्य एव विषयः—किं वाच्यं किं वाचकमिति। व्याकरणस्य तु अन्य एव विषयः—कः साधुशब्दः को वाऽपभ्रंश इति। एवं च साध्वसाधुशब्दमात्रविषयकस्य व्याकरणस्य शब्दार्थनिर्णायकेन न्यायेन सह विरोध एव नास्तीत्याशयेनाह—**न हीति**। तर्हि किमधीनः? अत आह—**तस्येति**। **न्यायेति**। **"अनन्यलभ्योऽर्थो वाच्यः, अन्यलभ्योऽर्थो गम्यः"** इति न्यायेत्यर्थः। अत एवोक्तं वार्तिककृता—**"वाच्यवाचकसम्बन्धो नाचार्यैरुपदिश्यते। अन्यथानुपपत्त्या हि व्यवहारात्स गम्यते"** इति। अभ्युपेतेऽपि स्मृतिगम्यत्वे न भवदिष्टसिद्धिरित्याह—**भवतु वेति**। **स्मृतिगम्य इति**। वाच्यवाचकभाव इति शेषः। **एकवाक्यत्वादिति**। **अयमाशयः—"सर्वाण्येव हि शास्त्राणि स्वप्रदेशान्तरैस्सह। एकवाक्यतया युक्तमुपदेशं वितन्वते"** इति न्यायेन **"लः कर्मणि"** इत्यस्य **"द्व्येकयोरि"** त्याद्येकवाक्यतावश्यमङ्गीकार्या, अन्यथा एकदेशभूतस्याऽस्य अर्थप्रतीतिजनकत्वमेव न स्यात्। न च वाच्यमिदमेकवाक्यताङ्गीकरणं व्याकरणे ऽदृष्टचरमिति। व्याकरणे प्रायेण संज्ञापरिभाषादिसूत्रेषु एकवाक्यताया एवाङ्गीकारात्। **नचैवं** एकवाक्यतामङ्गीकृत्य लकाराणां कर्त्रादिगतसङ्ख्यावाचित्वाङ्गी-

यत्तूक्तम्—कर्तुरनभिधाने देवदत्तेन पचतीति तृतीयाप्रसङ्गः–इति, तन्न; तृतीया हि कर्तुः प्रतिपत्त्यर्थं तद्गतसङ्ख्याप्रतिपत्त्यर्थं वा। तत्र कर्ता तु भावनाक्षेपादेव लभ्यत इति न तत्र तृतीयापेक्षा। तत्सङ्ख्या तु आख्यातेनैव प्रतीयत इति न तत्राप्यपेक्षा। यथाहुः–

सङ्ख्यायां कारके वा धोर्विभक्त्या हि प्रवर्त्यते।
उभयं चात्र तत्सिद्धं भावनातिङ्विभक्तितः॥ इति।

यत्र तु नाख्यातेन तद्गता सङ्ख्योच्यते तत्र भवत्येव तृतीया, यथा–देवदत्तेन ओदनः पच्यते इति। तस्मान्न कर्तुरनभिधाने किञ्चिद्दूषणमित्यलमतिविस्तरेण। प्रकृतमनुसरामः। तत्सिद्धस्त्रिविधः श्रुतिविनियोगः॥

( श्रुतेर्लिङ्गादितः प्राबल्यनिरूपणम् )

सेयं श्रुतिर्लिङ्गादिभ्यः प्रबलं प्रमाणम्। लिङ्गादिषु हि न प्रत्यक्षो विनियोजकशब्दोऽस्ति, किं तु कल्प्यः। यावच्च तैर्विनियोजकशब्दः कल्प्यते

---

करणं मुनित्रयोक्तिविरुद्धमिति शङ्कनीयम्। **"एकत्वादयो विभक्त्यर्थाः, कर्मादयोपि विशेषणत्वेन"** इति **"बहुषु बहुवचनम्"** इति सूत्रव्याख्यानावसरे वाक्यभाष्यकाराभ्यामुक्तत्वात्। न च कर्मादिगतसङ्ख्यावाचित्वेऽपि विशेषणीभूतकर्मादिवाचित्वमपि सिध्यतीति वाच्यम्, भावनया आक्षिप्तस्यानभिधेयस्यापि कर्तुः संख्योपलक्षणमात्रत्वात्। पूर्वोक्तवाक्यस्यापि तत्रैव तात्पर्यात्। एवं च आख्यातस्य कर्तृवाचित्वस्यैवासिद्धेः न तदादाय स्मृतिविरोधोद्भावनं युक्तमिति भावः। **तृतीयेति**। देवदत्तेनेति याऽऽपाद्यते तृतीया सेत्यर्थः। **भावनाक्षेपात्** भावनया आक्षेपात्। **सङ्ख्यायामिति**। कर्त्रधिकरणस्थवार्तिकमिदम्। **भावनातिङ्विभक्तित इति**। तृतीया हि संख्याविषयकं करणत्वविषयकं च ज्ञानं सम्पादयेत्। उभयमप्यत्र प्रमाणान्तरेण सिध्यति। भावनया कर्तुः तिङ्विभक्त्या संख्यायाश्च सिद्धत्वादित्यर्थः। **अलमतिविस्तरेणेति**। अधिकमवजिगमिषुभिः वार्तिकन्यायसुधादितोऽवगन्तव्यम्, विस्तरभयात्तु नेह प्रपञ्च्यत इति भावः। प्रसङ्गागतत्वमाख्यातस्य कर्तृवाचकत्वाभावनिरूपणस्य ध्वनयति—**प्रकृतमिति**।

( श्रुतेः लिङ्गादितः प्राबल्यनिरूपणम् )

एवं श्रुतिं निरूप्य तद्गतं लिङ्गाद्यपेक्षया प्राबल्यं निरूपयति—**सेयमिति**। यद्यपि मूले श्रुत्यादिप्रमाणषट्कनिरूपणं परिसमाप्यैव तद्गतप्राबल्यदौर्बल्यनिरूपणं कृतं, तथाप्यत्र श्रुतौ निरूपितायां तद्गतप्राबल्यदौर्बल्यशङ्काया उत्थितत्वात्तस्याश्चोपेक्षानर्हत्वादत्रैव तन्निरूपणमिति ध्येयम्। प्राबल्ये हेतुमाह—**लिङ्गादिष्विति**। श्रुतिव्यतिरिक्ते लिङ्गादिप्रमाणपञ्चके इत्यर्थः। **अयमाशयः**—न केवलं सामर्थ्यं समभिव्याहारादिकं वा दृष्ट्वा अङ्गताबुद्धिरुत्पद्यते, किं तु या द्वितीयातृतीयादिः साध्यत्वकरणत्वादिबोधिका तयैव सेति अवश्यं लिङ्गादिभिः स्वान्यथानुपपत्त्या श्रुतिः कल्पनीया, तदपि पूर्वपूर्वप्रमाणकल्पनद्वारैवेति तत्तन्निरूपणावसरे वक्ष्यते। तद्यत्र लिङ्गादिविरुद्धा श्रुतिः तत्र यावत् लिङ्गेन श्रुतिं, वाक्येन लिङ्गश्रुती, प्रकरणादिभिश्च स्वस्वपूर्वप्रमाणानि कल्पयित्वा विनियोगः क्रियते, ततः पूर्वमेव प्रत्यक्षया श्रुत्या प्रमाणान्तरनिरपेक्षया अन्यत्र विनियोगः कृत इति तावतैव

तावत्प्रत्यक्षया श्रुत्या विनियोगस्य कृतत्वात्तेषां कल्पकत्वशक्तिर्विहन्यत इति श्रुतेः प्राबल्यम् ।

अत एव "ऐन्द्र्या गार्हपत्यमुपतिष्ठत" इत्यत्र यावल्लिङ्गादैन्द्र्या इन्द्रोपस्थाना(१)ङ्गत्वं कल्प्यते तावत् प्रत्यक्षया श्रुत्या गार्हपत्योपस्थाना(२)ङ्गत्वं क्रियत इति(३)ऐन्द्री गार्हपत्योपस्थानाङ्ग(४)म् ।

( लिङ्गनिरूपणम् )

सामर्थ्यं लिङ्गम् । यदाहुः—

'सामर्थ्यं सर्वभावानां लिङ्गमित्यभिधीयते' इति ।

तेनाङ्गत्वं, यथा—(५)'बर्हिर्देवसदनं दामि' इत्यस्य लवनाङ्गत्वम् । स हि लवनं प्रकाशयितुं समर्थः । तच्च लिङ्गं द्विविधम्—सामान्यसम्बन्धबोधकप्रमाणान्तरानपेक्षं तदपेक्षं च । तत्र यदन्तरेण यन्न सम्भवत्येव तस्य तदङ्गत्वं तदनपेक्षं केवललिङ्गादेव । यथा—अर्थज्ञानस्य कर्मानुष्ठानाङ्गत्वम् । न ह्यर्थज्ञानमन्तरेणानुष्ठानं सम्भवति ।

---

तदाकाङ्क्षायाश्शान्तत्वेन कल्पनामूलोच्छेदात् न तेषां प्रवृत्तिरिति श्रुतेः प्राबल्यमिति ।

**अत एव** लिङ्गापेक्षया श्रुतेः प्राबल्यादेव । **ऐन्द्र्या गार्हपत्यमुपतिष्ठत इति ।** (६)'**कदा चन स्तरीरसी**' त्यनया इन्द्रप्रकाशिकया ऋचा गार्हपत्यसंज्ञकं अग्निमुपतिष्ठेतेत्यर्थः । **उपस्थानं** मन्त्रकरणकाभिधानम् । **अङ्गत्वं कल्प्यत इति** । अनया '**इन्द्रमुपतिष्ठेत**' इत्यङ्गत्वबोधकश्रुतिः कल्प्यत इत्यर्थः । मन्त्रस्य प्रकरणपाठं इन्द्रप्रकाशनरूपसामर्थ्यं च पर्यालोच्य यावता—अनेन मन्त्रेणेन्द्रोपस्थानं भावयेत्—इति श्रुतिः कल्प्यते, ततः पूर्वमेव प्रत्यक्षया क्लृप्तया गार्हपत्यमिति द्वितीयाश्रुत्या गार्हपत्याङ्गत्वमवगतमिति मन्त्राकाङ्क्षायास्तावतैव शान्तत्वेन निवृत्तव्यापारं लिङ्गं न पुनः प्रवर्तत इति गार्हपत्योपस्थानाङ्गत्वमेव मन्त्रस्य, नेन्द्रोपस्थानाङ्गत्वमिति भावः । **क्रियत** इति बोध्यत इत्यर्थः ।

( लिङ्गनिरूपणम् )

लिङ्गं निरूपयति—**सामर्थ्यमिति** । शक्तिरित्यर्थः । तत्र वृद्धसम्मतिमाह—**सामर्थ्यमिति** । **सर्वभावानां** सर्वपदार्थानाम् । एवं लिङ्गद्वयसाधारण्येन लक्षणमुक्त्वा शब्दगतस्य लिङ्गस्यैव विशेषविचारसम्भवात् तदर्थं तस्यैव विनियोजकत्वमुपपादयति—**तेनेति** । लिङ्गद्वयान्तर्गतेन शब्दगतेन लिङ्गेनेत्यर्थः । **बर्हिरिति** । देवोपसदनयोग्यं बर्हिः खण्डयामीत्यर्थः । **अस्य लवनाङ्गत्वमिति** । बर्हिर्लवनप्रकाशनरूपमन्त्रसामर्थ्यकल्पितया-अनेन मन्त्रेण बर्हिर्लवनं सम्पादयेत् इति श्रुत्या अङ्गत्वं बोध्यत इत्यर्थः । **तच्चेति** । यदुभयात्मकं तदित्यर्थः । **सामान्येति** । यत् प्रमाणं सामान्यतो यागादिसम्बन्धमात्रं बोधयति न विशेषं, तत् सामान्यसम्बन्धबोधकप्रमाणमित्युच्यते । आद्यमुदाहरति-**तत्र यदिति । अर्थज्ञानस्येति** । वैदिकवाक्यार्थज्ञानस्येत्यर्थः । **न हीति** । विधिवाक्यार्थज्ञानमन्तरा कर्मस्वरूपस्यैवाज्ञानात् , मन्त्रार्थज्ञानमन्तरा अनुष्ठेयार्थविषयकनियतस्मरणा-

---

१. २. नार्थं  ३. द्र्या.  ४. ङ्गत्वं.  ५. बर्हिर्देवसदनमारभे' इति तैत्तिरीयो मन्त्रः ।।
६ कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते ।

यदन्तरेण यत्सम्भवति तस्य तदर्थत्वं तदपेक्षम्, यथा–उक्तस्य मन्त्रस्य लवनाङ्गत्वम्; लवनं हि मन्त्रं विनाऽप्युपायान्तरेण स्मृत्वा कर्तुं शक्यम्, अतो न मन्त्रो लवनस्वरूपार्थस्सम्भवति, किन्त्वपूर्वसाधनीभूतलवनप्रकाशनार्थः। तत्त्वं च न सामर्थ्यमात्रादवगम्यते, लवनप्रकाशनमात्रे सामर्थ्यात्। अतोऽवश्यं प्रकरणादि सामान्यसम्बन्धबोधकं स्वीकार्यम्। दर्शपूर्णमासप्रकरणे हि मन्त्रस्य पाठादेवमवगम्यते–अनेन मन्त्रेण दर्शपूर्णमासापूर्वसम्बन्धि किञ्चित् प्रकाश्यते–इति। अन्यथा प्रकरणपाठवैयर्थ्यप्रसङ्गात्। किं तदपूर्वसम्बन्धि प्रकाश्यमित्यपेक्षायां सामर्थ्याद्बर्हिर्लवनमित्यवगम्यते। तद्धि बर्हिस्संस्कारद्वाराऽपूर्वसंबन्धीति मन्त्रस्य सामर्थ्यात्तदर्थत्वे सति नानर्थक्यं प्रसज्यते। तस्मात् 'बर्हिर्देवसदनं दामी' त्यस्य प्रकरणाद्दर्शपूर्णमाससम्बन्धितयावगतस्य सामर्थ्याल्लवनाङ्गत्वमिति सिद्धम्।

पूषानुमन्त्रणमन्त्राणां तु यागानुमन्त्रणसमाख्यया यागसामान्यसम्बन्धेऽवगते सामर्थ्यात्पूषयागसम्बन्धोऽवगम्यते।

ननु तेषां यावत्समाख्यया पूषयागेन सामान्यसंबन्धोऽवगम्यते, तावत् प्रकरणाद्दर्शपूर्णमासाभ्यामेव सामान्यसम्बन्धोऽवगतः, समाख्यातस्तस्य बलीयस्त्वात्। अत एव पौरोडाशिकमिति समाख्याते ब्राह्मणे आम्नातानामपि

---

सम्भवाच्चेति भावः।

द्वितीयमुदाहरति—**यदन्तरेणेति**। **तदपेक्षं** प्रमाणान्तरसापेक्षम्। तदेवोपपादयति—**लवनं हीति**। **उपायान्तरेण** ध्यानेन, सन्निहितपुरुषवचनेन वेत्यर्थः। **स्मृत्वा कर्तुमिति**। एतेन स्मरणपूर्वकमेवानुष्ठानमिति सूचितम्। उक्तं ह्यापस्तम्बेन–"**आचतुर्थात् कर्मणोऽभिसमीक्षेतेदं करिष्यामीदं करिष्यामीति**" इति। तत्त्वञ्च अपूर्वसाधनत्वं च। **सामर्थ्यमात्रात्** लिङ्गमात्रात्। दामीत्यस्य लुनामीत्येतावन्मात्रार्थत्वात् अपूर्वसाधनत्वकस्य ततोऽप्रतीतेरित्यर्थः। प्रकरणादीत्यादिपदेन स्थानसमाख्ये गृह्येते। यद्यप्यत्र लवनमन्त्रे प्रकरणमेव सामान्यसम्बन्धबोधकं प्रमाणं, तथापि स्थानसमाख्ययोरपि क्वचित् सामान्यसम्बन्धबोधकत्वं सम्भवतीत्येतत् स्फोरयितुमादिपदम्। एवं सामान्यतः सम्बन्धेऽवगते अनन्तरं विशेषजिज्ञासायां लिङ्गं प्रवर्तते, तेन च बर्हिर्लवनार्थत्वं बोध्यत इति सामान्यसम्बन्धबोधकप्रमाणान्तरसहकृतस्यैव लिङ्गस्य विनियोजकत्वमित्याह-**किं तदित्यादिना**। **प्रकरणादिति**। सामान्यसम्बन्धबोधकादिति शेषः।

एवं प्रकरणरूपसामान्यसम्बन्धबोधकप्रमाणसापेक्षं लिङ्गं निरूप्येदानीं समाख्यारूपसामान्यसम्बन्धबोधकप्रमाणविशिष्टं लिङ्गं निरूपयति—**पूषेति**। **पूष्णोऽहं देवयज्यया पुष्टिमान् पशुमान् भूयासम्** इत्यादीनां शाखान्तराम्नातानामित्यर्थः। अत्र यद्यपि एक एव मन्त्रः पूषदेवताकः पठितः, तथापि देवतान्तरयुक्तानां मन्त्रान्तराणां प्रकृतासम्बद्धानां सत्वात् तानादाय बहुवचनमिति न दोषः। अत्र '**पूषाद्यनुमन्त्रणमन्त्राणा**' मिति क्वाचित्कः पाठः समीचीनः।

**यागानुमन्त्रणसमाख्ययेति**। **यागमनु** यागानन्तरं उच्चार्यमाणत्वात् **यागानुमन्त्रणम्**, तन्नाम्नेत्यर्थः। **तस्य** प्रकरणस्य। **पौरोडाशिकमिति** पौरोडाशिकं

प्रयाजानां प्रकरणात् सान्नाय्योपांशुयाजाङ्गत्वमपीत्युक्तम् ।

किं च यागानुमन्त्रणसमाख्ययापि न पूषयागेन सामान्यसंबन्धोऽवगम्यते, किं तु यागमात्रेण; प्रकरणेन तु दर्शपूर्णमासाभ्यामेव विशेषसंबन्धोऽवगम्यते । अतः प्रकरणाज्झटिति तत्सम्बन्धस्यैवावगतत्वात्तदर्थत्वमेव तेषां युक्तम्, पूषेतिशब्दस्य पुष्णातीति व्युत्पत्त्या कथञ्चिदग्न्याद्यभिधायित्वात् ।

मैवम् । पूषानुमन्त्रणमन्त्रे हि श्रूयमाण एवमवगम्यते—पूषाभिधानसमर्थत्वादयं मन्त्रस्तत्प्रकाशनार्थः—इति, लवनमन्त्र इव लवनप्रकाशनार्थः । न तत्र प्रकरणाद्यपेक्षा, येन तेषामुपजीव्यत्वेन प्राबल्यं स्यात् । प्रकरणात्तु दर्शपूर्णमासार्थत्वे

---

काण्डमिति याज्ञिकैर्व्यवह्रते वेदभागे इत्यर्थः । तैत्तिरीयसंहितायां द्वितीयकाण्डे पञ्चमषष्ठौ प्रपाठकौ पौरोडाशिकं काण्डमिति व्यवह्रियेते । तत्र षष्ठे प्रपाठके प्रयाजा आम्नाताः । तेषां न समाख्यया पुरोडाशयागरूपाग्नेयाग्नीषोमीयमात्रार्थत्वम् । किन्तु समाख्यापेक्षया प्रकरणस्य प्राबल्यात्तदनुरोधेन यागषट्काङ्गत्वमिति ।

**अयमाशयः**—सन्ति दर्शपूर्णमासयोः **षट्** यागाः—आग्नेयद्वयं, अग्नीषोमीयः, उपांशुयाजः, सान्नाय्यं चेति । आग्नेयद्वयमग्नीषोमीययागश्च पुरोडाशयागाः, पौरोडाशिकसमाख्याते ब्राह्मणे विहितानां धर्माणां पुरोडाशयागाङ्गत्वं समाख्यया । तत्रैव पठिताः प्रयाजानूयाजादयः । अतस्तदन्तर्गतानां तेषां तया तन्मात्राङ्गत्वप्राप्तौ तद् बाधित्वा प्रकरणात् षड्यागाङ्गत्वमिति । **उक्तमिति** । बलाबलाधिकरणे वार्तिककारैरिति शेषः ।

एतावता समाख्यया बोधितस्यापि प्रकरणेन बाध इत्यभिधाय इदानीं समाख्यया पूषयागसम्बन्धोऽपि न बोधयितुं शक्यत इत्याह—**किञ्चेति** । **यागमात्रेणेति** । यागानुमन्त्रणसमाख्या तावत् सामान्यतो यागसम्बन्धमेव बोधयेत्, न यागविशेषसम्बधम्; विशेषबोधकपदाभावादिति भावः । **विशेषेति** । प्रकरणस्य यागविशेषसम्बद्धत्वादिति भावः । **तत्सम्बन्धस्यैव** यागविशेषरूपदर्शपूर्णमाससम्बन्धस्यैव । **ननु** सर्वमिदं तदोपपद्येत, यदि स्यात् पूषदेवताकं कर्म दर्शपूर्णमासप्रकरणे, तदेव तु नास्ति, अतः कथं प्रकरणे निवेश इत्यत आह—**पूषेति** । पोषकत्वस्य सर्वत्र विद्यमानत्वेन योगरूढ्यङ्गीकरणे गौण्या वृत्त्या अग्न्याद्यभिधायित्वाङ्गीकरणे वा क्लेशं स्फोरयति—**कथञ्चिदिति** । उत्कर्षापेक्षया तत्कल्पनमपि नातीव दोषमावहतीत्याशयः ।

एवं पूर्वपक्षयित्वा भवेदेवं यदि समाख्यया परं विनियोगः, न चेह तथा; किन्तु प्रथमतो मन्त्रश्रवणे तस्य पूषदेवताप्रकाशकत्वेन तत्सम्बन्धित्वेऽवगते तावन्मात्रप्रकाशने प्रयोजनाभावात् पूषादेः लोकेऽपि सत्वेन व्यभिचाराच्चानर्थक्यप्रसक्तौ अपूर्वसम्बन्धित्वे बोधनीये तद्ग्राहकप्रमाणान्तरगवेषणायां समाख्ययाऽपूर्वसम्बन्धित्वमात्रसमर्पणं क्रियत इति समाख्याया लिङ्गोपष्टब्धत्वेन न प्रकरणबाध्यत्वं सम्भवतीति सिद्धान्तमाह—**मैवमिति** । **लवनमन्त्रः** बर्हिर्लवनमन्त्रः । **तत्र** स्वार्थप्रकाशने । **तेषां** प्रकरणस्थानसमाख्यानाम् । किन्तु प्रकरणमेव स्वस्य विनियोजकत्वसिद्ध्यर्थं लिङ्गादिकमपेक्षत इत्याह—**प्रकरणात्त्विति** । **दर्शपूर्णमासार्थत्व इति** । पूषाद्यनुमन्त्रणमन्त्राणामिति शेषः ।

तस्य वाक्यलिङ्गश्रुतिकल्पनेन विनियोजकत्वात् लिङ्गस्योपजीव्यत्वेन प्राबल्यम् । अतो लिङ्गात्पूषप्रकाशनार्थत्वेऽवगते तन्मात्रप्रकाशनमनर्थकमित्यपूर्वसाधनपूषप्रकाशनार्थत्वं वक्तव्यम् । किं तदपूर्वमित्यपेक्षायां यागानुमन्त्रणसमाख्यानुगृहीताल्लिङ्गात् पूषयागापूर्वसम्बन्धिदेवताप्रकाशनार्थोऽयमित्यवगम्यते । अतो यद्यपि समाख्यातः प्रकरणं बलीयः तथाऽपि तस्य लिङ्गेन बाधितत्वात् समाख्याया दुर्बलाया अपि प्रबललिङ्गाश्रितत्वेन प्राबल्यात् सैव सामान्यसम्बन्धे प्रमाणं सम्भवति, दुर्बलस्यापि प्रबलाश्रितस्य प्राबल्यात् ।

अत एव श्रुत्यपेक्षया दुर्बलाया अपि स्मृतेराचमनरूपप्रबलपदार्थाश्रितत्वेन प्राबल्यात्पदार्थधर्मगुणभूतश्रौतक्रमत्यागेन वेदकरणानन्तरं क्षुते आचमनमेव कार्यमित्युक्तम् ।

---

**तस्य** प्रकरणस्य । **वाक्यलिङ्गश्रुतिकल्पनेन** । बलाबलाधिकरणे उत्तरोत्तरप्रमाणानां पूर्वपूर्वप्रमाणकल्पनेनैव विनियोजकत्वस्योक्तत्वादिति भावः । **तन्मात्रप्रकाशनं** अपूर्वसाधनत्वमन्तरा पूषस्वरूपमात्रप्रकाशनम् । **अपूर्वसाधनपूषप्रकाशनार्थत्वमिति** । अपूर्वस्यादृष्टरूपत्वेनैतदन्तरा तदुत्पत्तौ प्रमाणाभावेन तदर्थत्व आनर्थक्याभावादिति भावः । **तस्य** प्रकरणस्य ।

**अत एव** दुर्बलस्यापि प्रबलाश्रितस्य प्राबल्यादेव । **दुर्बलाया इति** । **श्रुतेः** प्रत्यक्षत्वेन स्वतः प्रामाण्यात् स्मृतेः पौरुषेयत्वेन स्वतः प्रामाण्यायोगेन मूलभूतश्रुतिकल्पनेनैव प्रामाण्यस्य वक्तव्यत्वात् श्रुत्यपेक्षया स्मृतेर्दौर्बल्यमिति भावः । **स्मृतेरिति** । **'क्षुतजृम्भणादिनिमित्ते आचान्तेन कर्म कर्तव्यम्'** इति स्मृतेरित्यर्थः । **श्रौतक्रमेति** । **'वेदं कृत्वा वेदिं करोती'**ति श्रुतिविहितवेदिकरणनिष्ठवेदकरणानन्तर्यरूपक्रमेत्यर्थः । **अयमत्र विषयः**—दर्शपूर्णमासप्रकरणे श्रुतेन **'वेदं कृत्वा वेदिं करोती'ति** वाक्येन वेदकरणानन्तर्यं वेदिकरणे विधीयते । अथ च स्मरन्ति **'क्षुतजृम्भणादिनिमित्ते आचान्तेन कर्म कर्तव्यम्'** इति । **वेदो** नाम शयानवत्सभुग्नजान्वाद्याकृतिविशिष्टो दर्भमुष्टिविशेषः । सम्मार्जनखननोद्धननादिभिः संस्कारविशेषैः संस्कृता भूमिः **वेदिः** । तद्यदि वेदकरणानन्तरं क्षुयात् तदा प्राप्तमाचमनं बाधित्वा क्रमानुग्रहार्थं वेदिकरणमेवानुष्ठेयम्, उत क्रमं बाधित्वा आचमनमिति संशयः । तत्र क्रमस्य प्रबलश्रुतिबोधितत्वेन प्राबल्यात् स्मार्तमाचमनं बाधित्वा वेदिकरणमेवानुष्ठेयमिति पूर्वः पक्षः । यद्यपि स्मृत्यपेक्षया श्रुतिः प्रबला तथापि श्रुतिबोधितस्य क्रमस्यानुष्ठेयपदार्थगतत्वेन पदार्थगुणत्वात् दौर्बल्यम्; स्मृतेः दुर्बलत्वेऽपि तद्बोधितस्याचमनस्य स्वतः पदार्थत्वेन प्राबल्यम् । न ह्यहिनकुलवत् स्वरूपेण श्रुतिस्मृत्योर्विरोधः, विरुद्धप्रमेयप्रतिपादकतयैव सः । तद्यदि प्रमेयपर्यालोचनापुरस्सरं तद्गतो विरोध आलोच्यते, तदैव तद्गतप्राबल्यमप्यवगतं भवतीति प्रथमोपस्थितत्वात् प्रमाणबलाबलापेक्षया प्रमेयबलाबलस्यैव ज्यायस्त्वेन क्रमं बाधित्वापि प्रबलस्याचमनस्यैवानुष्ठानमिति राद्धान्तः । **इत्युक्तमिति** ।

यदाहुः—

अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः।
दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः॥ इति।

यत्तु—पूषेति शब्दः कथञ्चिदग्न्याद्यभिधायीति—तन्न; तस्य "अदन्तको हि (स)" इत्यादिवाक्यशेषेण वैदिकप्रसिद्ध्या चाऽर्थविशेषे रूढत्वात्, रूढेश्चावयवार्थालोचनसापेक्षाद्योगात् बलीयस्त्वात्; अत एव "वर्षासु रथकारोऽग्नीनादधीत" इत्यत्र रथकारशब्देन सौधन्वनापरपर्यायो वर्णविशेष उच्यते, रूढेः प्राबल्यात्; न तु रथं करोतीति व्युत्पत्त्या द्विजातयः, योगस्य दौर्बल्यादित्युक्तं षष्ठे।

तस्माद्युक्तं समाख्यया सामान्यसम्बन्धेऽवगते सामर्थ्यात्पूषयागसम्बन्धः पूषानुमन्त्रणमन्त्राणामिति।

यथाहुः—

यागानुमन्त्रणानीति समाख्या(१)क्रतुयोजिका।
तस्माच्छक्त्यनुरोधेन प्राप्तिस्तद्दैवते क्रतौ॥ इति।

---

प्रथमतृतीयचतुर्थे शिष्टाकोपाधिकरण इति शेषः। दुर्बलस्यापि प्रबलाश्रितस्य प्रबलबाधकत्वे वार्तिकं प्रमाणयति—**अत्यन्तेति**। स्पष्टोऽर्थः।

**वाक्यशेषेणेति**। 'पूषा प्रपिष्टभाग'इति वाक्यस्य प्रपिष्टद्रव्यविधायकस्य शेषभूतेनेत्यर्थः। व्रीहियवादिचूर्णं **प्रपिष्टम्**। स भागः प्रदेयं हविः, यस्य स **प्रपिष्टभागः**। अग्न्यादीनां क्वचिदप्यदन्तकत्वाश्रवणात्। अग्न्यादिभिन्नदेवताविशेषवाचक एवायं पूषशब्द इत्यर्थः। **वैदिकप्रसिद्ध्येति**। वैदिकानां अग्न्यपेक्षया भिन्न एव देवताविशेषे पूषशब्दप्रयोगादित्यर्थः। योगस्य दौर्बल्ये बीजमुक्तम**वयवार्थेति**। **सौधन्वनेति**। अनेन "**माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात्। शूद्रायां करणो वैश्यात्**"।

"**माहिष्येण करण्यान्तु रथकारः प्रजायते**"

इत्युक्तो यो रथकारः स नात्र ग्रहणमर्हति, तस्य सौधन्वनशब्दवाच्यत्वाभावात्। किन्तु

"**व्रात्यात्तु जायते वैश्यात् सुधन्वाचार्य एव च।**
**मारूषश्च विजन्मश्च मैत्रस्सात्वत एव च॥**"

इति प्रतिपादितस्यैव त्रैवर्णिकात् किञ्चित् न्यूनस्य जातिविशेषस्य ग्रहणमिति ध्वनितम्। **षष्ठ इति**। प्रथमपादे रथकाराधिकरण इति शेषः। **सामार्थ्यात्** लिङ्गात्।

उक्तमुपसंहरति—**तस्मादिति**। तत्र वार्तिकं प्रमाणयति—**यथाहुरिति**। **क्रतुयोजिकेति**। क्रतुना सह सामान्यसम्बन्धं बोधयतीत्यर्थः। मन्त्राणाममीषां यागानुमन्त्रणानीति समाख्या वर्तते। सा च यागसम्बन्धमन्तराऽनुपपद्यमाना यागसम्बन्धमात्रमवगमयति—यागेन केनचित्सम्बद्धा अमी मन्त्रा—इतीति भावः। **तस्मात्** एवं सामान्यसम्बन्धेऽवगमिते तदनन्तरम्। **शक्त्यनुरोधेन** लिङ्गानुरोधेन। **तद्दैवते**

---

१. क्रतुबोधिका. क्रतुयोजिनी इति च मुद्रित पुस्तके।

**तत्सिद्धं प्रमाणान्तरसिद्धसामान्यसम्बन्धस्य पदार्थस्य विनियोजकं लिङ्गमिति ।**

**तत्र मन्त्रविनियोजकं लिङ्गं मुख्य एवार्थे विनियोजकं, न गौणे । मुख्यार्थस्य प्रथममुपस्थितत्वेन तत्रैव(१) विनियोगबुद्धौ पर्यवसन्नायां पुनर्गौणेऽर्थे विनियोगकल्पनायां गौरवप्रसङ्गात् । अत एव "बर्हिर्देवसदनं दामी"ति मन्त्रः सामर्थ्यात्कुशलवनाङ्गम्, तेषां मुख्यत्वात्, नोलपराजिलवनाङ्गमित्युक्तम् ।**

( लिङ्गस्य वाक्यादितः प्राबल्यनिरूपणम् )

**तदिदं लिङ्गं वाक्यादिभ्यो बलवत् । तेषां हि न साक्षाद्विनियोजकत्वम्, किं तु लिङ्गं श्रुतिं च कल्पयित्वा । न चासमर्थस्य श्रुतिं कल्पयित्वा विनियोगकल्पना सम्भवतीति सामर्थ्यस्यापि कल्प्यत्वेनोपजीव्यत्वात् । अतस्तैर्यावत्सामर्थ्यं कल्पयित्वा श्रुतिः कल्प्यते तावदेवं क्लृप्तेन सामर्थ्येन श्रुतिः कल्पयित्वा विनियोगः क्रियते इति तस्य प्राबल्यम् । अत एव 'स्योनं ते सदनं**

---

मन्त्रप्रतिपाद्यपूषदेवतादिविशिष्टे । **प्राप्तिरिति** । मन्त्राणामिति शेषः । अङ्गत्वेन सम्बन्ध इत्यर्थः ।

एवं सामान्यसम्बन्धबोधकप्रमाणान्तरसापेक्षं लिङ्गमुपवर्ण्यानन्तरं लिङ्गस्य 'मुख्येऽर्थे विनियोजकत्वं वक्तुमारभते--**तत्रेति** । लिङ्गद्वयमध्य इत्यर्थः । **मन्त्रविनियोजकमिति** । अर्थगतस्य लिङ्गस्य विशेषविचारासहत्वादिति भावः । शक्त्या प्रतिपादितोऽर्थो मुख्यः । गौण्यादिना प्रतिपादितो गौणः । गौणार्थे विनियोजकत्वाभावे हेतुमाह--**मुख्यार्थस्येति । गौरवप्रसङ्गादिति । अयमाशयः**—सर्वत्र प्रकरणपठितमन्त्रगताकाङ्क्षान्यथानुपपत्त्या विनियोगः कल्प्यते । तद्यत्र गौणेऽर्थे विनियोगः कल्पयितुमारभ्यते तत्र मुख्यार्थप्रतिसन्धानमन्तरा गौणार्थस्य बुद्धावनारोहात् प्रथमं मुख्यार्थप्रतिपत्त्यावश्यकतायां प्रथमोपस्थिते मुख्यार्थ एव मन्त्रस्य विनियोगोपपत्तौ तावतैव मन्त्राकाङ्क्षायाश्शान्तत्वेन कल्पनामूलोच्छेदात् पुनरपि गौणेऽर्थे विनियोगकल्पनेऽनाकाङ्क्षितविधानरूपं गौरवं प्रसज्येतेति । **न च** गौणार्थस्यापि स्मर्तव्यतया स्मारकापेक्षासद्भावात् तदनुरोधेन तत्रापि विनियोगः कल्प्यतामिति वाच्यम् । गौणार्थस्य ध्यानाद्युपायान्तरेणापि स्मृतिसम्भवेन नियमेन मन्त्रानपेक्षणात् । **तेषां** कुशानाम् **उलपः** शुष्कं बर्हिः, उशीरतृणं वा । **इत्युक्तमिति** । तृतीयद्वितीयप्रथमे लिङ्गाधिकरण इति शेषः ।

( लिङ्गस्य वाक्यादितः प्राबल्यनिरूपणम् )

एवं लिङ्गं निरूप्य तद्गतं वाक्यादिभ्यः प्राबल्यं निरूपयति--**तदिदमिति** । तत्र हेतुमाह--**तेषां हीति । न साक्षादिति** । एतच्चास्माभिः पूर्वमेव निरूपितम् । नच साक्षात् श्रुतिकल्पनमपि सम्भवतीत्याह-**न चेति । तस्य** लिङ्गस्य । **स्योनं त इति** । दर्शपूर्णमासप्रकरणे श्रुतोऽयं मन्त्रः । हे पुरोडाश **स्योनं** सुखकरं ते तव स्थानं **करोमि** ।

---

१. विनियोजकतायां

करोमि घृतस्य धारया सुशेवं कल्पयामि'(१) इत्यस्य सदनाङ्गत्वं लिङ्गात्, न तु वाक्यात् पुरोडाशप्रतिष्ठापना(२)ङ्गत्वम्, तस्य दौर्बल्यादिति ॥

( वाक्यनिरूपणम् )

समभिव्याहारो वाक्यम्। समभिव्याहारो नाम साध्यत्वादिवाचकद्वितीयाद्यभावे वस्तुतः शेषशेषिणोस्सहोच्चारणम्। यथा 'यस्य पर्णमयी जुहूर्भवति न(स पापꣳ श्लोकꣳ शृणोति' इति। अत्र हि न द्वितीयादिविभक्तिः श्रूयते, केवलं पर्णताजुह्वोस्समभिव्याहारमात्रम्। तस्मादेव च पर्णताया जुह्वङ्गत्वम्। न चानर्थक्यम्, जुहूशब्देनापूर्वलक्षणात्। तदयं वाक्यार्थः—पर्णतया अवत्तहविर्धारणद्वारा यदपूर्वसाधनं तद्भावयेत्—इति। एवं च पर्णतया यदि जुहूः क्रियते तदेव तत्साध्यमपूर्वं भवति नान्यथेति गम्यते इति

---

घृतस्य धारया सुशेवं सुखसेवनीयं तत् कल्पयामि, तस्मिन् सदने उपविश हे व्रीहीणां मेध सारभूत शोभनमनास्सन् अमृते मरणरहिते स्थाने प्रतिष्ठितो भवेति मन्त्रार्थः। सदनाङ्गत्वमिति। सदनकरणाङ्गत्वमित्यर्थः। अयमभिसन्धिः—पूर्वार्धे सदनं प्रकाशयति। उत्तरार्धं तु सादनम्। तद्यदि तस्मिन्निति उत्तरार्धस्थतच्छब्दस्य पूर्वार्धसापेक्षत्वात् एकवाक्यत्वं परिकल्प्यते तदा उभयोरेकवाक्यत्वात् उभयोरप्यर्धयोस्सदने, सादने, उभयत्र वा विनियोगः स्यात्, तद्बाधित्वा लिङ्गेन पूर्वार्धस्य सदनकरणाङ्गत्वमेवेति। पुरोडाशप्रतिष्ठापनाङ्गत्वमिति। इदमुपलक्षणं उभयाङ्गत्वस्यापि ॥

( वाक्यनिरूपणम् )

वाक्यं निरूपयति—समभीति। श्रुत्यादावपि समभिव्याहारसत्त्वात् तत्रातिप्रसङ्गवारणार्थं समभिव्याहारपदार्थमाह—समभिव्याहारो नामेति। साध्यत्वादित्यादिपदेन प्रथमेन साधनत्वादेः द्वितीयेन च तृतीयादेः परिग्रहः। शेषशेषिणोः अङ्गाङ्गिनोः। तद्वाचकपदयोरिति यावत्। एवं च यत्र शेषशेषिणोस्सहोच्चारणमात्रेणाङ्गाङ्गिभावोऽवगम्यते तत्र वाक्यीयो विनियोगः। यत्र द्वितीयादिकमप्यस्ति तत्र सत्यपि समभिव्याहारे 'प्रधानेन व्यपदेशा भवन्ती'ति न्यायेन श्रौतो विनियोग इति ध्येयम्। पर्णमयी पलाशवृक्षनिर्मिता। पलाशवृक्षस्य च पर्णशब्दवाच्यत्वं-'तृतीयस्यामितो दिवि सोम आसीत्। तं गायत्र्याहरत्। तस्य पर्णमच्छिद्यत। तत् पर्णोऽभवत्। तत् पर्णस्य पर्णत्वम्' इत्यर्थवादतोऽवगन्तव्यम्। तस्मादेव वाक्यादेव। पर्णताया जुह्वर्थत्वे जुहूस्वरूपस्य पर्णतां विनापि येन केनापि वृक्षेण सम्पादयितुं शक्यत्वादानर्थक्यं शङ्कते-नचेति। अपूर्वलक्षणादिति। अपूर्वसाधनत्वलक्षणादित्यर्थः। केवलमपूर्वसाधनत्वे लक्षिते ध्रुवादीनामप्यपूर्वसाधनत्वाविशेषात् तत्रापि पर्णता प्राप्नुयात्, तद्व्यावृत्त्यर्थं निष्कृष्टार्थमाह—पर्णतयेति। अवत्तं अवदानेन संस्कृतं यद्धविः, तद्धारणद्वारेत्यर्थः। अपूर्वसाधनत्वे लक्षिते वैयर्थ्यं परिहृतमित्याह—एवञ्चेति। विशेषणप्रयोजनं कथयति—अवत्तेति।

---

१. स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि। तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः ॥ इति समग्रो मन्त्रः। २. सादनाङ्गत्वम्

न पर्णताया वैयर्थ्यम् । अवत्तहविर्धारणद्वारेति चावश्यं वक्तव्यम् , अन्यथा स्रुवादिष्वपि पर्णतापत्तेः ।

सा चेयं पर्णताऽनारभ्याधीता न सर्वक्रतुषु गच्छति, विकृतिषु चोदकेनापि प्राप्तिसम्भवेन द्विरुक्तत्वापत्तेः, किन्तु प्रकृतिषु । तदुक्तम्—

'प्रकृतौ वाऽद्विरुक्तत्वात्' इति ।

अत्र विकृतिर्यतोऽङ्गानि गृह्णाति सा प्रकृतिरिति न प्रकृतिशब्देन विवक्षितम् , गृहमेधीये पर्णताया अप्राप्तिप्रसङ्गात् , न हि गृहमेधीयात्काचन विकृतिरङ्गानि गृह्णाति, मानाभावात् ; किं तु चोदका(१)यत्र नाङ्गप्राप्तिस्तत्कर्म प्रकृतिशब्देन विवक्षितम् । यथा दर्शपूर्णमासौ । तत्र हि न चोदकादङ्गप्राप्तिः । प्रकरणपठितैरेवाङ्गैर्नैराकाङ्क्ष्यात् । गृहमेधीयादिष्वपि न चोदकादङ्गप्राप्तिः । क्लृप्तोपकारैराज्यभागादिभिर्नैराकाङ्क्ष्यात् । अतो यत्र चोदका(२)प्रवृत्तिस्त-

---

**अन्यथा** अवत्तहविर्धारणद्वारेत्यनिवेशने । स्रुवस्यावदानसम्पादकत्वेन ध्रुवादेः चतुर्गृहीताद्याज्यधारकत्वेन च तेषामवत्तहविर्धारणाभावात् न तत्रातिप्रसक्तिरिति भावः । **पर्णतापत्तेरिति** । स्रुवे खादिरत्वस्य उपभृति आश्वत्थत्वस्य ध्रुवायां वैकङ्कततायाश्च विहितत्वेन तत्र पर्णताया अपि विधाने विकल्पाद्यापत्तेरिति भावः ॥

प्रसङ्गात् पर्णतागतं विशेषं वक्तुमारभते—**सा चेति** । **अनारभ्येति** । यं कञ्चित् यागविशेषमनुपक्रम्येत्यर्थः । **सर्वक्रतुष्विति** । प्रकृतिविकृत्युभयसाधारण्येनेत्यर्थः । विकृतिष्वपि गमने दोषमाह—**विकृतिष्विति** । **चोदकेन** अतिदेशेन । **द्विरुक्तत्वापत्तेरिति** । विकृतेरङ्गाकाङ्क्षायां स्वसन्निधौ स्वापेक्षितनिखिलाङ्गोपदेशाभावेन प्रकृतितो धर्मातिदेशस्यावश्यकतया तत एव पर्णताया अपि प्राप्तिसम्भवेन पुनरपि तत्र विधाने द्विर्विधानमापद्येतेत्यर्थः । अस्मिन्नर्थे तार्तीयं सूत्रं प्रमाणयति—**प्रकृतौ वेति** । वाशब्दः पूर्वपक्षव्यावर्तकः । **प्रकृतावेवानारभ्याधीतं** पर्णतादिकं गच्छति, अन्यथा विकृतावपि गमने **द्विरुक्तत्वापत्ते**रित्यर्थः । **अद्विरुक्तत्वादिति** छेदे प्रकृतिमात्रगमने **अद्विरुक्तत्व**लाभादित्यर्थः । अत्राष्टमिकद्वितीयाधिकरणसिद्धं प्रकृतित्वं नाङ्गीकर्तुमुचितमित्याह—**अत्रेति** । अङ्गीकरणे दोषमाह—**गृहमेधीय इति** । चातुर्मास्येषु तृतीये साकमेधे पर्वणि **"मरुद्भ्यो गृहमेधिभ्यस्सर्वासां दुग्धे सायमोदन**'मिति विहितेष्टिः **गृहमेधीयेष्टिः** । **अप्राप्तिप्रसङ्गादिति** । जुहूत्वेनेति शेषः । कस्तर्हि प्रकृतिपदार्थः ? अत आह-**चोदकादिति** । अतिदेशादित्यर्थः । लक्ष्ये लक्षणं सङ्गमयति—**तत्र हीति** । **नैराकाङ्क्ष्यादिति** । भावनायाः कथंभावाकाङ्क्षायां प्रयाजादीनाञ्चोपकार्याकाङ्क्षायां परस्परं सम्बन्धे तेनैवाकाङ्क्षायाश्शान्तत्वादित्यर्थः । अस्मिन् लक्षणेऽव्याप्त्यभावमुपपादयति—**गृहमेधीयादिष्विति** । अत्रादिपदेनोपसदवभृथादयो गृह्यन्ते । **नैराकाङ्क्ष्यादिति** । गृहमेधीयभावनाया अङ्गाकाङ्क्षायां यावत् प्राकृतानि क्लृप्तोपकारकाण्यङ्गान्यतिदिश्यन्ते ततः पूर्वमेव क्लृप्तोपकारस्याऽऽज्यभागादेर्विधानात् तावतैव भावनाकाङ्क्षायाश्शान्तेरितराङ्गानामर्थादेव निवृत्तिरिति भावः । **आज्यभागादिभि**रित्यादिपदेन **"अग्नये स्विष्टकृते सम-**

---

१. अङ्गप्राप्तिः २. चोदकान्नाङ्गप्रवृत्तिः ।

**त्रानारभ्याधीतानां सन्निवेशः ।**

**साप्तदश्यं त्वनारभ्याधीतमपि न प्रकृतौ गच्छति, प्रकृतेः पाञ्चदश्यावरोधात् । किं तु विकृतिषु गच्छति । तत्रापि न सर्वासु गच्छति, चोदकप्राप्तपाञ्चदश्यबाधप्रसङ्गात् ; किन्तु प्रत्यक्षश्रुतसाप्तदश्यासु मित्रविन्दादिषु गच्छति । यथाहुः—**

> **एवं च प्रकृतावेतत्पाञ्चदश्यं प्रतिष्ठितम् ।**
> **विकृतौ च न यत्रास्ति साप्तदश्यपुनःश्रुतिः ॥ इति ।**

**न च वाक्यवैयर्थ्यम् । अनारभ्याधीतस्यैव साप्तदश्यस्य मित्रविन्दादि-**

---

**वयति' 'इडामुपह्वयते'** इति वाक्यविहितस्विष्टकृदिडे गृह्येते ।

एवमनारभ्यविहितस्य प्रकृतिगामित्वं निरूप्य तदपवादं वक्तुमारभते—**साप्तदश्यन्त्विति । 'सप्तदश सामिधेनीरनुब्रूया'**दित्यनारभ्यवाक्यविहितं सामिधेन्यङ्गभूतं साप्तदश्यमित्यर्थः । अग्निसमिन्धनार्थाः **"प्रवो वाजा अभिद्यवः"** इत्याद्या ऋचस्**सामिधेन्यः । पाञ्चदश्यावरोधादिति ।** तस्य प्रकरण एव पठितत्वेन शीघ्रोपस्थितत्वात् तस्यैव प्रथमं सम्बन्धे तेनैव नैराकाङ्क्ष्यात् न पुनः साप्तदश्यं गृह्णातीति भावः । **बाधप्रसङ्गादिति ।** साप्तदश्यस्य सामिधेनीविषयेऽतिदेशसापेक्षत्वेन तत्प्रापितपाञ्चदश्यबाधे उपजीव्यविरोधापत्तेरिति भावः । **अत्रेदमवधेयम्**–न विकृतौ पाञ्चदश्यविरोधस्सम्भवति । आतिदेशिकस्य तस्यौपदेशिकेन साप्तदश्येन शरवत् बाधोपपत्तेः । नचानारभ्याधीतत्वेन साप्तदश्यस्य दौर्बल्यम् । तस्य निरवकाशत्वेन प्राबल्यात् । नाप्युपजीव्यविरोधः, सामिधेन्यंश एवातिदेशोपजीवनात् । अन्यथा औदुम्बरत्वादेः यूपविषये तदुपजीवनेन यूपपृष्ठभावेन खादिरत्वस्याप्यतिदेशे औदुम्बरत्वस्य तद्बाधकत्वस्याप्यनापत्तेः । अत एव मित्रविन्दादिप्रकरणस्थस्य वाक्यस्योपसंहारकत्वं सङ्गच्छते । सामान्यतः प्राप्तस्य विशेषविषये सङ्कोचनं ह्युपसंहारः । यदि सर्वत्र विकृतिषु न साप्तदश्यं प्राप्नोति, किन्तु प्रथमत एव पाञ्चदश्यरहितास्वेव, तर्हि सामान्यतः प्राप्तेरेवाभावात् कथं तस्योपसंहारकत्वं भवेत् । अत एतद्वाक्याभावे सर्वत्रैव विकृतिषु प्राप्नुयात् । तत्तूपसंह्रियतेऽनेन वाक्येन इत्येवाभ्युपगन्तव्यम् । एतदभिप्रायेणैव भाष्यकारोऽपि 'तत् प्रकृतौ विशेषविहितेन पाञ्चदश्येन बाधितं सर्वविकृतीरनुप्राप्तम्' इत्यादि वदति । यद्यपि वार्तिकमेतद्विरुद्धमिव भाति, तथापि तदप्यस्मिन्नेवार्थे सुधीभिर्योजनीयमिति । **मित्रविन्दादी**त्यादिपदेन पशुवैमृधाध्वरकल्पादयो गृह्यन्ते ।

**एवञ्चेति ।** प्रकृतौ, यत्र च विकृतौ साप्तदश्यं न पुनः श्रूयते तत्रैव पाञ्चादश्यं निविशत इति कारिकार्थः । एकेन वाक्येनाभिमतसिद्धौ किमर्थं वाक्यद्वयमिति शङ्कते—**न चेति । उपसंहारादिति ।** साप्तदश्यस्य सामिधेनीस्वरूपार्थत्व आनर्थक्यात् क्रतुसम्बन्धो वक्तव्यः; अनारभ्यवाक्ये च न क्रतुस्सन्निहितः, किन्तु सामिधेन्या अव्यभिचारितक्रतुसम्बन्धात् तद्द्वारा कथञ्चित् क्रतोरुपस्थितिस्सम्पादनीया, ततश्च यावदनारभ्यवाक्यं सामिधेनीद्वारा क्रतुसम्बन्धं बोधयितुं प्रवर्तते ततः पूर्वमेव प्राकरणिकेन वा-

**प्रकरणस्थेन वाक्येनोपसंहारात्। उपसंहारो नाम सामान्यप्राप्तस्य विशेषे नियमनम्। यथाहुः—**

**सामान्यविधिरस्पष्टस्संह्रियेत विशेषतः। इति॥**

**तत्रानारभ्यविधिः सामान्यविधिः, मित्रविन्दादिप्रकरणस्थस्तु विशेषविधिरित्यास्तां तावत्। प्रकृतमनुसरामः। तत्सिद्धं वाक्यादङ्गत्वम्॥**

( वाक्यस्य प्रकरणादितः प्राबल्यनिरूपणम् )

**तदिदं वाक्यं प्रकरणाद्बलीयः, प्रकरणं हि न साक्षाद्विनियोजकम्, तद्धि आकाङ्क्षारूपम्। न चाकाङ्क्षा स्वयं प्रमाणं, किन्तु साकाङ्क्षं वाक्यं प्रकरणस्वरूपं(१)दृष्ट्वा भवत्येतादृशी मतिः-नूनमिदं वाक्यं केनचिद्वाक्येनैकवाक्यभूतमिति। ततश्चाकाङ्क्षारूपं प्रकरणं वाक्यस्य वाक्यान्तरैकवाक्यत्वे प्रमाणम्। एवं च यावत्प्रकरणं वाक्यं कल्पयित्वा विनियोजकं भवति तावद्वाक्यं लिङ्गश्रुती कल्पयित्वा विनियोजकं भवतीति प्रकरणाद्वाक्यं बलीयः।**

**अत एव "इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राता"**

---

क्येन क्रतुसम्बन्धो बोध्यते। अतश्च प्राकरणिकं वाक्यं झटिति क्रतुसम्बन्धबोधकं सत् अनारभ्यवाक्येऽविशेषेण सर्वविकृतिसम्बन्धकल्पनां निरुन्धदुपसंहारकमिति भावः। नचैकेनैव प्राकरणिकेन वाक्येनोभयोपपत्तौ अनारभ्यवाक्यं व्यर्थमिति वाच्यम्। ज्योतिष्टोमादिवाक्यवदभ्युदयशिरस्कत्वेनोपपत्तेः। को नामोपसंहारः ? अत आह-**उपसंहारो नामेति**। तत्र वार्तिकं प्रमाणयति—**सामान्येति**। **अस्पष्टः**, उद्देश्यविशेषसम्बन्धितया न स्पष्टः। **संह्रियेत** उपसंह्रियेत। विशेषे पर्यवस्थाप्यतेति यावत्। कस्सामान्यविधिः ? को वा विशेषविधिः ? तत्राऽऽह—**तत्रेति**। क्रतुविशेषमनारभ्य सामान्यत एव पाठात् सामान्यविधित्वम्, क्रतुविशेषेषु पाठाच्च विशेषविधित्वमिति भावः॥

( वाक्यस्य प्रकरणादितः प्राबल्यनिरूपणम् )

एवं वाक्यं निरूप्य तद्गतं प्राबल्यमिदानीं निरूपयितुमारभते-**तदिदमिति**। **आकाङ्क्षारूपमिति**। उभयाकाङ्क्षा प्रकरणमिति वक्ष्यमाणत्वादिति भावः। **स्वयं** वाक्यादिकल्पनामन्तरा। अङ्गत्वस्य प्रवर्तनात्मकविध्येकबोध्यत्वादाकाङ्क्षाया अशब्दरूपाया अतथात्वादिति भावः। **एकवाक्यभूतमिति**। अन्यथा आकाङ्क्षाया अशान्तेरिति भावः। एवञ्चाकाङ्क्षाया एकवाक्यतायामेव प्रमाणत्वात् सैव प्रथमं कल्पयितव्या। ततश्च लिङ्गादिकल्पनम्। एवं च यावत् प्रकरणेनैकवाक्यतां लिङ्गं श्रुतिं च कल्पयित्वा विनियोगः क्रियते ततः पूर्वमेव वाक्येन लिङ्गश्रुतिकल्पनेन विनियोगः क्रियत इति प्रकरणात् वाक्यस्य बलीयस्त्वमित्याह—**ततश्चेति**।

**अत एव** वाक्यस्य प्रकरणाद्यपेक्षया प्राबल्यादेव। **इन्द्राग्नी इदं हविरिति**। **अत्रायमाशयः**—दर्शपूर्णमासप्रकरणे **'इदं द्यावापृथिवी भद्रमभूत्'** इत्यादिः **'नमो देवेभ्यः'** इत्यन्तः सूक्तवाकपदाभिधेयः कश्चिदनुवाकः श्रूयते। तत्र चेष्टदेवतास्मारकेषु **'अग्निरिदं हविरजुषत'** इत्यादिषु श्रुतो मन्त्रः **इन्द्राग्नी इदं हविरजुषेतां अवीवृधेतां महो ज्यायोऽक्राताम्'** इति। तत्र असोमयाजिनः सान्नाय्याभावात् तत्स्थाने विहित

---

१. पश्यताम्।

मित्यत्रेन्द्राग्नीपदस्य लिङ्गाद्दर्शाङ्गत्वे सिद्धे 'इदं हवि' रित्यादेरपि तदेकवाक्यत्वाद्दर्शाङ्गत्वम्, न तु प्रकरणाद्दर्शपूर्णमासाङ्गत्वम्, प्रकरणाद्वाक्यस्य बलीयस्त्वादिति ॥

( प्रकरणनिरूपणम् )

उभयाकाङ्क्षा प्रकरणम्। यथा प्रयाजादिषु "समिधो यजती"ति। अत्र हि इष्टविशेषस्यानिर्देशात्समिद्यागेन भावयेत् किमित्यस्त्युपकार्याकाङ्क्षा। दर्शपूर्णमासवाक्येऽपि दर्शपूर्णमासाभ्यां स्वर्गं भावयेत् कथमित्यस्त्युपकारकाकाङ्क्षा। अत उभयाकाङ्क्षया प्रयाजादीनां दर्शपूर्णमासाङ्गत्वं सिध्यति।

ननु यदि प्रयाजादिवाक्ये इष्टविशेषो न श्रूयते तर्हि विश्वजिन्न्यायेन स्वर्गः फलं कल्प्यताम्। विश्वजिदधिकरणे हि "विश्वजिता यजेते" त्यत्र फलस्याश्रवणात् फलमन्तरेण च विधिश्रुतेरनुपपत्तेरवश्यं फले कल्पयितव्ये सर्वाभिलषितत्वेन स्वर्गः फलमित्युक्तम्। तदुक्तम्—

'स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात्' इति।

---

ऐन्द्राग्नयागे समवेतमिन्द्राग्नीपदमिति लिङ्गादेव तदङ्गत्वं तस्य सिद्धम्। तत्समभिव्याहृतानामिदं हविरित्यादीनां प्रकरणे पाठात् प्रकरणस्य चाविशेषात् दर्शपूर्णमासोभयार्थत्वे प्राप्ते तद्बाधित्वा प्रबलेन इन्द्राग्नीपदसमभिव्याहाररूपेण वाक्येन दर्शमात्राङ्गत्वमिति। अत्र चाधिकाराख्यं प्रकरणं बोध्यम्। उभयाकाङ्क्षालक्षणस्य प्रकरणस्य सिद्धमन्त्रविनियोजकत्वाभावात् ॥

( प्रकरणनिरूपणम् )

प्रकरणमिदानीं निरूपयति—**उभयेति**। अङ्गप्रधानोभयगतपरस्पराकाङ्क्षेत्यर्थः। 'प्रयाजादिषु'इत्यादिपदेनाघाराज्यभागादिविधयो गृह्यन्ते। परस्पराकाङ्क्षामेवोपपादयति—**अत्र हीति। इष्टविशेषानिर्देशादिति।** विधिश्रवणान्यथानुपपत्त्या भावनाया इष्टसामान्यभाव्यकत्वावगमेऽपि फलविशेषस्याश्रवणात् तत्कल्पनं यावदाकाङ्क्षाया अशान्तेरित्यर्थः। अन्यत्राप्याकाङ्क्षामुपपादयति—**दर्शेति**। एवं च प्रयाजादीनामुपकार्याकाङ्क्षासत्वात् प्रधानस्य चोपकारकाकाङ्क्षावत्वात् नष्टाश्वदग्धरथन्यायेन परस्परसम्बन्धेन सिध्यति दर्शपूर्णमासाङ्गत्वं प्रयाजादीनामित्याह—**अत इति**।

ननु प्रयाजादीनां फलाकाङ्क्षायां साक्षात् स्वर्गार्थत्वमेव कल्प्यताम्, किमर्थं दर्शपूर्णमासोपकारकत्वं कल्प्यते। स्वतन्त्रफलार्थत्वे सम्भवति अन्याङ्गत्वकल्पनस्यान्याय्यत्वादिति शङ्कते—**नन्विति। विश्वजितेति।** अयं चैकाहकाण्डपठितो विश्वजिद्बोध्यः। '**सर्वेभ्यो वा एष देवेभ्यस्सर्वेभ्यश्छन्दोभ्यस्सर्वेभ्यः पृष्ठेभ्य आत्मनमागुरते यस्सत्रायागुरते स विश्वजितातिरात्रेण सर्वपृष्ठेन सर्वस्तोमेन सर्ववेदसदक्षिणेन यजेत**''इति वाक्यविहितो विश्वजित् भाष्योदाहृतोऽपि नात्रोदाहरणम्। तस्य वाक्येनैव सत्रफलार्थतावगमात्। **स स्वर्ग इति**। सः कल्पनीयः फलविशेषः **स्वर्गः स्यात्** सर्वपुरुषान् प्रत्यविशेषात्। सर्वाभिलषितत्वादिति यावत्, इति सूत्रार्थः। स्वर्गस्य दुःखासंभिन्नसुखरूपत्वेन तत्राविशेषात् सर्वेषामेवोत्कटरागोदयादिति भावः। तस्य देश-

रात्रिसत्रन्यायेन वार्थवादिकं फलं कल्प्यताम्। रात्रिसत्राधिकरणे हि "प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्ती" त्यत्र विध्युद्देशे फलाश्रवणात्फलमन्तरेण च विधिश्रुतेरनुपपत्तेरवश्यं फले कल्पयितव्ये आर्थवादिकं प्रतिष्ठाख्यं फलमित्युक्तम्। विश्वजिदधिकरणन्यायेनानुपस्थितस्वर्गकल्पने तस्य प्रकृतसम्बन्धकल्पने गौरवात्, अर्थवादोपस्थितस्यैव प्रकृतफलत्वकल्पने लाघवात्। तदुक्तम्—

'फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात्' इति।

तस्मा(१)द्विश्वजिन्न्यायेन रात्रिसत्रन्यायेन वा स्वतन्त्रफलार्थत्वे सम्भवति किमिति दर्शपूर्णमासाङ्गत्वं स्वीक्रियते इति चेत्—

मैवम्। स्वतन्त्रफलार्थत्वेऽन्यतराकाङ्क्षया सम्बन्धः स्यात्। न ह्यत्र फलस्य साधनाकाङ्क्षाऽस्ति। श्रूयमाणं हि फलं साधनमाकाङ्क्षति, न चात्र तत् श्रूयते। एवं च फलस्याकाङ्क्षाभावात् केवलं किं भावयेदिति प्रयाजानां भाव्याकाङ्क्षयैव स्वतन्त्रफलार्थत्वं स्यात्। दर्शपूर्णमासार्थत्वे तूभयाकाङ्क्षा प्रमाणम्। प्रयाजानां भाव्याकाङ्क्षाया इतरत्र च कथंभावाकाङ्क्षायाः सत्त्वात्। अन्यतराकाङ्क्षातश्चोभयाकाङ्क्षा बलीयसीति वक्ष्यते। ततश्च दर्शपूर्णमासार्थत्वमेव युक्तं

---

विशेषरूपत्वेऽपि पुत्रपश्वाद्यपेक्षयाऽभ्यर्हितत्वेन तत्रैव सर्वेषामभिलाषोदयात् तस्य सर्वाभिलषितत्वम्। यत्रार्थवादेऽपि नास्ति फलश्रवणं तत्रैव विश्वजिदधिकरणप्रवृत्तेः, अत्र च **"वर्म वा एतद्यज्ञस्य क्रियते यत्प्रयाजानुयाजा इज्यन्ते वर्म यजमानाय भ्रातृव्याभिभूत्या"** इत्यर्थवादसत्वात् तत्र च भ्रातृव्याभिभूतिरूपफलश्रवणात् विश्वजिन्यायानवतारं मन्वानः न्यायान्तरेण स्वतन्त्रफलार्थतामाह–**रात्रीति**। **आर्थवादिकमिति**। अर्थवादप्रतिपादितं भ्रातृव्याभिभूतिरूपमित्यर्थः। **भ्रातृव्यः** शत्रुः। **तस्याभिभूतिः** नाशः। **प्रतीति**। ये एतान् रात्रिसंज्ञकान् क्रतूननुतिष्ठन्ति ते प्रतिष्ठां प्राप्नुवन्तीत्यर्थः। **इत्यत्र विध्युद्देश इति**। इत्यर्थवादसन्निहिते **"ज्योतिर्गौरायुरिति त्र्यहा भवन्ति"** इति विधिवाक्य इत्यर्थः। नन्वत्रापि विश्वजिन्न्यायेन स्वर्गः कल्प्यताम्। किमर्थं वर्तमाननिर्दिष्टस्यान्यार्थस्य फलपरत्वमङ्गीक्रियत इत्यत आह–**विश्वजिदिति**। **लाघवादिति**। अध्याहारापेक्षया वर्तमाननिर्देशस्य सन्नन्ततया विपरिणामोऽपि लघुभूत इति भावः। तदधिकरणसूत्रं प्रमाणयति—**फलमिति**। अर्थवादप्रतिपादितं प्रतिष्ठाख्यं **फलं** मन्यते **आत्रेयः** आचार्यः, तस्यैव निर्दिष्टत्वात्, तस्य **अश्रुतौ** अश्रवणे **हि** स्वर्गादेः फलान्तरस्य **अनुमानं** कल्पनं इति सूत्रार्थः। **स्वीक्रियत इति**। प्रयाजादीनामिति शेषः। एवं च प्रयाजादिषु स्वसमीपे फलबोधकपदश्रवणे तद्बोधितस्यैवफलत्वमस्तु। तदभावे स्वर्गः फलमस्तु। सर्वथा न दर्शपूर्णमासाङ्गत्वं तेषामिति भावः।

एवं स्वतन्त्रफलार्थत्वं पूर्वपक्षयित्वा तन्निराकरोति—**मैवमिति**। **अन्यतराकाङ्क्षयेति**। स्थानरूपपञ्चमप्रमाणविनियोज्यत्वं स्यादित्यर्थः। तदुपपादयति-**नहीति**। **तत् श्रूयत इति**। **'समिधो यजति, तनूनपातं यजति, आघारमाघारयति, आज्यभागौ यजति'** इति फलपदरहितानामेव वाक्यानां श्रवणात् इति भावः। **वक्ष्यत इति**।

---

१. विश्वजिदधिकरणन्यायेन।

न स्वतन्त्रफलार्थत्वमिति। तदुक्तम्—

'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्' इति।

अत्र द्रव्ये फलश्रुतिः(१) "यस्य पर्णमयी जुहूर्भवति न स पापꣳश्लोकꣳ शृणोति" इत्येवमाद्या। संस्कारे फलश्रुतिः "यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' इत्येवमाद्या। कर्मणि फलश्रुतिः 'वर्म वा एतद्यज्ञस्य क्रियते यत्प्रयाजानूयाजा इज्यन्ते' इत्याद्या। कर्मपदं चारादुपकारककर्मपरं द्रष्टव्यम्, संस्कारकर्मणः पृथक्संकीर्तनादित्यास्तां तावत्॥

( प्रकरणस्य क्रियैकविषयत्वनिरूपणम् )

तदिदं प्रकरणं क्रियाया एव विनियोजकम्, न द्रव्यगुणयोः। तयोस्तु क्रियायोगाद्विनियोजकम्। कुत इति चेत्? शृणु-'यजेत स्वर्गकाम' इत्यत्राख्यातांशेनार्थीभावनाभिधीयते—भावयेदिति। सा चांशत्रयमपेक्षते-किं भावयेत्, केन भावयेत्; कथं भावयेदिति। तत्र भाव्याकाङ्क्षायां षष्ठाद्यन्यायेन स्वर्गो भाव्यतयान्वेति—स्वर्गं भावयेदिति। करणाकाङ्क्षायां समानपदोपात्तो

---

प्रकरणप्राबल्यनिरूपणावसरे इति शेषः। प्रयाजादीनां स्वतन्त्रफलार्थत्वाभावे चातुर्थिकं सूत्रं प्रमाणयति—**द्रव्यसंस्कारेति**। यस्य पर्णमयीत्यादौ **द्रव्ये,** यदाङ्क्त इत्यादौ **संस्कारे,** यत्प्रयाजानूयाजाः इत्यादावर्थ**कर्मणि** च **फलश्रवणं अर्थवादस्स्यात्।** तेषां क्रत्वर्थत्वादिति सूत्रार्थः। प्रत्येकमुदाहरति-**द्रव्येति**। अनारभ्यवादोऽयं-**यस्येति**। यस्य यजमानस्य यज्ञे दर्शपूर्णमासादौ जूहूः पलाशवृक्षीयकाष्ठनिर्मिता ( जुहूः होमसाधनद्रव्यधारणार्थः पात्रविशेषः ) भवेत् स यजमानः पापं श्लोकं अपकीर्तिं कदाऽपि न शृणुयात्, इति, यजमानः स्वे चक्षुषी अञ्जनेनाऽऽङ्क्ते यस्मात्, तेन शत्रोर्नेत्रमावृणोति ( शत्रुरन्धो भवेत् इति यावत् ) इति, दर्शपूर्णमासयोः प्रयाजा अनूयाजाश्चाऽनुष्ठीयन्त इति यत् तेन यज्ञस्य यजमानस्य च कवचेनाऽऽवरणं कृतं भवति इति च वाक्यत्रयस्य क्रमशोऽर्थाः। ज्योतिष्टोमे दीक्षामध्ये श्रुतं **यदाङ्क्त इति**। दर्शपूर्णमासप्रकरणे प्रयाजसन्निधौ **वर्मेत्यादि**। अत्र सर्वत्राप्याद्यपदेन क्रमात् **'यस्य वैकङ्कती ध्रुवा भवति प्रत्येवास्याहुतयस्तिष्ठन्त्यथो प्रैव जायते'। 'यन्नवनीतेनाभ्यङ्क्ते सर्वा एव देवताः प्रीणाति'। 'यदाज्यभागौ यजति चक्षुषी एव तद्यज्ञस्य प्रतिदधाति'** इत्यादयो ग्राह्याः। सूत्रस्थकर्मपदस्यार्थमाह—**कर्मपदमिति। पृथगिति।** संस्कारपदेन ग्रहणादित्यर्थः॥

**( प्रकरणस्य क्रियैकविषयत्वनिरूपणम् )**

एवं प्रकरणं निरूप्य तस्य इतरप्रमाणेभ्यो व्यावृत्तं विशेषमाह—**तदिदमिति**। किं सर्वथा द्रव्यगुणाविनियोजकत्वम्? नेत्याह—**तयोरिति**। प्रथमतः प्रेक्षावतः पुरुषस्य फलविषयिण्येवाकाङ्क्षा, अनन्तरं तत्साधने, अनन्तरं च तत्प्रकारविशेष इति तेनैव क्रमेण आकांक्षामुपपादयति—**किमिति। षष्ठाद्यन्यायेनेति**। उपपादितमेतद-

---

१. यस्य पर्णमयी जुहूर्भवतीत्येवमाद्या ख. पु.

यागो भावार्थाधिकरणन्यायेन करणतयान्वेति-यागेन स्वर्गं भावयेदिति। तत्र कथमिति (१)कथंभावाकाङ्क्षा जायते। तस्यां चाकाङ्क्षायां यत्संनिधौ पठितमश्रूयमाणफलकं च क्रियाजातं तदेवोपकार्याकाङ्क्षा(२)यामितिकर्तव्यतात्वेनान्वयमनुभवितुं योग्यं, क्रियाया एव लोके कथंभावाकाङ्क्षायामन्वयदर्शनात्। न हि कुठारेण छिन्द्यात्कथमित्याकाङ्क्षायां हस्त इति केवलमुच्चार्यमाणोऽपि हस्तोऽन्वयं प्राप्नोति। किं तर्हि ? हस्तेनोद्यम्य निपात्येत्युच्चार्यमाणे उद्यमननिपातने एव। (३)हस्तोऽपि तद्द्वारेणैवान्वयं प्राप्नोतीति सार्वजनीनमेतत्।

किं च कथंभावाकाङ्क्षा नाम करणगतप्रकाराकाङ्क्षा। (४) थमोः प्रकारवाचित्वात्। सामान्यस्य भेदको विशेषः प्रकारः। सामान्यं च क्रियारूपमेवाख्यातेनोच्यते। 'यजेत स्वर्गकाम' इत्यस्य ह्ययमर्थः—यागेन तथा कर्तव्यं यथा स्वर्गो भवतीति। क्रियासामान्यस्य च विशेषः क्रियैव भवति। न हि ब्राह्मणविशेषः परिव्राजकादिरब्राह्मणो भवति। एवं च करणगतक्रियाविशेषाकाङ्क्षापरनामधेयकथंभावाकाङ्क्षायां क्रियैवान्वेतीति युक्तम्। स च करणगतः क्रियाविशेषोऽन्वाधानादिब्राह्मणतर्पणान्तःक्रियारूप एवेति युक्तं तस्य प्रकरणेन ग्रहणम्। (५)तस्य च करणगतत्वं तदुपकारकत्वमेव, तेन विना यागेनापूर्वाजोननात्। न ह्युद्यमननिपातन(६)व्यतिरेकेण कुठारेण द्वैधीभावो जन्यते। तत्सिद्धं कथंभावाकाङ्क्षायां क्रियैवान्वेतीति।

अत एव द्रव्यदेवतयोर्यागसंपादनद्वारान्वयः साम्प्रदायिकैरुक्तः। विकृतौ

---

धस्तात्। **समानपदोपात्त** इति हेतुगर्भविशेषणम्। सिद्धस्य वस्तुनः साक्षादितिकर्तव्यतात्वेनान्वयाभावं दर्शयति—**न हीति**। **केवलमिति**। क्रियापदोच्चारणं विनेत्यर्थः। **सार्वजनीनमिति**। सर्वजनप्रसिद्धोऽयं व्यवहारो नात्रविशेषतो वक्तव्यमस्तीत्यर्थः।

किञ्च कथम्भावाकाङ्क्षास्वरूपविवेचनेनाप्ययमेवार्थस्सिध्यतीत्याह—**किञ्चेति**। **प्रकारवाचित्वादिति**। **'प्रकारवचने थाल्'** इति सूत्रात् प्रकारवचन इत्यनुवृत्य **'किमश्चे'**ति सूत्रेण किंशब्दात् थमो विधानादिति भावः। **आख्यातेनोच्यत इति**। **"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत"** इति वाक्येन तत्तद्व्यापाराणामेव सामान्यतो भावनात्वेनोक्तत्वादिति भावः। आख्यातस्य तत्तदुत्पत्त्यनुकूलव्यापारसामान्यवाचित्वमेवोपपादयितुमारभते—**यजेतेत्यादिना**। **अन्वाधानादीति**। **अन्वाधानं** दर्शपूर्णमासयोरादौ **"ममाग्नेवर्चः"** इत्यादिभिर्मन्त्रैराहवनीयादिष्वग्निषु काष्ठाधानम्। **ब्राह्मणतर्पणं** भोजनादिना ऋत्विजां प्रीतिसंपादनम्। **करणगतः** यागादिरूपधात्वर्थगतः। **ननु** धात्वर्थस्यैव भावनाकरणत्वात् तस्य च क्रियारूपत्वेन कथं तद्गतत्वमन्वाधानादीनाम् ? अत आह—**तस्य चेति**। करणापेक्षितोपकारजनकत्वमेव करणगतत्वं, न तु तन्निष्ठत्वम्। अतो न दोष इति भावः।

**अत एव** क्रियाया एव कथंभावाकांक्षायामन्वयादेव। **यागसंपादनद्वारेति**। यागस्वरूपनिष्पादनस्य क्रियात्वेन तद्द्वाराऽन्वयो द्रव्यदेवतयोः सिद्धयोरपि सम्भवतीति

---

१. कथम्भावाकाङ्क्षायां इति. क. पु. २. कांक्षया, ३. हस्तादपि, ४. थमुनः, ५. ततश्च. ६. व्यतिरेके उद्यमननिपातने एव हस्तादिद्वारेणा न्वयं प्राप्नुतः

च कथम्भावाकाङ्क्षायामुपकारसम्पादनमतिदिश्यत इत्युक्तम्। यदि च कथम्भावाकाङ्क्षायां सिद्धं वस्त्वन्वययोग्यं स्यात् तदा(१)सम्पादनपर्यन्तं धावनं(२)ग्रन्थकृतामनर्थकं स्यात्। अतश्च क्रियाया एव इतिकर्तव्यतात्वम्, कथम्भावाकाङ्क्षागृहीतस्येतिकर्तव्यतात्वात्, इतिशब्दस्य च प्रकारवाचित्वात्। कर्तव्यस्य 'इति' प्रकारः 'इतिकर्तव्यता'। प्रकारश्च सामान्यस्य भेदको विशेष इत्युक्तम्। कर्तव्यस्य च विशेषः कर्तव्य एव भवतीति न सिद्धस्य वस्तुन इतिकर्तव्यतात्वम्, किन्तु क्रियाया एव, सिद्धस्य तु द्रव्यादेः केवलमङ्गत्वम्। तदपि श्रुत्यादिना, न तु प्रकरणात्। यथाहुः—

नावान्तरक्रियायोगादृते वाक्योपकल्पितात्।
गुणद्रव्ये कथंभावैर्गृह्णन्ति प्रकृताः क्रियाः॥ इति।

अत एव 'बर्हिर्देवसदनं दामी' त्यादिमन्त्राणां(३)लिङ्गादङ्गत्वम्, न तु प्रकरणादित्युक्तमर्थवादाधिकरणपूर्वपक्षसमाप्तौ(४)राणके। क्वचिद्द्रव्यस्येतिकर्तव्यतात्वाभिधानमङ्गत्वाभिप्रायं द्रष्टव्यम्। बहुग्रन्थस्वरसादुक्तयुक्तेश्चेति।

भावः। उपकारसम्पादनमिति। विकृतिभावनायाः कथंभावाकांक्षायां प्रथमतः प्राकृतस्योपकारस्यातिदेशः तत्पृष्ठभावेन च पदार्थानामतिदेश इत्युक्तमित्यर्थः। इतिकर्तव्यताशब्दार्थपर्यालोचनयापि तदेवाऽवगम्यत इत्याह—इतीति। इत्युक्तमिति। पूर्वमस्माभिरिति शेषः। आदिपदेन संख्यादीनां सङ्ग्रहः। अङ्गत्वेऽपि प्रकरणविनियोज्यत्वे सिद्धं नस्समीहितं इत्यत आह—तदपीति। नावान्तरेति। उक्तार्थमिदम्। अत एव सिद्धस्य प्रकरणग्राह्यत्वाभावादेव। राणक इति। अयं हि तत्रत्यो ग्रन्थः—"व्यापारग्राहिणा प्रकरणेन साक्षाद्ग्रहणायोगात् उच्चारणद्वारा तद्ग्रहणं तद्ग्रहणाच्चोच्चारणार्थता इत्यन्योन्याश्रयापत्तेः न प्रकरणपाठमात्रेण विनियोगो युक्तः। सामर्थ्यात्तु अभिधानक्रियावगमे तद्द्वारा प्रकरणग्रहणोपपत्तेः अनुच्चरितस्याभिधानाशक्तेः कर्मकालोच्चारणसिद्धिरिति भावः" इति। ननु—"विधिर्हि समानपदोपात्तात् धात्वर्थात् भावनायाः सन्निकृष्टः प्रथममेव तामवरुध्य पुरुषार्थाय गमयति, प्रवर्तनात्मकत्वात्; अपुरुषार्थफले च व्यापारे पुरुषस्य प्रवर्तयितुमशक्यत्वात्। तेन प्रवर्तनात्मकविध्यन्वयादेव समीहितरूपे भाव्येऽपेक्षिते तद्विशेषमात्रं वाक्यादवगम्यते। तस्मिंश्चावगते समानपदोपात्तो धात्वर्थः करणतया स्वीक्रियते। द्रव्यादि तु इतिकर्तव्यतया" इति न्यायरत्नमालापर्यालोचनया द्रव्यस्यापीतिकर्तव्यतात्वेनान्वयोऽस्त्येवेति प्रतीतेः कथं तन्निषेधः शक्यते कर्तुमित्यत आह-क्वचिदिति। बहुग्रन्थस्वरसादिति। "न द्रव्यं तेन आकांक्ष्यते। इतिकर्तव्यतां हि स आकांक्षति। होमश्चेतिकर्तव्यता न द्रव्यम्"।

"द्रव्याणां वाक्यसंयुक्तक्रियानिर्वर्तनाद्विना।
न प्रयोजनमस्त्यन्यत् कथंभावाद्यसङ्गतेः।

यथा होमः क्रियात्मकत्वात् किमित्यपेक्षमाणः प्रधानकथंभावेन इत्थमनु-

१. उपकारसम्पादनपर्यन्तानुधावनं. ख. पु. २. ग्रन्थकाराणां ३. मन्त्रस्य. ख. ४. राणकेन. ख. पु.

तत्सिद्धं प्रकरणं क्रियाया एव विनियोजकमिति ।

तच्च प्रकरणं द्विविधम्—महाप्रकरणमवान्तरप्रकरणं चेति । तत्र फलभावनायाः प्रकरणं महाप्रकरणम् । तच्च प्रयाजादीनां ग्राहकम् । तच्च प्रकृतावेव । यत्र समग्राङ्गोपदेशः सा प्रकृतिः, यथा—दर्शपूर्णमासादिः । तत्र चोभयाकाङ्क्षारूपं प्रकरणं संभवति, आकाङ्क्षानुपरमात् ।

विकृतौ तु न प्रकरणं सम्भवति । यत्र न समग्राङ्गोपदेशः सा विकृतिः, यथा सौर्यादिः । तत्र च यान्यपूर्वाण्यङ्गानि पठ्यन्ते उपहोमादीनि तेषां न प्रकरणं विनियोजकम् । तत्र यद्यपि तेषां किंभावयेदित्यस्त्याकाङ्क्षा, तथापि प्रधानस्य न कथंभावाकाङ्क्षास्ति, प्राकृतैरेवाङ्गैर्निराकाङ्क्षत्वात् । न च प्राकृतानामङ्गानामत्रापठितत्वेनाप्रत्यक्षत्वाद्वैकृतानां तु पठितत्वेन प्रत्यक्षत्वात्तैरेवाकाङ्क्षोपशम इति वाच्यम् । तेषां पठितत्वेऽपि अक्लृप्तोपकारत्वेन झटित्याकाङ्क्षोपशमनेऽसामार्थ्यात्, प्राकृतानां तु क्लृप्तोपकारत्वेन तच्छमने सामर्थ्यात् ।

---

ग्राहकत्वेन गृह्यते । नैवं द्रव्यम्" 'द्रव्यस्य अक्रियात्मकत्वात् प्रकरणाग्रहणाभिधानार्थम्' इत्यादिभाष्यवार्तिकन्यायसुधादिस्वरसादित्यर्थः । भूयोनुग्रहस्यैव न्याय्यत्वादिति भावः ॥

प्रकरणमिदानीं विभजते—**तच्चेति** । तत्र महाप्रकरणावान्तरप्रकरणयोर्मध्ये । **आकाङ्क्षानुपरमादिति**। प्रधानकथम्भावाकाङ्क्षायाः प्रयाजाद्यन्वयमन्तरा अशान्तेः प्रयाजीयोपकार्याकाङ्क्षायाश्च प्रधानसम्बन्धमन्तरा अशान्तत्वाच्चेत्यर्थः ।

**यत्रेति। सौर्यादिरिति। "सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम"**इति विहितेष्टिस्सौर्येष्टिः। यत्र च भावनापेक्षिताङ्गपौष्कल्यं विधायकवाक्याम्नानं सा विकृतिरित्यर्थः। **अपूर्वाणि** अप्राकृतानि । विकृतिसन्निधावेवापूर्वतया विहितानीति यावत् । अत्र-प्रकृतिपदार्थमाह—**यत्रेति । समग्राङ्गोपदेश इति** । अपेक्षितयावदङ्गवाक्याम्नानमित्यर्थः । **ननु** विकृतावपि प्रधानस्योपकारकाकाङ्क्षासत्वात् अङ्गानां चोपकार्याकाङ्क्षासत्वात् अस्तु परस्पराकाङ्क्षया ऽङ्गत्वं इत्यत आह—**तत्र यद्यपीति । तेषां** वैकृताङ्गानाम् । **न कथम्भावाकांक्षास्तीति**। वैकृताकाङ्क्षान्वयदशायामिति शेषः। तर्ह्युत्पन्ना वैकृती आकाङ्क्षा केन शाम्यति ? तदाह—**प्राकृतैरेवेति** । एवं च प्रथमतः प्राकृताङ्गविषयिण्या एवाकाङ्क्षाया उत्थानात् तदन्वये च आकाङ्क्षायाः शान्तत्वात् अपूर्वाङ्गान्वयदशायां कुतः प्रधानाकाङ्क्षेति भावः । **ननु** वैकृतानां सन्निहितत्वेन प्रत्यक्षश्रुतत्वेन च प्रथमं तेषामेवान्वयोऽस्तु, तावतैव चाकाङ्क्षाऽपि शाम्यतु, किमर्थमप्रत्यक्षाणामनुपस्थितानां च प्राकृतानामङ्गानां नैराकाङ्क्ष्यसंपादकत्वं इत्याशङ्क्याह—**न चेति । अक्लृप्तोपकारकत्वेनेति** । अद्ययावदेतेषामनुष्ठानाभावेन एतावताप्येतदीयोपकारस्य कुत्राप्यसिद्धेरित्यर्थः । एवं च न पाठमात्रमाकाङ्क्षाशामकत्वप्रयोजकम् ; किन्तु येषामुपकारजननसामर्थ्यं पूर्वमेव क्लृप्तं तेषामेवाकाङ्क्षाशामकता । तच्च प्राकृतानामेवेति न वैकृतैराकाङ्क्षाशान्तिरिति भावः ।

**न चात्र तेषामुपस्थापकाभावः, उपमितिलक्षणप्रमाणेन तेषामुपस्थितत्वात्। सौर्यवाक्ये हि दृष्टे ओषधद्रव्यकत्वेन एकदैवत्यकत्वेन च सादृश्येन आग्नेयवाक्यमुपमीयते, गवयदर्शनाद्गोरुपमानवत्। तस्मिंश्चोपमिते तेन तदर्थो ज्ञायते। सा त्र्यंशा भावना। तत्र सौर्यवाक्ये भावनायाः भाव्यकरणयोः सत्त्वात् इतिकर्तव्यताकाङ्क्षायामुपकारपृष्ठभावेनाग्नेयेतिकर्तव्यताऽतिदिश्यते-सौर्ययागेन ब्रह्मवर्चसं भावयेदा(१)ग्नेयवदुपकृत्येति। तथा च तयैवाकाङ्क्षोपशमान्न विकृतेः प्रकरणमस्ति। अन्यतराकाङ्क्षारूपस्थानादेव चापूर्वाङ्गग्रहणम्।**

**न च प्राकृताङ्गग्रहणमेव विकृतौ प्रकरणात् किं न स्यादिति वाच्यम्। तेषामपि प्रकृत्युपकारकतयाऽऽकाङ्क्षोपशमात्।**

---

प्राकृतानामत्रोपस्थापकप्रमाणाभावमाशङ्क्य परिहरति—**न चेति**। तेषां प्राकृताङ्गानाम्। **उपमितीति**। उपमानेत्यर्थः। इदं हि मीमांसकानामुपमिति स्वरूपम्—नागरिकः पुरुषो नगरे दृष्टगुः कदाचिदरण्यं गतस्तत्र गवयाख्यं मृगं पश्यति। ततस्तद्गतं गोसादृश्यं प्रत्यक्षेणावगच्छति। अनन्तरं च समानसम्वित्संवेद्यतया गवयसादृश्यं गोनिष्ठं स्मरति-एतत्सदृशी मदीया गौरिति। सैव चोपमितिरित्युच्यते। तत्करणं च गवयपिण्डदर्शनमुपमानमिति। **सौर्यवाक्ये**। "सौर्यं चरुं निर्वपेदि"ति वाक्ये। **ओषधद्रव्यकत्वेन** स्वविधेयकर्मण ओषधिप्रभवव्रीह्यादिसम्पाद्यद्रव्यकत्वेन। **एकदैवत्यत्वेन** एकत्वसंख्याविशिष्टदेवतावत्त्वेन। **आग्नेयवाक्यमिति**। 'यदाग्नेय' इति वाक्यमित्यर्थः। यथा गवयदर्शनात् तत्सदृश्या गोः स्मरणं, तथा सौर्यवाक्यदर्शनात् तत्सदृशस्याग्नेयवाक्यस्य स्मरणमित्यर्थः। आग्नेयस्यापि ओषधद्रव्यकत्वात् एकदेवताकत्वाच्चेति भावः। **तेन** वाक्येन। भावनाया इतिकर्तव्यताकाङ्क्षायामिति संबन्धः। **भाव्यकरणयोस्सत्त्वादिति**। ब्रह्मवर्चसरूपस्य भाव्यस्य धात्वर्थरूपस्य करणस्य च सत्त्वादित्यर्थः। यद्यप्यत्र न श्रुतस्य निर्वापस्य करणत्वेनाऽन्वयस्सम्भवति तथापि द्रव्यदेवतासम्बन्धान्वयानुपपत्तिकल्पितस्य यागस्य करणत्वेनान्वय इति बोध्यम्। **उपकारपृष्ठभावेनेति**। प्रथमतो विकृतिभावनया प्राकृतोपकारस्यैवापेक्षणात् तस्यैव प्रथममतिदेशे तत्संपादकत्वेन तत्पश्चाद्भावितयेत्यर्थः। **आग्नेयवदिति**। यथा आग्नेयेन प्रयाजाद्युपकृतेन स्वर्गो भावितः तद्वदित्यर्थः। एवञ्च प्राकृतैरेवाङ्गैः विकृत्याकाङ्क्षायाश्शान्तत्वात्, नोभयाकाङ्क्षालक्षणं प्रकरणं विकृतौ सम्भवतीत्याह— **तथा चेति**। कथं तर्ह्यपूर्वाङ्गानामन्वयः? अत आह-**अन्यतरेति**। अङ्गनिष्ठप्रधानविषयकाकाङ्क्षावशादेवेत्यर्थः।

**ननु** वैकृताङ्गानां प्रकरणग्राह्यत्वाभावेऽपि प्राकृतानामेव विकृतिसम्बन्धः प्रकरणात् स्यात्। तदन्वयदशायां विकृतेराकांक्षासत्वात् इत्याशङ्क्याह—**न चेति**। **तेषामपीति**। यद्यपि विकृतेराकांक्षाऽस्ति, तथापि प्राकृतानां प्रकृतिसन्निधौ पठितत्वेन तदुपकारसंपादनेनैव तेषामाकाङ्क्षाशान्तेः न विकृत्यन्वयदशायामाकाङ्क्षाऽस्तीत्यर्थः॥

**ननु** प्राकृताङ्गानामाकाङ्क्षाभावे तेषां विकृतिसम्बन्धस्य अन्यतराकाङ्क्षारूपस्थानगम्यत्वेन वैकृताङ्गानां चोभयाकाङ्क्षालक्षणप्रकरणग्रहणसंभवात् पूर्वं तैरेव विकृतेः सम्बन्धे

---

१. आग्नेयवदिति. ख. पु.

नन्वु प्राकृतानामङ्गानामाकाङ्क्षाभावे तेषां विकृतौ संबन्धः केवलं स्थानात् स्यात्; अपूर्वाणां त्वाकाङ्क्षासत्त्वाद्विकृतेरप्याकाङ्क्षावत्त्वात् तेषां तत्सम्बन्धः प्रकरणात्स्यात्, प्रकरणं च स्थानात् झटिति विनियोजकमित्यपूर्वाणामेव प्रथमसम्बन्धः स्यात्, न प्राकृतानामिति।

(१) अत्रोच्यते—सत्यं प्रकरणं झटिति विनियोजकम्। तथापि प्रमाणबलाबलात्प्रमेयबलाबलस्य ज्यायस्त्वादुक्तविधयोपस्थितानां प्राकृतानामेव सम्बन्धो युक्तः(२)स्यात्, कॢप्तोपकारत्वात्, न वैकृतानां, कल्प्योपकारत्वात्। विकृतेश्चोपकारकपदार्थाकाङ्क्षा, न पदार्थमात्राणामिति युक्तः प्रथमं प्राकृताङ्गसम्बन्धः। ततश्च न विकृतौ प्रकरणं विनियोजकम्॥

यत्तु विकृतौ प्राकृताङ्गानुवादेन विधीयते-यथा 'औदुम्बरो यूपो भवति' इति यूपानुवादेन औदुम्बरत्वम्, तत्प्रकरणाद्गृह्यते।

ननु न तत्प्रकरणाद्गृह्यते अक्रियात्वात्। क्रियाया एव प्रकरणग्राह्यत्वादिति चेत्-सत्यम्। तथापि तु तावद्विधीयमानस्यौदुम्बरत्वस्यास्त्येवाकाङ्क्षा

---

तेनैवाकाङ्क्षोपरमात् प्राकृताङ्गग्रहणमेव न स्यादिति शङ्कते—**नन्विति**॥

आशङ्कां निराकरोति—**अत्रोच्यत इति। प्रमाणबलाबलादिति।** निरूपितमेतदधस्ताल्लिङ्गनिरूपणावसरे। एवं च प्रमाणस्वरूपपर्यालोचनायां यद्यपि स्थानापेक्षया प्रकरणं प्रबलं, तथापि प्रमेयस्वरूपपर्यालोचनायां प्राकृतानामङ्गानां क्लृप्तोपकारकत्वेन स्वतः प्राबल्यात् तेषामेव प्रथमं सम्बन्धो युक्त इति भावः। ननु नात्र क्लृप्तोपकारकत्वेन कल्प्योपकारकत्वेन वा प्रयोजनम्; किन्तु विकृतिः पदार्थान् परमाकाङ्क्षति। आकाङ्क्षा च सन्निहितैरेव शाम्यतीति कथं प्राकृताङ्गसम्बन्धः? इत्यत आह—**विकृतेरिति। न पदार्थमात्राणामिति।** स्यादेवं यदि पदार्थस्वरूपेण पदार्थानामाकाङ्क्षा, न त्वेतदस्ति; किन्तु उपकारजनकत्वेन, तच्च प्राकृतानामेव पूर्वं प्रकृतौ कृतकार्यतया क्लृप्तमिति तेषामेव प्रथमं सम्बन्ध इत्यर्थः। विकृतौ प्रकरणस्याविनियोजकत्वमुपसंहरति--**ततश्चेति**॥

न सर्वथा विकृतौ न प्रकरणं विनियोजकं, किन्तु विकृतावपि यत् प्राकृताङ्गानुवादेन विधीयते तदपि प्रकरणेन गृह्यत इत्याह--**यत्त्विति**। एवञ्च प्रकृतौ, प्राकृताङ्गानुवादेन विहिताङ्गविषये विकृतौ च प्रकरणं विनियोजकं भवतीति सिद्धम्। **औदुम्बरो यूपो भवतीति**। औदुम्बर उदुम्बरवृक्षीयकाष्ठनिर्मितः। **"सोमापौष्णं त्रैतमालभेत पशुकामः"** इति वाक्यविहितकाम्यपशुयागसन्निधौ श्रुतमिदम्।

पूर्वोक्तं द्रव्यादेः प्रकरणग्राह्यत्वाभावं मनसि निधाय शङ्कते—**नन्विति। अस्त्येवाकाङ्क्षेति**। प्रकरणग्रहणं तूभयाकाङ्क्षानिबन्धनम्। तच्चात्रास्ति। औदुम्बरत्वस्याकृतार्थत्वात्। तच्च नापलपितुं शक्यम्। यदितु तस्य द्रव्यरूपत्वं, तर्हि क्रियाद्वारं ग्रहणं भविष्यतीत्यर्थः। ननु यत्र धर्माणां स्वरूपार्थतायामानर्थक्यं तत्रैव प्रधानापूर्वपर्यन्तानुधावनं, यत्र तु स्वरूपे नानर्थक्यं तत्र तदर्थत्वेनोपपत्तौ तावतैव च नैराकांक्ष्यात् प्रधानापूर्वपर्य-

---

१. उच्यते। ख. पु. २. स्यात् इति नास्ति ख. पुस्तके।

किं भावयेदिति । न च यूपानुवादेन तस्य विधीयमानत्वाद्यूपस्य चादृष्टरूपत्वात्तेनैवौदुम्बरत्वस्य नैराकाङ्क्ष्यम्, आहवनीयेनेवाधानस्येति वाच्यम् । यूपस्य केवलादृष्टरूपत्वाभावात् तस्य हि तद्रूपत्वे खादिरत्वादिकं केवलादृष्टार्थं स्यात् । न च तत्संभवति । तथा सति खदिराभावे प्रतिनिधित्वेन कदरोपादानं न स्यात्, अदृष्टार्थस्य प्रतिनिध्यभावात्, न हि खदिरजन्यमदृष्टं कदरेण क्रियत इत्यत्र प्रमाणमस्ति । अत एव नादृष्टार्थानां प्रतिनिधिः । तदुक्तम्—

'न देवताग्निशब्दक्रियमन्यार्थत्वात्' इति ।

अन्यार्थत्वात् अदृष्टार्थत्वात् । प्रतिनिधित्वेन चोपादानं कदरादेरुक्तं ग्रन्थेषु । तस्मान्न यूपस्य केवलादृष्टरूपत्वम्, अपि तु दृष्टादृष्टसंस्कारगणो यूप इति सांप्रदायिकाः ।

एवं चौदुम्बरत्वस्य न यूपमात्रेण नैराकाङ्क्ष्यम्, दृष्टसंस्कारस्य प्रकारान्तरेणापि सम्भवात् । अतश्चास्त्यौदुम्बरत्वस्याकाङ्क्षा । विकृतेरप्यस्ति

---

न्तानुधावनं न युक्तमित्याशङ्क्याह—न चेति । आहवनीयेनेवेति । आहवनीयस्यादृष्टरूपत्वेन तदर्थत्वेऽप्याधानस्य तेनैव यथा नैराकाङ्क्ष्यं, तथेत्यर्थः । तस्य यूपस्य । तद्रूपत्वे केवलादृष्टरूपत्वे । खादिरत्वादिकमित्यादिपदेन बैल्वत्वपालाशत्वादिकं गृह्यते । अभावे अपचारे । कदरः श्वेतखदिरः । उपादानाभावे हेतुमाह—अदृष्टेति । कुतो न ? अत आह—नेति । अत एव अन्येन जननीयस्यादृष्टस्य अन्यस्मादुत्पत्तौ प्रमाणाभावादेव । अदृष्टार्थानां प्रतिनिध्यभावे षाष्ठं सूत्रं प्रमाणयति—तदुक्तमिति । नेति । देवता इन्द्रादि । अग्निः आहवनीयादिः । शब्दो मन्त्रः । क्रिया प्रयाजप्रोक्षणादिः । देवताश्च अग्नयश्च शब्दाश्च क्रियाश्च, तेषां समाहारः देवताग्निशब्दक्रियम् । एते न प्रतिनिधेयाः, अदृष्टार्थत्वादिति सूत्रार्थः । सूत्रमिदं "अन्यार्थसंयोगा"दिति संयोगपदघटितमेवोपलभ्यतेऽन्यत्र । व्याख्यातं च व्याख्यातृभिरेवमेव । अत्र परं अन्यार्थत्वादिति दृश्यते । कदरस्य खदिरप्रतिनिधित्वाभावे इष्टापत्तौ ग्रन्थविरोधमाह—प्रतिनिधीति । ग्रन्थेष्विति । कदरस्य प्रतिनिधित्वाभावे तद्विरुध्येतेति भावः । तस्मात् उक्तयुक्तेः । दृष्टादृष्टेति । दृष्टानां छेदनतक्षणादीनां, अदृष्टानां प्रोक्षणाञ्जनादीनां संस्काराणां समुदाय इत्यर्थः । सांप्रदायिका इति । पार्थसारथिमिश्रप्रभृतय इत्यर्थः । उक्तं हि पार्थसारथिमिश्रैः—"न तु यूपाख्यमेकं किञ्चिदस्ति । यदुत्पत्त्युपयोगिनः परिव्याणादयः परिधौ लुप्तार्थाः स्युः । छेदनादिविधयो हि सर्वे परस्परानपेक्षाः काष्ठगतं दृष्टमदृष्टं वा यथायथं कार्यं गमयन्ति" इति । छेदनप्रोक्षणादिजन्यदृष्टादृष्टरूपाः संस्काराः काष्ठे वर्तमाना यूपशब्दाभिधेयाः" इति च ॥

यूपमात्रेण यूपस्वरूपमात्रसंपादनेन । नैराकांक्ष्याभावे हेतुमाह—दृष्टेति । एवञ्च स्वरूपे आनर्थक्यात् अपूर्वपर्यन्तानुधावनस्यावश्यकत्वेन अस्त्येवापूर्वविषयिणी औदुम्बरत्वस्याकांक्षेत्याह—अतश्चेति । ननु अस्त्वौदुम्बरत्वस्याकांक्षा, विकृतेस्तु शान्ताकांक्षत्वादुभयाकाङ्क्षाभावेन कथं प्रकरणग्राह्यत्वम् ? अत आह—विकृतेरिति । ननु

कथंभावाकाङ्क्षा । सा च तदा शाम्यति यदोपकारास्तत्पृष्ठभावेन च पदार्था अन्वीयन्ते । (१)न तूपकारमात्रान्वयेन शाम्यति । अतश्च यथेन्द्रियभावनायाः करणाकाङ्क्षा दध्नः करणत्वेनान्वये जाते सिद्धस्य करणत्वानुपपत्त्या होमस्याश्रयत्वेनान्वयं यावदनुवर्तते, न तु दध्यन्वयमात्रेण निवर्तते; आश्रयत्वेन च गृह्यमाणो होमः करणाकाङ्क्षयैव गृह्यत इत्युच्यते, न त्वाश्रयाकांक्षा नाम चतुर्थ्यस्ति, एवं विकृतेः कथंभावाकाङ्क्षा नोपकारान्वयमात्रेण निवर्तते; उपकारपृष्ठभावेन यावत्पदार्थान्वयमनुवर्तते । अतश्चोपकारपृष्ठभावेन गृह्यमाणाः पदार्थाः कथंभावाकाङ्क्षयैव गृह्यन्ते । तत्र प्राकृताः पदार्थाः कथंभावाकाङ्क्षया गृह्यमाणा अपि न प्रकरणग्राह्याः, प्रकृत्युपकारकतया तेषामाकाङ्क्षाभावात् । औदुम्बरत्वादयस्तु अन्यानुपकारकतया साकाङ्क्षाः पशुनि-

विकृत्याकांक्षायाः प्राकृताङ्गैरेव शान्तत्वादुभयाकाङ्क्षाभावेन कथमौदुम्बरत्वान्वयदशायां विकृतेराकाङ्क्षावत्त्वं इत्यत आह—**सा च तदेति**। **उपकाराः** प्राकृतोपकाराः। **पदार्थाः** प्राकृताः पदार्थाः। दृष्टान्तमाह—**यथेति**। **इन्द्रियभावनायाः** 'दध्नेन्द्रियकामस्य जुहुया''दिति वाक्यविहितायाः इन्द्रियभाव्यकभावनायाः। **करणाकांक्षेति** । अनुवर्तत इत्यत्रान्वेति । **सिद्धस्येति** । शिक्यस्थदध्नः व्यापारसंबन्धमन्तरा फलसाधनत्वासंभवेनेत्यर्थः। **होमस्येति**। प्रकरणप्राप्तस्येति शेषः। **आश्रयत्वेनेति**। **अन्वयं यावदिति** । अन्वयपर्यन्तमित्यर्थः । **अयमाशयः**—न तावत् दध्नस्सिद्धस्य करणत्वं संभवति। तथात्वे व्यापारसम्बन्धं विना शिक्यस्थेनापि दध्ना फलोत्पत्तिप्रसक्तौ विधिवैयर्थ्यापातात्। अतस्तत्परिहारार्थं दृष्टविधया स्वसाध्यव्यापारमपेक्षमाणो दधिरूपो गुणः स्वसाध्यभोजनहोमाद्यनेकव्यापारसम्बन्धस्यानियमेन प्राप्तौ तद्बाधित्वा प्रकरणेन होमस्यैव समर्पणात् तस्यैव चाश्रयत्वेन सम्बन्धात् तावतैव च शान्ताकाङ्क्षो भवतीति। **ननु** सत्यामाश्रयाकाङ्क्षायां आश्रयत्वेन होमस्यान्वयो युज्येत। न तादृशी काचिदाकाङ्क्षाऽस्ति। भावनाया अंशत्रयमात्रसाकांक्षत्वात्। अतः कथमाश्रयत्वेनान्वय इत्यत आह—**आश्रयत्वेनेति । नत्विति । "शक्यतेत्वत्र न चतुर्थ्यपेक्षाऽस्तीति वक्तुम् । करणापेक्षैव ह्येषा प्रविततरा जाता"** इति वार्तिकोक्तेरिति भावः। दार्ष्टान्तिके प्रकारमिममतिदिशति—**एवमिति । उपकारान्वयमात्रेणेति** । उपकारस्य पदार्थजन्यत्वात् पदार्थानतिदेशे उपकारातिदेशस्यापि वैफल्यात् तत्सार्थक्याय तज्जनकपदार्थान्वयपर्यन्तमनुवर्तते एवाकांक्षेति भावः। कथंभावाकाङ्क्षया पदार्थानां ग्रहणेऽपि प्राकृतानां प्रकरणग्राह्यत्वशङ्कां निवारयति—**तत्रेति** । हेतुमाह—**तेषामिति** । प्राकृताङ्गानामित्यर्थः। **आकांक्षाभावादिति** । सकृदनुष्ठानेनैव शास्त्रचारितार्थ्यादिति भावः। औदुम्बरत्वादीनां परं कथं प्रकरणग्राह्यता ? अत आह—**औदुम्बरत्वादयस्त्विति । अन्यानुपकारका इति** । तेषां विकृतिसन्निधावपूर्वतयैव पाठदद्य यावत्तैः कुत्राप्युपकाराजननादिति भावः। **ननु** विकृतिसन्निधौ पठितानामुपहोमादीनामन्यानुपकारकतया साकाङ्क्षत्वेन तेषामपि प्रकरणविषयत्वं स्यादित्यत आह—**पशुनियोजनेति । अयमभिसन्धिः**—विकृतिभावना तावत्

१. न तूपकारमात्रेण. ख. पु.

योजनयूपपृष्ठभावेन यावत्खादिरत्वमायाति तावद्विधीयन्ते इति युक्तं तेषां प्रकरणाग्रहणम्, उभयाकाङ्क्षासत्त्वात्। यदि हि यूपपृष्ठभावेन खादिरत्वं विहितं स्यात्, ततो विकृतेराकाङ्क्षाभावादौदुम्बरत्वं न प्रकरणग्राह्यं स्यात्। न चैतदस्ति। चोदकस्य खादिरत्वाविषयत्वात्।

ननु-यदि यावत्खादिरत्वमायाति तावदेवौदुम्बरत्वं विधीयते, तदा तेन खादिरत्वबाधोऽप्राप्तबाधः स्यात्, तार्तीयबाधवत्। तथाहि-बाधो द्विविधः-अप्राप्तबाधः प्राप्तबाधश्चेति। तत्र तार्तीयो बाधोऽप्राप्तबाधः। तत्र हि यावत् दुर्बलेन(१)प्रमाणेन विनियोगः कर्तुमारभ्यते तावदेव प्रबलप्रमाणेन विनियोगः क्रियते इति तद्बोधितेनेतरबाधोऽप्राप्तबाधः, दुर्बलप्रमाणस्याप्रवृत्तत्वात्।

---

स्वस्याः फलजनकत्वनिर्वाहार्थं प्राकृतानुपकारान् तत्पृष्ठभावेन च कृतोपकारान् प्राकृतान् पदार्थानाकाङ्क्षति, आकांक्षा च पदार्थान्वयं यावदनुवर्तत इत्युक्तम्। एवं च प्रथमतः पशुनियोजनं, तत्पृष्ठभावेन च यूपोऽतिदिश्यते; तत्पृष्ठभावेन च प्राकृतं खादिरत्वं यावदायाति, ततः पूर्वमेवौदुम्बरत्वस्य विधानात् भवति तस्य प्रकरणग्राह्यता। उपहोमादीनां तु निवृत्ताकांक्षायामेव विकृतिभावनायां विधानात् न तत्रोभयाकांक्षाऽस्तीति न तेषां प्रकरणग्राह्यत्वमिति। ननु प्रकृतिवद्विकृतिः कर्तव्येत्यतिदेशशास्त्रेण पशुनियोजनादीनामिव खादिरत्वस्यापि विकृतौ प्रापितत्वेन तेनैवाकांक्षायाः शान्तत्वात् कथमौदुम्बरत्वस्य प्रकरणग्राह्यत्वम्? इत्याशङ्कां निराकरोति-**यदि हीति**। **खादिरत्वाविषयत्वादिति**। एवं च खादिरत्वस्यातिदेशवाक्येनासंस्पर्शात् विकृतौ विध्यभावेन आकांक्षाया अनिवृत्तेः युक्तमौदुम्बरत्वस्य प्रकरणग्राह्यत्वमिति भावः॥

खादिरत्वस्य चोदकाविषयत्वे तद्बाधस्याप्राप्तबाधत्वं शङ्कते-**नन्विति**। **तार्तीयबाधवदिति**। तृतीयाध्यायगोचरो बाधो यथा अप्राप्तबाधः तद्वदित्यर्थः। **तत्र** तयोर्मध्ये। कथं तार्तीयबाधस्याप्राप्तबाधत्वम्? अत आह—**तत्र हीति**। **विनियोग इति**। पूर्वपूर्वप्रमाणकल्पनद्वारेति शेषः। **तद्बोधितेन** प्रबलप्रमाणबोधितेन पदार्थेन। **इतरबाधः** दुर्बलप्रमाणबोधितस्य पदार्थस्य बाधः। **अप्राप्तबाध इति**। दुर्बलप्रमाणबोधितस्य विनियोगदशामप्राप्तस्यैव बाधात् अप्राप्तबाध इति व्यवहार इति भावः। कथमप्राप्तता? अत आह—**दुर्बलेति**।

> **"निःश्रेण्यारोहणप्राप्यं प्राप्तिमात्रोपपादि च।**
> **एकमेव फलं प्राप्तुमुभावारोहतो यदा॥**
> **एकसोपानपङ्क्तिस्थो भूमिस्थश्चापरस्तयोः।**
> **उभयोश्च जवस्तुल्यः प्रतिबन्धश्च नान्तरा॥**
> **विरोधिनोस्तदेको हि तत्फलं प्राप्नुयात्तयोः।**
> **प्रथमेन गृहीतेऽस्मिन् पश्चिमोऽवतरेन्मुधा॥"**

इत्यनेन प्रकारेण स्वरूपतः सत एवोत्तरोत्तरस्य स्वस्वविषयविनियोगे आकांक्षारूपकल्पनामूलोच्छेदात् श्रुतिकल्पनाप्रतिबन्धेन अलब्धप्रमाणभावस्यैव बाधनादिति भावः॥

---

१. प्रमाणेन इति नास्ति क. पु.

प्राकृतस्य त्वङ्गस्य विकृतौ चोदकप्राप्तस्य(१)प्रत्याम्नानादर्थलोपात् प्रतिषेधाद्वा यो बाधः स प्राप्तबाधः। यथा-प्राकृतानां कुशानां प्रतिकूलशराम्नानात्, यथा वाऽवघातस्य कृष्णलेषु वैतुष्यरूपप्रयोजनलोपात्, यथा वा पित्र्येष्टौ होतृवरणस्य (१)'न होतारं वृणीत' इति प्रतिषेधात्। औदुम्बरत्वेन च खादिरत्वबाधः प्राप्तबाध एव वक्तव्यः, शरकुशन्यायेन। चोदकस्य च खादिरत्वाविषयत्वे प्राप्त्यभावात्तदनुपपत्तिः स्यादिति।

उच्यते-तार्तीयप्रमाणविनियुक्तेनेतरस्य बाधनं तावदप्राप्तबाधनम्। प्रकरणं च तार्तीयम्। तेन तद्विनियुक्तौदुम्बरत्वेनेतरस्य बाधनमप्राप्तबाध एव। नहि वैकृतेन प्राकृतबाधः प्राप्तबाध एवेति कुलधर्मः।

वस्तुतस्तु प्राप्तबाध एवायम्। न च खादिरत्वस्य चोदकाविषयत्वेन

---

एवमप्राप्तबाधं निरूप्य प्राप्तबाधस्वरूपं निरूपयितुमारभते—**प्राकृतस्येति**। **प्रत्याम्नानात्** विरुद्धपदार्थाम्नानात्। **अर्थलोपात्** अर्थस्य प्राकृतस्य प्रयोजनस्य लोपात्। **प्रतिषेधात्** न कुर्यादिति शब्दतो वारणात्। **प्राकृतानां कुशानामिति**। प्रकृतौ दर्शपूर्णमासयोः **'कौशं बर्हि'** रित्यनेन विहितानामित्यर्थः। **प्रतिकूलेति**। **"रौद्रीं रोहिणीमालभेताभिचरन्"** इति वाक्यविहिताभिचारेष्टौ **"शरमयं बर्हिः"** इत्यनेन बर्हिःकार्ये शराणां विधानादित्यर्थः। **कृष्णलेष्विति**। **"प्राजापत्यं घृते चरुं निर्वपेत् शतकृष्णलमायुष्कामः"** इति विहितायुष्कामेष्ट्यङ्गभूतेष्वित्यर्थः। **प्रयोजनलोपादिति**। कृष्णलानां स्वर्णखण्डरूपतया तत्र वैतुष्यस्यासम्भवादिति भावः। **पित्र्येष्टाविति**। महापितृयज्ञ इत्यर्थः। **होतृवरणस्येति**। अस्याश्च दर्शपूर्णमासविकृतित्वेन ततोऽतिदेशतः प्राप्तस्य होतृवरणस्येत्यर्थः। **शरकुशन्यायेनेति**। प्राकृतानां कुशानां वैकृतैश्शरैर्बाधो यथा प्राप्तबाधः, एवं प्राकृतस्य खादिरत्वस्य बाधः प्राप्तबाध एव वक्तव्यः। एवं च यदि न चोदकः खादिरत्वं विषयीकरोति तदा खादिरत्वस्याप्राप्तत्वादेव कथं तत्र प्राप्तबाधव्यवहारः सङ्गच्छेतेत्याह-**चोदकस्येति**। **अनुपपत्तिस्स्यादिति**। एवञ्च "औदुम्बरो यूपो भवति" इत्यस्य प्राप्तबाधत्वसिद्धये चोदकस्य खादिरत्वविषयकत्वमवश्यं वक्तव्यं भवतीति भावः। **तद्विनियुक्तेति**। प्रकरणविनियुक्तेत्यर्थः। **इतरस्य** खादिरत्वस्य स्थानप्रमाणविनियुक्तस्य। **ननु** वैकृतेन प्राकृतबाधस्य प्राप्तबाधत्वाङ्गीकरणात् कथं सोऽप्राप्तबाधो भवेत्? अत आह—**नहीति**।

**नन्वेवं** सति यत्र प्रत्याम्नानात् प्रतिषेधाद्वा बाधः तत्रावश्यं प्रकरणविनियोज्यत्वसम्भवेन अप्राप्तबाधत्वापत्तौ तस्य तृतीये निरूपणीयत्वेन दशमे निरूपणानुपपत्तिः। नचास्य प्राधान्येन अध्यायार्थत्वाभावेऽपि आहवनीयादिबाधस्येव प्रसङ्गान्निरूपणमिति वाच्यम्। तथात्वे प्राप्तबाधस्य त्रैविध्यकथनानुपपत्तेः, इत्यत आह—**वस्तुतस्त्विति**। **ननु** खादिरत्वस्य चोदकविषयत्वमङ्गीक्रियते? न वा? अन्त्ये तस्य प्राप्त्यभावेन कथं तस्य बाधः प्राप्तबाधो भवेत्? अङ्गीकरणे वा तेनैव यूपस्य नैराकांक्ष्यात् कथमौदुम्बरत्वस्य प्रकरणग्राह्यत्वम्? इत्याशङ्क्याह—**नचेति**। **तद्विषयत्वे** चोदकविषयत्वे। **तेनैव**

---

२. प्रतिकूलाम्नानात्. इति. ख. पु.

**प्राप्त्यभावात् कथं तद्बाधः प्राप्तबाधः ? तद्विषयत्वे वा तेनैव नैराकाङ्क्ष्या-न्नौदुम्बरत्वे प्रकरणं विनियोजकं स्यादिति वाच्यम् । नहि प्राप्तबा-धस्थले चोदकेन पदार्थाः प्राप्यन्ते । तथा सति शास्त्रप्राप्तत्वेन बाधो न स्यात् । किं तर्हि तानेव पदार्थान्वस्तुतः प्रापयति ये विकृतौ न बाध्यन्ते । ते च पदार्थाः प्रकृतिवच्छब्देन प्राप्यन्ते इति भवति पुरुषस्य भ्रान्तिः-यथा प्रकृ-तौ कृतं तथा विकृतौ कर्तव्यमिति सर्वे पदार्थाः प्राकृताः कर्तव्याः—इति। अ-तश्च भ्रान्तिप्राप्ताः खादिरत्वादयः शास्त्रप्रतिपन्नैरौदुम्बरत्वादिभिर्बाध्यन्ते इति भवति तद्बाधः प्राप्तबाधः । न च भ्रान्तिप्रतिपन्नेन वैधी आकाङ्क्षा निवर्तयितुं शक्यते । तस्माद्यक्तमुक्तमुभयाकाङ्क्षारूपप्रकरणसम्भवाद्विकृतौ प्राकृताङ्गानु-वादेन विधीयमानानामौदुम्बरत्वादीनां प्रकरणं विनियोजकमिति ।**

---

खादिरत्वेनैव । **शास्त्रप्राप्तत्वेनेति** । विकृत्याकांक्षान्यथानुपपत्त्या कल्पितेन प्रकृतिवद्वि-कृतिः कर्तव्येत्यनेन शास्त्रेण प्राप्तेरित्यर्थः । **बाधो न स्यादिति** । प्रमाणपरिगृहीततया अत्यन्तबाधो न स्यादित्यर्थः । तथाच विकल्पः प्रसज्येतेति भावः । **न बाध्यन्त इति** । तथा च विकृतौ अबाधितपदार्थविषयकत्वमेवातिदेशस्येति भावः । कथं तर्हि प्राप्तबा-धत्वम् ? अत आह--**ते चेति** । विकृतौ बाध्यमाना अपीत्यर्थः । **प्रकृतिवच्छब्देन** प्रकृतिवद्विकृतिः कर्तव्येतिवाक्यघटकप्रकृतिवदिति शब्देन । भ्रान्तेः प्रकारमाह—**यथेति** । एवं च भ्रान्तिप्राप्तस्यैव बाधः प्राप्तबाध इत्युच्यते न वस्तुतः प्राप्तस्येत्यत आह—**अतश्चेति** । एवं च वस्तुतोऽप्राप्तानेव पदार्थान् स्वभ्रान्त्या प्राप्तान्मन्यते पुरुषः । तादृश्या भ्रान्तेरेव निवारकमौदुम्बरत्वादिशास्त्रमिति तदादायैव प्राप्तबाधत्वव्यवहार इति फलितम् । एतेन अप्राप्तबाधस्थले पदार्थानां भ्रान्त्यापि प्राप्तिर्नास्तीति सूचितम् । **ननु** खादिरत्वादीनां प्राप्तबाधसिद्ध्यर्थं भ्रान्त्यापि प्राप्तिरवश्यमङ्गीकरणीया । एवं च तैरेवाकाङ्क्षाशान्तेः कथमौदुम्बरत्वादीनां प्रकरणग्राह्यत्वमित्याशङ्क्य न भ्रान्तिप्राप्तानां वैधाकांक्षानिवर्तकत्वं सम्भवतीत्याह—**न चेति** । औदुम्बरत्वादीनां प्राकृताङ्गानुवादेन विधीयमानानां प्रकरणग्राह्यत्वमुपसंहरति—**तस्मादिति** ।

केचित्तु-**नेत्थम्भावेन गृह्येत क्रियारूपविवर्जनात् ।**
**इतिकर्तव्यतांशस्थां येनोद्दिश्योपसत्क्रियाम् ॥**

इति बलाबलाधिकरणस्थवार्तिके क्रियामुद्दिश्येत्युक्तत्वात् विकृतौ द्रव्योद्देशेन जात्या-दिविधिस्थले **"औदुम्बरो यूपो भवति"** इत्यादौ न प्रकरणग्राह्यत्वम् । न च यूपल-क्षितनियोजनसम्बन्ध एव वाक्यीय इति वाच्यम् । आनर्थक्यपरिहारस्य सन्निधिनैव सिद्धेः । यूपपरिच्छेदिकायाश्चौदुम्बरत्वजातेरर्थापत्तिकल्पितनियोजन एवान्वयात् । यत्र तु प्रमाणान्तरात् क्रियान्वयस्यालाभः तत्रैव परं लक्षितक्रियान्वयं यावत् विधिरायास्येत यथा—**यस्य पर्णमयी जुहूर्भवतीत्यादौ** । एवं च क्रियोद्देशेनैव विहितस्य प्रकरण-ग्राह्यत्वसम्भवात् यत्प्राकृताङ्गानुवादेन विधीयत इत्यादौ अङ्गपदं क्रियापरमेवेत्याहुः । एतेषां मते दृष्टादृष्टसंस्कारविशिष्टं काष्ठमेव यूपशब्दार्थ इति बोध्यम् ॥

एवं पशुचातुर्मास्यादौ प्रकृतिप्राप्तानूयाजोद्देशेन विहितस्य पृषदाज्यस्यापि प्रकरण-

एवं 'पृषदाज्येनानूयाजान् यजती'ति प्राकृतानुयाजानुवादेन विधीयमानं पृषदाज्यमपि प्रकरणाद्विकृत्यङ्गमिति केचिदाचार्याः। (१)अस्मत्तातचरणास्त्वेवमाहुः—पृषदाज्यं हि अनुयाजानुवादेन विधीयते। तत्स्वरूपे चानर्थक्यप्राप्तौ तैर्न विकृत्यपूर्वं लक्षयितुं युक्तं, विप्रकर्षात्; किन्तु दीक्षणीयावाङ्नियमन्यायेन स्वापूर्वमेव लक्षयितुं (२)युक्तं, सन्निकर्षात्। अत एवोत्पवनादीनां प्रोक्षणाद्यपूर्वप्रयुक्तत्वमुक्तं नवमे। अतश्च विधीयमानस्य पृषदाज्यस्य वाक्यप्रतिपन्नेनानुयाजापूर्वेणैव नैराकाङ्क्ष्यान्न प्रकरणाद्विकृत्यपूर्वार्थत्वमिति।

---

ग्राह्यत्वं वदतां न्यायसुधाकृतां मतमनुवदति—**एवमिति**। उक्तं हि तैस्सन्तर्दनाधिकरणे—**"पृषदाज्येनानूयाजान् यजती"** ति प्राकृतानुयाजानुवादेन पृषदाज्यविधानात् प्राकृताङ्गग्रहणवेलायामेव पृषदाज्यग्रहणप्रतीतेः तदानीं च नैराकाङ्क्ष्याभावात् प्रकरणेन पृषदाज्यं यथा गृहीतम्" इति। **एवमिति**। यथा प्राकृताङ्गानुवादेन विहितस्यौदुम्बरत्वस्य प्रकरणग्राह्यत्वं तथेत्यर्थः। **अस्मत्तातचरणास्त्विति**। अनन्तदेवसंज्ञका इति शेषः। **तत्स्वरूपे** अनूयाजस्वरूपे। **आनर्थक्यप्राप्ताविति**। विनापि पृषदाज्यं येन केनापि द्रव्यान्तरेण अनुयाजानुष्ठानसम्भवादिति भावः। **तैः** अनूयाजैः। **विकृत्यपूर्वं** स्वसम्बन्धिपशुयागादिजन्यप्रधानापूर्वम्। **विप्रकर्षादिति**। अनूयाजजन्यापूर्वापेक्षया विप्रकर्षादित्यर्थः। **दीक्षणीयावाङ्नियमन्यायेनेति**। **"आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः"** इति दीक्षार्थत्वेन विहितेष्टिर्दीक्षणीया। **'यावत्या वाचा कामयते तावत्या दीक्षणीयायामनुब्रूयात्'** इति वाक्येन ज्योतिष्टोमाङ्गभूतदीक्षणीयोद्देशेन कामस्वरो विधीयते, तस्य च दीक्षणीयास्वरूपे आनर्थक्यप्रसक्तौ दीक्षणीयापदेन दीक्षणीयाजन्यमपूर्वमेव लक्षयित्वा तदुद्देशेनैव कामस्वरविधानं, तस्यैव सन्निकर्षात्; न तु ज्योतिष्टोमीयपरमापूर्वोद्देशेन, तस्य विप्रकर्षात्, दीक्षणीयापूर्वार्थत्वेऽप्यानर्थक्यपरिहारादित्युक्तं नवमे, तन्न्यायेनेत्यर्थः। **स्वापूर्वमेव** अनूयाजजन्यापूर्वमेव। **अत एव** स्वरूपे आनर्थक्यप्रसक्तौ तस्य सन्निहितस्वजन्यापूर्वलक्षकत्वादेव। **उत्पवनादीनामिति**। **'उदग्राभ्यां पवित्राभ्यां प्रोक्षणीरुत्पुनाति'** इति वाक्यविहितस्योत्पवनस्य **"शुन्धध्वं दैव्याय कर्मणे इति त्रिः प्रोक्षति"** इति विहितपात्रप्रोक्षणस्वरूपे आनर्थक्यप्रसक्तौ तेषां सन्निहितप्रोक्षणजन्यापूर्वप्रयुक्तत्वमेव, न तु विप्रकृष्टदर्शपूर्णमासापूर्वप्रयुक्तत्वमित्युक्तमित्यर्थः। **नवम इति**। नवमाध्यायस्य प्रथमे पादे द्वितीयाधिकरणे द्वितीयवर्णक इत्यर्थः। एवं च अनूयाजार्थं विधीयमानस्य पृषदाज्यस्य अनूयाजस्वरूपे आनर्थक्यप्रसक्तौ अनूयाजपदेन अनूयाजापूर्वं लक्षयित्वा तदर्थत्वमेवाङ्गीक्रियते। तेनैव च तस्य नैराकाङ्क्ष्यात्, न तु विकृतिप्रधानभावनया ग्रहणमिति न प्रकरणग्राह्यत्वं तस्येत्युपसंहरति—**अतश्चेति**। एवञ्च प्रबलेन वाक्येन स्वविषयापहारात् दुर्बलस्य प्रकरणस्य तत्र प्रवृत्तिरेव नास्तीति न प्रकरणविनियोज्यत्वं पृषदाज्यानामिति भावः॥

---

१ अन्ये त्वे २ क्रमविप्रक.

(१)वयं त्वङ्गीकृत्य ब्रूमः—भवतु वा विकृत्यपूर्वार्थत्वम्। तथापि पृषदाज्यस्य न प्रकरणं विनियोजकं भवति। यूपपृष्ठभावेन हि यावत्खादिरत्वमायाति, तावदौदुम्बरत्वविधानादुभयाकाङ्क्षासम्भवाद्युक्तः प्रकरणविनियोगः। एवं यावदनुयाजपृष्ठभावेनाज्यमायाति तावदेव यदि पृषदाज्यं(२)विधीयेत तदोभयाकाङ्क्षासम्भवात्प्रकरणविनियोगो भवेत्। न त्वेतदस्ति। नहि पृषदाज्यं नाम द्रव्यान्तरं किंचिदस्ति, यदाज्यस्थानापन्नं विधीयेत, औदुम्बरत्वमिव खादिरत्वस्थानापन्नम्; पृषच्छब्दस्य पृषन्मणिरित्यादौ चित्रतावाचित्वेन दृष्टत्वात्, पृषदाज्यशब्दस्य चित्राज्यवाचित्वात्। अत एव निगमेषु आज्य(३)पानित्येव वक्तव्यं न तु पृषदाज्यपा(४)नित्युक्तम्।

न च यावत्प्राकृतमाज्यमायाति तावदेव चित्राज्यविधानात् प्रकरणविनियोगः सम्भवतीति वाच्यम्। नहि पृषदाज्यशब्देन चित्रतागुणविशिष्टमाज्यं विधीयते। विशिष्टविधाने गौरवापत्तेः, किं तु प्राकृताज्यानुवादेन चित्रतागुणमात्रं विधीयते, 'लोहितोष्णीषा ऋत्विजः प्रचरन्ती' तिवत्। तदुक्तं दशम-

---

एतावता स्वपितृचरणानामाशयमुपवर्ण्य इदानीं स्वीयं मतमुद्घाटयितुमारभते—**वयन्त्विति**। विकृत्यर्थत्वमिति अङ्गीकृत्यापीत्यत्र सम्बध्यते। **ब्रूम इति**। वक्ष्यमाणरीत्या प्रकरणाग्राह्यत्वमिति शेषः। तदेवोपपादयति—**भवतुवेति**। **अनूयाजपृष्ठभावेनेति**। प्रथमतो विकृतेरुपकारापेक्षायां उपकारः, तत्पृष्ठभावेन च अनूयाजाः, तत्पृष्ठभावेन च तत्साधनीभूतमाज्यमायातीत्यर्थः। **ननु**—पृषदाज्यस्याज्यभिन्नत्वेन आज्यस्थानापन्नत्वेन विधिसम्भवात् कथं नौदुम्बरत्वसाम्यमित्यत आह—**पृषदिति**। मणिरित्यादिपदेन पृषद्रज्जुः पृषन्मृग इत्यादेः परिग्रहः। **निगमेषु** आवाहनसूक्तवाकादिमन्त्रेषु। **अयं भावः** - सन्ति प्रकृतौ वक्ष्यमाणदेवतावाहनार्था इष्टदेवतासंस्कारार्थाश्च मन्त्राः '**देवानाज्यपानावह, देवा आज्यपा आज्यमजुषन्त**' इत्यादयः, ते चाज्यदेवताप्रकाशका विकृतावुपकारपृष्ठभावेनातिदिष्टाः। यदि पृषदाज्यस्य द्रव्यान्तरत्वं तर्हि तदीयदेवताप्रकाशकत्वेन पृषदाज्यपदमाज्यपदस्थाने ऊहनीयं भवेत्। न चोहितव्यं, किन्तु प्राकृतमेव पदं प्रयोज्यमित्युक्तं तदधिकरणे; अतो ज्ञायते न पृषदाज्यं द्रव्यान्तरमिति॥

**ननु**-आज्यस्थाने चित्राज्यविधानेनापि प्रकरणग्राह्यत्वं सम्भवत्येवेत्याशङ्क्य नात्र गुणविशिष्टस्याज्यस्य विधानमित्याह--**न चेति**। **गौरवापत्तेरिति**। विशिष्टे विधिव्यापारकल्पनारूपगौरवापत्तेरित्यर्थः। **ननु**-पृषदाज्यपदे एकांशस्योद्देश्यत्वमेकांशस्य विधेयत्वमित्येकप्रसरताभङ्गापत्तेः कथमाज्योद्देशेन चित्रतामात्रविधानमित्यत आह—**लोहितोष्णीषा इति**। यथा लोहितोष्णीषा इत्यत्र एकप्रसरताभङ्गभिया लौहित्यवि-

---

१. वयन्त्वङ्गीकृत्यापि विकृत्यर्थत्वं ब्रूमः। भवतु वा विकृत्यर्थत्वं पृषदाज्यस्य। तथापि न प्रकरणं इत्येव मुद्रितपुस्तकेषु पाठस्समुपलभ्यते। तथैव व्याख्यातं च गुरुचरणैः। तथाप्युपरितनस्य पाठस्य प्राचीनहस्तलिखितकोशेषूपलम्भात् तत्रैव स्वरसतां पश्यता मया स एव पाठस्स्वीकृतः।

२. विधीयते. क. ख. ३–४ 'पानामि'

चतुर्थचरणान्ते—'न वा गुणशास्त्रत्वात्' इति।

प्राकृतस्यैवाज्यस्य चित्रतागुणमात्रविधानमिति च शास्त्रदीपिका। एवं च विकृतेः प्राकृतेनाज्येन क्लृप्तोपकारैश्चानुयाजैर्नैराकाङ्क्ष्ये पश्चाद्विधीयमानस्य चित्रतागुणस्योपहोमाद्यपूर्वाङ्गवन्न प्रकरणं विनियोजकं सम्भवति।

यदि हि प्राकृतस्य कस्यचिद्गुणस्य स्थाने चित्रता गुणो विधीयेत तदा स गुणो यावदायाति तावद्विकृतेर्नैराकाङ्क्ष्याभावात् चित्रतागुणस्य च तावदेव विधानादुभयाकाङ्क्षासम्भवात् प्रकरणविनियोगो भवेत्। न च तादृशः प्राकृतो गुणोऽस्ति। आज्यस्यानुयाजानां च चित्रतागुणात्प्रागेव विधानात्, तस्य तत्स्थानापन्नत्वाभावात्।

न च आज्यपृष्ठभावेन यावत्प्राकृतं निर्गुणत्वमायाति तावदेवास्य विधानात्प्रकरणसम्भव इति वाच्यम्। निर्गुणत्वस्याविहितत्वेन पाणिकण्डूयनवद-

---

शिष्टोष्णीषविधानेऽपि प्राप्ताप्राप्तविवेचने उष्णीषस्य प्रकृतितः प्राप्तत्वेन लौहित्यमात्रे विधेः पर्यवसानात् नैकप्रसरताभङ्गः, एवमत्रापि विशिष्टविधौ सत्यपि विशेषणमात्रे विधेस्तात्पर्यात् नैकप्रसरताभङ्ग इति भावः। **न वा गुणशास्त्रत्वादिति।** नावाहनादिनिगमेषु पृषदाज्यपानिति वक्तव्यम्, पृषदाज्यशब्दस्य गुणमात्रविधायकत्वादिति सूत्रार्थः। शास्त्रदीपिकाप्यस्मदनुकूलेत्याशयेनाह—**प्राकृतेति। चित्रतागुणमात्रमिति। 'द्वयं वा इदं सर्पिश्च दधि च'** इति वाक्यशेषात् आज्ये दधिमिश्रणरूपं चित्रत्वमात्रं विधीयत इत्यर्थः। **नैराकाङ्क्ष्य इति।** विकृतेरिति शेषः। विकृतौ निराकाङ्क्षीकृतायामेव पृषत्ताया विधानात् नोभयाकाङ्क्षालक्षणं प्रकरणं सम्भवतीति भावः। **उपहोमाद्यपूर्वाङ्गवदिति।** यथा **"अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालन्निर्वपेत्, प्रजापतये रोहिण्यै चरुं निर्वपेत्"** इति विहितनक्षत्रेष्टिसन्निधौ विहितानां **'अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा' "प्रजापतये स्वाहा रोहिण्यै स्वाहा"** इत्याद्युपहोमानां प्राकृतैः क्लृप्तोपकारैरेवाङ्गैः निराकाङ्क्षीकृतत्वाद्विकृतिभावनायाः न प्रकरणविनियोज्यत्वमेवं पृषत्ताया अपीत्यर्थः॥

**ननु**—यावदाज्यपृष्ठभावेन प्राकृतो गुण आयाति तावत् पृषत्ताविधानात् कथं न प्रकरणग्राह्यत्वमित्यत आह—**यदि हीति। नैराकाङ्क्ष्याभावादिति।** विकृत्याकाङ्क्षायाः प्राकृतचरमाङ्गान्वयं यावदनुवर्तनादिति भावः। **तावदेव** ततः पूर्वमेव। **गुणोऽस्तीति।** प्रकृतौ कस्यापि गुणस्याज्योद्देशेनाविधानादिति भावः। **ननु**–प्राकृता अनूयाजास्तत्पृष्ठभावेनाज्यं वा यावदायान्ति ततः पूर्वमेव पृषदाज्यविधिरस्तु। ततश्च प्राकृतस्थानापन्नत्वेन सम्भवति प्रकरणग्राह्यत्वमिति मन्दाशङ्कां मन्दविषन्यायेन परिहरति—**आज्यस्येति।** पृषत्तायाः प्राकृतानूयाजोद्देशेनैव विधेयत्वेन ततः पूर्वं तत्प्राप्त्यवश्यंभावेन तत्स्थानापन्नता न कदापि सम्भवतीति भावः॥

**ननु**-तथापि प्राकृतस्य निर्गुणस्य स्थाने विहितत्वात् पृषत्ताया अस्तु प्रकरणग्राह्यतेत्याशङ्क्याह—**न चेति। अस्य** पृषत्तारूपगुणस्य। **अनङ्गत्वादिति।** न ह्यविहितमङ्गं भवतीति न्यायादिति भावः। **पाणिकण्डूयनवदिति** पाणिना कण्डूयनं पाणिकण्डूयनं

**नङ्गत्वाद्विकृतेस्तदाकाङ्क्षाभावात्। तथा हि—ज्योतिष्टोमे दक्षिणादानसमये विहितकृष्णविषाणत्यागस्य द्विरात्रादिषु चोदकप्राप्तस्य प्रथमेऽह्नि अननुष्ठानम्। उत्तरेऽह्नि दक्षिणादानपूर्वकालीनैः पदार्थैः कृष्णविषाणकण्डूयनस्य शास्त्रविहितत्वेनापेक्षितत्वात्। ज्योतिष्टोमे च दक्षिणादानोत्तरकालं पाणिकण्डूयनं दृष्टमपि द्विरात्रादिषु प्रथमेऽह्नि अनुष्ठीयमानैर्दक्षिणादानोत्तरकालीनैः पदार्थैर्नापेक्ष्यते, तस्य प्रकृतावर्थसिद्धत्वेनाशास्त्रीयत्वादिति। एवं निर्गुणत्वस्याविहितत्वेन विकृतेस्तदपेक्षा नास्तीति। तस्मादुभयाकाङ्क्षाया असम्भवात्पृषदाज्यस्य न प्रकरणविनियोगः सम्भवतीत्यलमतिविस्तरेण।**

**तत्सिद्धं महाप्रकरणं प्रकृतावेव विनियोजकम्। विकृतौ तु यत्प्राकृतदृष्टार्थाङ्गानुवादेन विधीयते तस्य विनियोजकं, न तु केवलं विधीयमानस्यापूर्वाङ्गस्येति**

---

तद्वदित्यर्थः। तमेव दृष्टान्तं विशदयति—**तथा हीति**। **अत्रायमाशयः**-ज्योतिष्टोमे सुत्यादिवसे माध्यन्दिने सवने ऋत्विग्भ्यो दक्षिणादानं विहितम्, अनन्तरञ्च(१)**नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यतो**'ति कण्डूयनार्थं दीक्षामध्ये यजमानेन स्वीकृतस्य कृष्णविषाणस्य त्यागो विहितः। स च द्विरात्रादिष्वहर्गणेष्वतिदिष्टः प्रथमेऽह्नि सुत्यायां न क्रियते। यद्यदि प्रथमेऽह्नि त्यज्यते तत उत्तरेष्वहस्सु दक्षिणादानपूर्वकालिकानां पदार्थानां विषाणकण्डूयनं विहितं बाध्येत। न हि त्यक्तस्य पुनरुपादानं भवति, न च पुनरुपादित्समानस्य त्यागबुद्धिर्भवति। **अतश्च** ज्योतिष्टोमे दक्षिणादानोत्तरं **दृष्टमपि** पाणिकण्डूयनं न द्विरात्रादावतिदिश्यते। नापि **वैकृतैः** पदार्थैस्तदपेक्ष्यते, प्रकृतौ दक्षिणादानोत्तरं विषाणाभावेन पाणिकण्डूयनस्यार्थिकत्वात्, न ह्यार्थिकं चोदकः प्रतिदिशतीति न्यायात्। किन्तु कृष्णविषाणसत्त्वात् तेनैव कण्डूयनमिति। **अर्थसिद्धत्वादिति**। विषाणस्य त्यक्तत्वेन कण्डूतिसम्भवे पाणेरेव सन्निहितत्वेन तेनैव कण्डूयनं प्राप्नुयादिति भावः। **अशास्त्रीयत्वादिति**। शास्त्राविषयत्वादित्यर्थः॥

दृष्टान्तोक्तन्यायं प्रकृतेऽतिदिशति—**एवमिति**। **तदपेक्षा** निर्गुणत्वापेक्षा। पृषदाज्यस्य प्रकरणग्राह्यत्वाभावनिरूपणमुपसंहरति—**तस्मादिति**। **ननु** प्रकृतावनूयाजानां केवलाज्यविशिष्टानां कार्यजनकत्वश्रवणेऽपि विकृतौ तेषां पृषदाज्यविशिष्टानामेव कार्यजनकत्वश्रवणात् विशेषणसम्पत्त्यर्थं वैकृताकाङ्क्षायाः पृषत्तान्वयं यावदनुवर्तनात् कथं न प्रकरणविषयतेत्यत आह—**इत्यलमिति**।

एवं हि प्राकृतानां वैकृतोपहोमादिक्रमसापेक्षत्वेनैव प्राकृतोपकारसाधनत्वात् उपहोमादीनामपि प्रकरणग्राह्यत्वं प्रसज्येतेति भावः। **प्राकृतदृष्टार्थाङ्गेति**। अदृष्टार्थाङ्गानुवादेन विहितस्याङ्गस्य उद्देश्यस्वरूपे आनर्थक्याभावात् तेनैवाकाङ्क्षाशान्तौ विकृत्यपूर्वपर्यन्तानुधावने प्रयोजनाभावात् उभयाकांक्षाभावेन प्रकरणग्राह्यता सम्भवतीति भावः। **केवलं** प्राकृतदृष्टार्थाङ्गाननुवादेन॥

---

१. गवादिरूपदक्षिणाद्रव्येषु अध्वर्य्यादिभिर्ऋत्विग्भिः स्वस्वस्थानं प्रापितेषु सत्सु कृष्णमृगस्य विषाणं चात्वालाख्ये गर्तविशेषे निरस्येदिति वाक्यार्थः।

**यत्तु विकृतावपि प्राकृतधर्मानुवादेन विधीयमानयोर्धर्मयोरन्तरालेऽपूर्वमप्यङ्गं केवलं पठ्यते तदपि प्रकरणेन विनियुज्यते। यद्यपि विकृतेः कथंभावाकाङ्क्षा प्राकृतैरेवाङ्गैः शाम्यति, तथापि यत्र प्राकृताङ्गानुवादेन धर्मविधानं तत्र तद्विधानं याव(१)द्भवति तावत्कथंभावाकाङ्क्षा न निवर्तते। अतो विकृतेराकाङ्क्षावत्त्वादन्तराले विहितस्याप्यपूर्वाङ्गस्य भाव्याकाङ्क्षासत्त्वादुयुक्तं तस्य प्रकरणाद्विकृत्यर्थत्वम्, यथा आमनहोमेषु। ते हि प्राकृताङ्गानुवादेन**

---

प्राकृताङ्गानुवादेन विधानाभावेऽपि प्राकृताङ्गानुवादेन विहितधर्ममध्ये पठितस्याप्यपूर्वाङ्गस्य प्रकरणग्राह्यता सम्भवतीत्याह--**यत्त्विति**। **ननु** विकृतिभावनाकथंभावाकाङ्क्षा प्राकृतैर्धर्मैस्तदनुवादेन विहितैर्वा शाम्यतीति कथमुभयभिन्नस्यास्यापूर्वाङ्गस्य प्रकरणविषयतेत्याशङ्कते--**यद्यपीति**। उत्पन्ना ह्याकाङ्क्षा प्राकृतसर्वाङ्गसम्बन्धानन्तरमेव शाम्यति, अतो मध्ये पठितस्यापि साकाङ्क्षायामेव विकृतिभावनायामन्वयात् सम्भवति प्रकरणग्राह्यतेति परिहरति—**तथापीति**। **यत्र प्राकृतेति**। अनेन विकृतिप्रधानप्राकृताङ्गधर्मयोर्मध्ये पठितस्याप्यपूर्वाङ्गस्य सन्दंशेन प्रकरणग्राह्यता सूचिता। **आमनहोमेष्विति**। **'वैश्वदेवीं साङ्ग्रहणीं निर्वपेत् ग्रामकामः'** इति साङ्ग्रहणेष्टिं विधाय तदनन्तरं **"आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति"** इति विहितेषु होमेष्वित्यर्थः। **प्राकृताङ्गानुवादेन विधीयमानयोरिति। इदन्तु चिन्त्यम्।** मैत्रायणीयसंहितायां **"यत् प्रयाजानां पुरस्तात् जुहुयात् बहिरात्मानं सजातानां दध्यात्, यदनूयाजानां परस्तात् जुहुयात् स्वर्गं लोकमपक्रामेत्, मध्ये जुहोति"** इति वाक्येन प्राकृतप्रयाजानुयाजमध्य एवामनहोमानां विधानात्। अत एव मिश्रैरपि न्यायरत्नमालायां **'विकृतिष्वपि यत्प्राकृताङ्गमध्ये पठितं, यथा-आमनहोमः'**, इति प्राकृताङ्गमध्यपाठ एवोक्तः। शास्त्रदीपिकायामपि **"आमनहोमानाञ्च प्राकृताङ्गमध्यविहितत्वेने"**त्युक्तम्। तन्त्ररत्नेऽपि च **"प्राकृतास्तावदाकाङ्क्षयैव गृह्यन्ते। तयोर्द्वयोः प्राकृतयोः परामृश्यमानयोर्मध्ये पतितमपूर्वमप्यङ्गमाकाङ्क्षायामव्यावृत्तायां विधीयमानं आकाङ्क्षापरनामधेयप्रकरणेन गृह्यते; यथा-"यत्प्रयाजानां पुरस्तात् जुहुयात् बहिरात्मानं सजातानां दध्यात्, यदनूयाजानां परस्तात्, स्वर्गं लोकमपक्रामेत्, मध्ये जुहोति, मध्यत एव सजातानामात्मन्धत्ते" इत्येवं परामृश्यमाना आमनहोमाः सम्बन्धिपदव्यवायेनाकाङ्क्षाग्राह्यप्रयाजानूयाजमध्यवर्तित्वेन ग्रहीष्यन्ते** इत्यनेन आमनहोमानां प्रयाजानूयाजमध्यवर्तित्वस्यैवोक्तत्वात् प्राकृताङ्गानुवादेन विधीयमानधर्ममध्यपाठस्य कुत्राप्यनुपलम्भात्। **ननु** तन्त्ररत्ने प्रकरणग्राह्यत्वोक्तावपि शास्त्रदीपिकायां सन्निधिग्राह्यत्वमुक्त्वा **"प्रकरणग्राह्यत्वस्यापि सम्भवात्"** इत्यपिना प्रकरणग्राह्यत्वेऽस्वरसः सूचितः। अत एव च न्यायसुधायां बलाबलाधिकरणे आमनहोमानां सन्निधिविषयतैवोक्तेति कथं तेषां प्रकरणग्राह्यत्वम्? इत्यत आह—**इत्यास्तां तावदिति**। यद्यप्यामनहोमानां सन्निधिग्राह्यतैव

---

१. यावन्न निवर्तते।

विधीयमानयोर्द्धर्मयोरन्तराले विधीयन्त इत्युक्तं तन्त्ररत्नादावित्यास्तां तावत् ॥

( अवान्तरप्रकरणनिरूपणम् )

फलभावनाया अन्तराले यदङ्गभावनायाः प्रकरणं तदवान्तरप्रकरणम् । तच्चाभिक्रमणादीनां प्रयाजादिषु विनियोजकम् । तच्च सन्दंशेन ज्ञायते । तदभावेऽविशेषात्सर्वेषां फलभावनाकथम्भावेन ग्रहणात् ।

संदंशो नाम एकाङ्गानुवादेन विधीयमानयोरङ्गयोरन्तराले विहितत्वम् , यथा—अभिक्रमणम् , तद्धि 'समानयत उपभृतः' इत्यादिना प्रयाजानुवादेन किञ्चिदङ्गं विधाय विधीयते, पश्चादपि प्रयाजानुवादेन 'यो वै प्रयाजानां मिथुनं वेदे'त्यादिना किञ्चिदङ्गं विधीयते । अतः प्रयाजाङ्गमध्ये पठितमभिक्रमणं तदङ्गं भवति, तत्कथम्भावाकाङ्क्षाया अशान्तेः । यथाहुः—

परप्रकरणस्थानामङ्गे श्रुत्यादिभिस्त्रिभिः ।
ज्ञाते पुनश्च तैरेव सन्दंशेन तदिष्यते ॥ इति ।

---

समुचिता, अभिमतं चास्माकमपि तदेव, तथापि तन्त्ररत्नाद्युक्तिमात्रमवलम्ब्य प्रकृतोदाहरणार्थमत्रोक्तमिति भावः ॥

( अवान्तरप्रकरणनिरूपणम् )

एवं महाप्रकरणं निरूप्य इदानीमवान्तरप्रकरणं निरूपयति—**फलभावनाया** इति । **तच्च** अवान्तरप्रकरणं च । **तदभावे** सन्दंशाभावे ।

अथ को नाम सन्दंशः ? अत आह—**सन्दंशो नामेति** । **एकाङ्गानुवादेनेति** । एकं यत्प्रधाननिरूपितमङ्गं तदनुवादेनेत्यर्थः । इदमुपलक्षणं सन्दंशान्तरयोरपि । प्राकृताङ्गानुवादेन विहिताभ्यां सन्दष्टं यदसंयुक्तमपि विकृतौ श्रुतं तदपि प्रकरणेन गृह्यते । विकृतेः पूर्वमसंयुक्तं किंचिद्विहितं ततः पूर्वं तु प्राकृताङ्गानुवादेन यद्विहितं ततोऽसंयुक्तं यत् तत् तद्विकृतिग्रहणेन गृह्यते । तथा विकृतेरनन्तरमसंयुक्तं किंचिद्विधाय प्राकृताङ्गानुवादेन कस्मिंश्चिद्विहिते तत्पूर्वमसंयुक्तं प्रकरणेन गृह्यते । इति भेदत्रयस्य ग्रन्थान्तरेषु दर्शनात् । लोहकपटविद्धलोहशलाकाद्वयरूपः पात्रादिग्रहणसाधनभूतः कश्चन पदार्थो लोके सन्दंशपदवाच्यः । हिन्दीभाषायां सडसी इति द्राविडभाषायां इडिक्की इति च प्रसिद्धः । **अभिक्रमणं** प्रतिप्रयाजं किञ्चिदन्तरं आहवनीयसमीपदेशं प्रति पदनिक्षेपणम् । तादृशाङ्गमध्यपाठमुपपादयति—**तद्धीति** । **समानयत इति** । जौहवेनाज्येन प्रथमतः त्रीन् प्रयाजानिष्ट्वा बर्हिःप्रयाजार्थमुपभृत्स्थमाज्यं जुह्वां समानयेदित्यर्थः । यद्यप्यस्मिन् वाक्ये प्रयाजशब्दो नास्ति, तथापि औपभृताज्यस्य "यदुपभृति प्रयाजानूयाजेभ्यस्तत्" इत्यनेन प्रयाजानूयाजार्थत्वावगमात् औपभृतार्धस्य प्रयाजद्वयार्थमेव जुह्वां समानेयत्वात् प्रयाजाङ्गत्वसङ्कीर्तनाविरोधः । एवं प्रयाजोद्देशेन विहितं पूर्वमङ्गमभिधाय पाश्चात्यमप्यङ्गं कथयति-**यो वै इति** । **मिथुनं वेदेत्यादिनेति** । "**प्रयाजानिष्ट्वा हवींष्यभिघारयति**" इत्यन्तेनेति शेषः । तत्रैव प्रयाजोपयुक्ताज्योद्देशेन हविरभिघारणरूपसंस्कारविधानात् यो वै प्रयाजानामित्यस्यार्थवादत्वेन तत्र कस्याप्यविधेयत्वात् । एवं च आकाङ्क्षायाः चरमाङ्गान्वयं यावदनुवर्तनावश्यंभावेन अस्त्येव तदानीमाकाङ्क्षेत्याह—**तत्कथंभावेति** ।

न चाङ्गभावनायाः कथंभावाकाङ्क्षाभावात् कथं प्रयाजभावनाकथंभावेनाभिक्रमणं गृह्यते इति वाच्यम्। भावनासाम्येन सर्वत्र कथंभावाकाङ्क्षायाः सत्त्वात्। प्रयाजैरपूर्वं कृत्वा यागोपकारं भावयेदित्युक्ते यो नाम न जानाति प्रयाजैरपूर्वं कर्तुं तस्यास्त्येव कथंभावाकाङ्क्षा-कथमेभिरपूर्वं कर्तव्यमिति। सा च सन्दंशपतितैर्वाचनिकैः स्मार्तैश्चाचमनादिभिः शाम्यति। तदभावे च स्वरूपनिष्पादनेन दर्विहोमन्यायेन निवर्तते। दर्विहोमेषु हि स्वरूपनिष्पादनातिरिक्तस्तथा व्यापारो न श्रूयते। नाप्यतिदेशेन तत्प्राप्तिः। यागीयानां धर्माणां तावन्नातिदेशः, यागत्वेन होमत्वेन वैलक्षण्यात्। नापि होमीयानाम्, कस्य

---

प्रयाजकथम्भावेत्यर्थः। अत्र वार्तिकं प्रमाणयति—**परेति**। **परप्रकरणस्थानां** दर्शपूर्णमासप्रकरणस्थानां प्रयाजादीनां अङ्गे औपभृताज्यसमानयनादिके **श्रुत्यादिभिस्त्रिभिः** श्रुतिलिङ्गवाक्यैः ज्ञाते पूर्वं विहितत्वेनावगते पश्चादपि **तैः** श्रुत्यादिभिः कस्मिंश्चिदङ्गे विहिते सति तत्सन्दष्टं **तत्** तन्मध्यविहितं किंचिदङ्गं तादृशपूर्वोत्तराङ्गसन्दंशेन प्रयाजाद्यङ्गं भवतीति श्लोकार्थः। यद्यपि पूर्वमिति नैवास्ति श्लोके तथापि पुनश्चेति चशब्दबलात् तल्लभ्यत इति न दोषः। अत्र प्रधानभावनानामेवेतिकर्तव्यताकाङ्क्षा, तासामेव फलसाधनत्वेन कथमित्याकाङ्क्षोदयात्, नाङ्गभावनानां, तासामफलत्वात् इति वदतां प्राभाकराणां मतमनुवदति—**न चेति**। अङ्गभावनानामपि कार्यतया विधिना बोधितत्वात् कार्यस्य चालौकिकत्वात् अनिर्ज्ञातप्रकारत्वेन कर्तव्यताविशेषरूपेतिकर्तव्यताकाङ्क्षा सम्भवत्येव तासामपीति परिहरति—**भावनासाम्येनेति**। अङ्गभावनायां अपि भावनात्वाविशेषात् प्रधानभावनातुल्यत्वेनेत्यर्थः। **सर्वत्र** सर्वास्वपि भावनासु **सन्दंशपतितैरिति**। अभिक्रमणादिभिरिति शेषः। सन्दंशाभावस्थले कथमाकाङ्क्षाशान्तिः? अत आह—**वाचनिकैरिति**। "**इन्द्र ऊर्ध्वो अध्वर इत्याघारमाघारयति**" इत्यादिवचनविहितैरङ्गैरित्यर्थः। तेषामप्यभावे कथम्? इत्यत आह—**स्मार्तैराचमनादिभिरिति**। "**आचान्तेन कर्म कर्तव्यम्**" "**दक्षिणाचारेण कर्तव्यं**" इति सर्वकर्मसाधारण्येन स्मृतिविहितैः आचमनदक्षिणपाण्याचरणादिभिरित्यर्थः।

**स्वरूपनिष्पादनेनेति**। यथाश्रुतकर्मस्वरूपमात्रानुष्ठानेनेत्यर्थः। **दर्विहोमन्यायेनेति**। यथा दर्वीहोमा अपूर्वाः अश्रुतेतिकर्तव्यताश्चेति तत्रोत्पन्नापि कथंभावाकाङ्क्षा स्वरूपनिष्पादनेनैव शाम्यति तद्वदित्यर्थः। तदेवोपपादयति—**दर्विहोमेष्विति**। जुहोत्युत्पत्तिकाः एकमन्त्रकाः स्वाहाकारप्रदाना दर्वीहोमाः। **ननु** सन्निधौ व्यापाराश्रवणेऽपि अतिदेशेन तत्प्राप्तिरस्तु, अत आह—**नापीति**। अतिदेशो यागीयधर्माणां? होमीयधर्माणां वा? नाद्य इत्याह—**यागीयानामिति**। तत्र हेतुमाह—**यागत्वेनेति**। दर्शपूर्णमासज्योतिष्टोमादेरित्यर्थः। **होमत्वेनेति**। दर्विहोमानामिति शेषः। **वैलक्षण्यादिति**। प्रक्षेपाङ्गकोद्देशत्यागरूपक्रियाद्वयवृत्तिजातेः यागत्वात् उद्देश-त्याग-प्रक्षेपात्मकक्रियात्रयवृत्तिजातेः होमत्वाच्च तयोरत्यन्तं भेदादित्यर्थः। चोदनालिङ्गातिदेशस्य सादृश्यमूलकत्वेन तदभावे तस्यैवासंभवादिति भावः। द्वितीयं निराकरोति—**नापीति**। अग्निहोत्रस्य न दर्वीहोमप्रकृतित्वं, विशेषनियामकाभावात्, नापि नारिष्ठहोमानाम्,

होमस्य धर्मः कस्मिन् होमे प्रवर्तत इति विशेषनिर्णये प्रमाणाभावात्। अतो धर्मप्राप्त्यभावात् दर्विहोमैरिष्टं भावयेत्कथमित्युत्पन्नाप्याकाङ्क्षा स्वरूपनिष्पादनेनैव शाम्यति। एवं येष्वङ्गेषु सन्दंशाद्यभावस्तत्रोत्पन्नाप्याकाङ्क्षा तेनैव निवर्तते, न तु सर्वथा तदभावः। तस्माद्युक्तमुक्तमभिक्रमणं प्रयाजाङ्गमिति।

तच्चेदमवान्तरप्रकरणं महाप्रकरणाद्बलीयः, सन्दंशपतितानां धर्माणां कैमर्थ्याकाङ्क्षायां प्रधानापूर्वात्प्रयाजाद्यपूर्वस्य झटित्युपस्थितेरिति। प्रकृतमनुसरामः। तत्सिद्धमुभयविधस्य प्रकरणस्य विनियोजकत्वम्।

तदिदं स्थानादिप्रमाणाद्बलवत्। यत्र हि स्थानादङ्गत्वं तत्रान्यतरस्य प्रकारान्तरेण निराकाङ्क्षत्वम्। न च साकाङ्क्षं निराकाङ्क्षेण संबद्धुं योग्यं विनाकाङ्क्षोत्थापनेन। अतश्चान्यतराकाङ्क्षया यावदुभयाकाङ्क्षारूपप्रकरणकल्पनद्वारा वाक्यादि कल्पयितुमारभ्यते, झटिति तावत्प्रकरणेन वाक्यादिकं कल्पयित्वा विनियोगः क्रियत इति स्थानात्प्रकरणस्य बलीयस्त्वम्।

अत एव विदेवनादयो धर्मा अभिषेचनीयसन्निधौ पठिता अपि नाभिषेचनीयस्याङ्गम्। तेषां तदङ्गत्वं भवत् स्थानाद्भवेत्, न तु प्रकरणात्। अभि-

---

"अप्रतिष्ठिता वै त्र्यंबका इत्याहुः। नेध्माबर्हिः सन्नह्यति", इति दर्विहोमानां अप्रतिष्ठितत्वे इध्माबर्हिरभावस्य हेतुत्वेन निर्देशात्, नारिष्ठहोमेषु चाङ्गप्रधानसाधारणानामिध्माबर्हिषां सत्वात् तेषां च चोदकतस्तत्रापि प्राप्तिसम्भवात्। न चायं चोदकप्राप्तस्यैव प्रतिषेधोऽस्त्विति वाच्यम्। अस्य च "आदित्यं चरुं निर्वपेत् पुनरेत्य गृहेषु" इत्यादित्यचरुविधायकवाक्यशेषत्वेन प्रतिषेधविधित्वासंभवात्। नापि पिष्टलेपफलीकरणहोमयोः; तयोः प्रतिपत्तिकर्मत्वेन धर्मप्रयोजकत्वाभावेन प्रकृतित्वासंभवात्, इत्येतत्सर्वं मनसि निधायाह—कस्य होमस्येत्यादि। दर्विहोमविषयविचारमुपसंहरति—अत इति। तन्न्यायमङ्गभावनायामतिदिशति—एवमिति। संदंशादीत्यादिपदेन वाचनिकाङ्गस्मार्ताचमनादीनि परिगृह्यन्ते। न किञ्चिन्मध्ये पठितम्। न वा वाचनिकं किञ्चित्। नापि स्मार्तं किञ्चित्। एतादृशानि सन्ति बहून्यङ्गानि प्रोक्षणादीनि। तत्र लोकत एव तत्स्वरूपं ज्ञात्वाऽऽकाङ्क्षा निवर्तनीयेत्यर्थः।

एवमवान्तरप्रकरणं निरूप्य तस्य महाप्रकरणापेक्षया प्राबल्यं प्रतिपादयितुमारभते—तच्चेति। प्रधानापूर्वादिति। प्रधानापूर्वापेक्षयेत्यर्थः। झटित्युपस्थितेरिति। तस्यैव सन्निहितत्वेन बुद्धौ विपरिवर्तमानत्वादिति भावः।

स्थानाद्यपेक्षया प्रकरणस्य प्राबल्यं निरूपयितुमारभते—तदिदमिति। आदिपदेन समाख्यापरिग्रहः। स्थानात् स्थानरूपप्रमाणात्। अङ्गत्वमिति। बोध्यत इति शेषः। प्रकारान्तरेणेति। क्लृप्तोपकारप्राकृतपदार्थान्वयेन प्रकृतौ कृतकार्यत्वेन वेत्यर्थः।

विदेवनादय इति। अस्ति राजसूयः "राजा राजसूयेन स्वाराज्यकामो यजेत" इत्यनेन स्वाराज्यरूपफलोद्देशेन विहितः। तत्र अनुमत्यादय इष्टयः, पञ्चवातीयादयो दर्वीहोमाः, "आदित्यां मलहां गर्भिणीमालभते" इत्यादयः पशुयागाः, पवित्रा,

षेचनीयस्याव्यक्तचोदनाचोदितत्वेन ज्योतिष्टोमविकारत्वात्प्राकृतैरेव धर्मैर्निराकाङ्क्षत्वात्। किन्तु प्रकरणाद्राजसूयाङ्गम्।

ननु 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यत्र राजसूयशब्दस्तावन्नामधेयत्वादाख्यातपरतन्त्रो यत्राख्यातं तत्रैव प्रवर्तते। न च 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यत्र यथा दर्शपूर्णमासपदं नामधेयमपि नाख्यातपरतन्त्रम्, तत्र हि यजेतेत्याख्यातमविशेषात्सर्वानेव प्रकृतानाग्नेयादीन् प्रयाजादींश्चाभिधातुं समर्थम्, दर्शपूर्णमासपदं त्वाग्नेयादीनेव वदति, न सर्वान्, अतश्च न तदाख्यातपरतन्त्रम्। तथा राजसूयपदमपि किं न स्यादिति वाच्यम्। प्रसिद्धेन हि पदेनाप्रसिद्धं नि(१)र्णीयते। यथाहुः-

पदमज्ञातसंदिग्धं प्रसिद्धैरपृथक्श्रुति।
निर्णीयते निरूढं तु न स्वार्थादपनीयते॥ इति।

---

भिषेचनीय, दशपेय, केशवपनीय, व्युष्टिद्विरात्र, क्षत्रधृति, संज्ञकाः (२) षट् सोमयागाश्च विहिताः। तत्र अभिषेचनीयाख्यसोमयागसन्निधौ "**अक्षैर्दीव्यति, राजन्यं जिनाति, शौनशेपमाख्यापयत**" इत्यादिभिः अक्षदेवनराजन्यजयादयः श्रूयन्ते त इत्यर्थः। **धर्माः** अङ्गानि। **तेषां** विदेवनादीनाम्। **तदङ्गत्वम्** अभिषेचनीयाङ्गत्वम्। **ननु** अभिषेचनीयस्य निर्धर्मकत्वेन कथंभावाकाङ्क्षासत्त्वात् विदेवनादीनामप्याकाङ्क्षावत्त्वात् तेषामभिषेचनीयाङ्गत्वं प्रकरणादेव कुतो न स्यात्? इत्यत आह—**अभिषेचनीयस्येति**। **ज्योतिष्टोमविकारत्वादिति**। अव्यक्तचोदितानां ज्योतिष्टोमविकारत्वस्याष्टमे "**अव्यक्तासु तु सोमस्य**" इत्यनेनोक्तत्वादिति भावः। अव्यक्तत्वस्वरूपं पूर्वमेव निरूपितम्। **प्राकृतैः** अग्निष्टोमसंस्थाकज्योतिष्टोमाङ्गैः।

**ननु 'अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति'** इत्यादिवाक्यविहितानामेवेष्टिपशुसोमानां "**राजसूयेन स्वाराज्यकामो यजेत**" इत्यनेन फलसंबन्धबोधनात् तेषामेव राजसूयपदवाच्यत्वमङ्गीकरणीयम्। ते च प्रत्येकं स्वैः स्वैः प्राकृतैरङ्गैर्निराकाङ्क्षा इति उभयाकाङ्क्षाभावात् कथं विदेवनादयः प्रकरणग्राह्याः? इत्याशङ्कते—**नन्विति। तत्र वर्तत इति**। आख्यातं यादृशार्थबोधकं तादृशार्थबोधकमित्यर्थः। **ननु** नामधेयत्वेऽपि दर्शपूर्णमासपदवत् स्वतन्त्रतैवाऽस्तु इत्याशङ्कते—**न चेति**। दर्शपूर्णमासपदस्य स्वतन्त्रतां विवृणोति—**तत्र हीति**। **आग्नेयादीन्** इत्यादिपदेन पञ्चप्रधानयागा गृह्यन्ते। **प्रयाजादीन्** इत्यादिपदेन अनूयाजाज्यभागादीनामङ्गयागानां ग्रहणम्। ततश्च यजतिचोदनाचोदितान् प्रकृतान् सर्वानेव वदतीत्यर्थः। **आग्नेयादीनेवेति**। येषां कर्मणां स्वोत्पत्तिवाक्ये अमावास्यापौर्णमासीरूपकालश्रवणमस्ति तेषामेव दर्शपूर्णमासपदवाच्यत्वस्य पौर्णमास्यधिकरणे स्थापितत्वात् आग्नेयादीनां षण्णामेव तथात्वादिति भावः। इदञ्चाग्रे मूलेऽपि व्यक्तीभविष्यति। परिहरति—**प्रसिद्धेनेति। पदमिति**। अर्थविशेषवाचित्वेन **अज्ञातं** अत एव च **सन्दिग्धं पदं** अर्थविशेषवाचित्वेन **प्रसिद्धैः** पदैः **अपृथक्श्रुति** सामानाधिकरण्यनिर्दिष्टं सत् अर्थविशेषबोधकत्वेन **निर्णीयते**। यत्तु

---

१ नियम्यते, २ यत्वत्र शतपथभाष्ये सप्त सोमयागा इत्युक्तं तत् व्युष्टिद्विरात्रस्य द्वित्वमभिप्रेत्य तस्य द्व्यहानुष्ठेयत्वात्। न तु वस्तुतो यागसप्तकाभिप्रायेण। तथात्वे बह्वीनां श्रुतीनां कल्पसूत्राणां च विरोधात्।

दर्शपूर्णमासपदं च कालनिमित्तम्, तद्योगश्चाग्नेयादिषूत्पत्तिवाक्यैरव-गतः। अतस्तद्वाचित्वेन दर्शपूर्णमासपदं प्रसिद्धम्। न च आग्नेयादीनां बहुत्वाद्द्विवचनान्तत्वमस्यानुपपन्नमिति वाच्यम्। विद्वद्वाक्यद्वयसिद्धस-मुदायद्वयाभिप्रायेण तदुपपत्तेः। एवं च दर्शपूर्णमासपदस्याग्नेयादिवाचि-त्वे निर्णीते यजेतेत्याख्यातमपि तानेव वदति। न हि तदुक्तौ स्वार्थत्यागो भवति। राजसूयपदं त्वनिर्णीतार्थम्, अतस्तदाख्यातपरतन्त्रमेव, तच्चाविशे-

---

अर्थविशेषवाचित्वेन नियतं तत् प्रसिद्धपदसमभिव्याहारेऽपि **न स्वार्थात्** परिहीयते इति वार्तिकार्थः। तथा च दर्शपूर्णमासपदस्य प्रसिद्धार्थत्वेन युक्तं न तदाख्यातपरतन्त्रमिति। राजसूयपदस्य तु अप्रसिद्धार्थत्वात् प्रसिद्धाख्यातानुरोधेनैवार्थनिर्णय इत्याख्यातपरतन्त्र-तैवेति भावः। अत्र मूले व्याख्याने च सर्वत्राख्यातपरतन्त्रेत्यत्राख्यातपदेन धातुरेवोच्यते, न विभक्तिरिति ध्येयम्। कथं दर्शपूर्णमासपदं प्रसिद्धम्? अत आह—**दर्शेति। उत्पत्ति-वाक्यैरिति**। आग्नेयादिवाक्यैरित्यर्थः। **तद्वाचित्वेन** उत्पत्तिवाक्यावगतकालविशिष्टा-ग्नेयादिकर्मषट्कवाचित्वेन। दर्शपूर्णमासपदस्याग्नेयादियागषट्कवाचित्वे द्विवचनानु-पपत्तिं शङ्कते—**न चेति**। परिहरति—**विद्वदिति**। "**य एवं विद्वान् पौर्णमासीं यजते" 'य एवं विद्वानमावास्यां यजते'** इति वाक्यद्वयेत्यर्थः। विद्वद्पदघटितत्वा-च्चानयोर्विद्वद्वाक्यता। **समुदायद्वयाभिप्रायेणेति**। एकवचनान्तेन पौर्णमासीपदेन तत्कालिका यागास्तन्त्रेणानूद्यन्ते। तदभिधानरूपं एकमभिधानमवलम्ब्य तेषामेकः समु-दायः सिध्यति, एवममावास्यापदेनापीति समुदायद्वयस्य सिद्धत्वात् तदभिप्रायेण फल-वाक्ये द्विवचनमित्यर्थः। **ननु** विद्वद्वाक्ये पौर्णमास्यमावास्याशब्दाभ्यामेव समुदायद्वया-नुवादात् कथं फलवाक्यगतदर्शपूर्णमासशब्दाभ्यां समुदायद्वयग्रहणमिति वाच्यम्। **'दर्शो वा एतयोः पूर्वः, पूर्णमास उत्तरः, अथ यत्पौर्णमासीं पूर्वामारभते, तद्यथा-पूर्वं क्रियते' तत्पूर्वमारभमाणस्सरस्वत्यै चरुं निर्वपेत् सरस्वते द्वादशकपाल-ममावास्या वै सरस्वती, पूर्णमासः सरस्वान् तावेव यथापूर्वं कल्पयित्वाऽऽ-रभते,** "इत्यत्र दर्शो वा एतयोरिति दर्शशब्दनिर्दिष्टस्य **"अमावास्या वै सरस्वती"** इत्यमावास्याशब्देन पुनः परामर्शात्, अमावास्यादर्शशब्दयोः पर्यायत्वावगमात् **"पौ-र्णमासीं पूर्वामारभते"** इति पौर्णमासीशब्दनिर्दिष्टस्य **"पूर्णमासः सरस्वानि"**ति पूर्णमासपदेन पुनः परामर्शेन पौर्णमासीपूर्णमासशब्दयोरपि पर्यायत्वावगमाच्च समुदाया-नुवादसम्भवात्। तथा च दर्शपूर्णमासपदस्य कालयोगिष्वेव प्रवृत्तेः तदनुरोधेनैव यजेरपि वर्तनमित्याह—**एवं चेति। तानेव** आग्नेयादीन् षड्यागानेव। **नन्वेवं** सति स्वरसतो यजेः सन्निहितसकलयागपरस्य यागषट्कमात्रवाचित्वेन सङ्कोचे स्वार्थत्यागस्स्यादित्या-शंक्याह-**न हीति**। कांस्यभोजिन्यायेन संकोचेऽपि न स्वार्थत्याग इति भावः। राजसू-यपदे एतद्वैलक्षण्यं दर्शयति—**राजसूयपदन्त्विति। अत इति**। अनिर्णीतार्थत्वेन

षात्सर्वेष्विष्टिपशुसोमेषु विद्यते । तत्परतन्त्रत्वाद्राजसूयपदमपि तानेव वदति।

न च राजसूयशब्दस्य राजा सूयते यत्रेति व्युत्पत्त्या सोमाभिषवनिमित्तत्वात्तस्य च 'सोममभिषुणोती'ति वाक्येन सोमयागेऽवगतत्वात्तद्वाचित्वमेव, नेष्टिपशुवाचित्वमिति वाच्यम् । न ह्यभिषेचनीयादिसोमयागेष्वभिषवः प्रत्यक्षेण वाक्येन चोदितोऽस्ति, तद्वाक्यस्य ज्योतिष्टोमे सत्त्वात् । अतिदेशात्तत्संबन्धोऽवगत इति चेन्न । अतिदेशस्य फलसंबन्धोत्तरकालीनत्वेन 'राजसूयेन स्वाराज्यकामो यजेते'त्येतद्वाक्यार्थावगत्युत्तरकालीनत्वात् । अनेन हि वाक्येन फलसंबन्धे बोधिते पश्चात्कथंभावाकाङ्क्षायामतिदेशकल्पनात् । अतस्ततः प्रागेवैतद्वाक्यार्थो वर्णनीयः । तदा चाभिषवस्यानवगतत्वाद्राजसूयपदमप्रसिद्धार्थमेव । अत एव राजसूयपदमव्युत्पन्नमश्वकर्णशब्दवदित्युक्तं सांप्रदायिकैः ।

एवं चाप्रसिद्धार्थत्वेनाख्यातपरतन्त्रत्वाद्राजसूयपदेनेष्टिपशुसोमयागा उच्यन्ते । ते च तैस्तैः प्राकृतैर्धर्मैर्निराकाङ्क्षा इति न प्रकरणं विदेवनादीनां राजसूये विनियोजकम्, उभयाकाङ्क्षाया अभावात् । न च प्रातिस्विकरूपे-

---

अप्रसिद्धत्वादित्यर्थः । तच्च आख्यातं च धातुरिति यावत् । तानेव इष्टिपशुसोमरूपान् सर्वानपि यज्यर्थान् ।

इदानीमवयवव्युत्पत्त्या राजसूयपदस्य सोमयागपरत्वमात्रमाशङ्कते-**नचेति** । **राजा** सोमः । **सूयते** निष्पीड्यते । **तद्वाचित्वमेव** अभिषेचनीयादिसन्निहितसोमयागवाचित्वमेव । परिहरति—**न हीति** । **तद्वाक्यस्य** अभिषववाक्यस्य । **ज्योतिष्टोमे सत्त्वादिति** । तथा च प्रकृतिभूतज्योतिष्टोमप्रकरणस्थस्यात्रानुपस्थितेः तमादाय न राजसूयशब्दार्थवर्णनमुपपत्तिमदिति भावः । **फलसम्बन्धोत्तरकालीनत्वेनेति** । प्रथमतः फलाकांक्षा ततः करणाकाङ्क्षा, अनन्तरं कथम्भावाकाङ्क्षा इत्येवाकाङ्क्षाक्रमात् । एवञ्च एतद्वाक्यावगत्युत्तरकालीनाया आकाङ्क्षाया एतद्वाक्यार्थावगमदशायामनुपस्थितत्वेन तदाकाङ्क्षापूरकपदार्थोपस्थितेः तत्प्रापकातिदेशस्य च दूरापेतत्वात् तन्निमित्तीकृत्य राजसूयपदस्य नामधेयत्वकथनं न युक्तिसहमिति भावः । अस्मिन्नर्थेऽभियुक्तोक्तिं प्रमाणयति-**अत एवेति** । **अश्वकर्णशब्दवदिति** । अश्वकर्णशब्दो यथा अव्युत्पन्नप्रातिपदिकं वृक्षविशेषे रूढः, एवं राजसूयशब्दो रूढ इत्यर्थः ।

राजसूयपदस्याख्यातपरतन्त्रत्वमुपसंहरति—**एवञ्चेति** । **तैस्तैः प्राकृतैरिति** । इष्टीनां दर्शपूर्णमासतोऽतिदिष्टैरैष्टिकैः, पशूनामग्नीषोमीयतोऽतिदिष्टैः पाशुकैः, सोमयागानां च ज्योतिष्टोमतोऽतिदिष्टैस्सौमिकैश्च धर्मैश्शान्ताकाङ्क्षत्वादित्यर्थः । ननु येन रूपेण फले विनियोगः तेनैव रूपेण धर्माकाङ्क्षा युक्ता; अतश्च प्रातिस्विकरूपेणातिदिष्टैर्धर्मैः प्रातिस्विकरूपेणाकाङ्क्षायाश्शान्तत्वेऽपि **'राजसूयेन स्वाराज्यकामो यजेते'**ति राजसूयत्वधर्मपुरस्कारेणैव फले विनियोगात् तेनापि रूपेणाकाङ्क्षायास्सत्त्वात् तस्याश्च कैरपि धर्मैरशान्तत्वात् सम्भवत्येवोभयाकाङ्क्षेत्याशङ्कते—**नचेति** । **प्रमाणाभावादिति** । अनुमत्यादिवाक्यैरुत्पन्नानामेव भावनानां राजसूयवाक्ये फलसम्बन्धबोधनात् तदपेक्षया

नैराकाङ्क्ष्येऽपि न राजसूयत्वेन रूपेण नैराकाङ्क्ष्यमिति वाच्यम्। आकाङ्क्षाद्वये प्रमाणाभावात्।

किं च प्रातिस्विकरूपैर्या कथंभावाकाङ्क्षा सापि फलसम्बन्धोत्तरकालम्। स च राजसूयत्वेन, न तु प्रातिस्विकरूपैः; राजसूयत्वेन च फलसंबन्धे उत्पन्नायाः कथंभावाकाङ्क्षायाः विदेवनादिभिः शान्तेरतिदेशकल्पनमेव न स्यात्। यदि हि सामान्यरूपेण प्रातिस्विकरूपेण च फलसंबन्धविधायि वाक्यद्वयं भवेत्तदा युज्येताप्यकाङ्क्षाद्वयानुसारेण विदेवनादीनामातिदेशिकानां चाङ्गानां संबन्धः। न (१) तु तदस्ति। तस्मात् प्राकृतैर्धर्मैर्नैराकाङ्क्ष्यान्न विदेवनादीनां प्रकरणं विनियोजकमिति चेत्—

सत्यम्, अत एव सांप्रदायिकैर्विदेवनादीनां सन्दंशो दर्शितः। राजसूयत्वपुरस्कारेण ये धर्मा विधीयन्ते 'राजसूयाय ह्येना उत्पुनाति' इत्येवमादयस्तन्मध्ये विदेवनादयः पठ्यन्ते। अतस्ते सर्वे राजसूयाङ्गं प्रयाजानुवादेन विधीयमानधर्ममध्ये पठितप्रयाजाङ्गाभिक्रमणवत्। तस्मात् युक्तमुक्तं विदेवनादीनां प्रकरणाद्राजसूयाङ्गत्वमिति। तत्सिद्धं प्रकरणस्य स्थानाद्बलीयस्त्वमिति।

---

राजसूयभावनाया अनतिरिक्तत्वेन तासां च स्वस्वेतिकर्तव्यताविषयिण्या एकस्या एवाकाङ्क्षाया अङ्गीकर्तुमुचितत्वादिति भावः।

ननु प्रातिस्विकरूपेणोत्पन्नायामेव कथंभावाकाङ्क्षायां प्राकृतपदार्थान्वयात् पूर्वमेव विदेवनादीनां विधानात् कुतो न प्रकरणग्राह्यतेत्यत आह—**किञ्चेति**। **फलसम्बन्धोत्तरकालमिति**। निरूपितमेतदधस्तात्। **स च** फलसम्बन्धश्च। **अतिदेशकल्पनमेव न स्यादिति**। प्रातिस्विकरूपेण या आकाङ्क्षा तस्या एव राजसूयवाक्ये राजसूयत्वधर्मावच्छिन्नत्वेन प्रतीयमानत्वात् तस्याश्च विदेवनादिभिश्शान्तत्वादाकाङ्क्षाभावेन प्राकृतानां धर्माणामतिदेशो न स्यादित्यर्थः। ननु स्यादेतदेवं यद्येकैवाकाङ्क्षा, आकाङ्क्षाद्वयाङ्गीकारे को दोषः? अत आह—**यदि हीति**। **तस्मादिति**। विदेवनादिभ्यः पूर्वं प्राकृतपदार्थान्वयस्यैवावश्याभ्युपगन्तव्यत्वादित्यर्थः। **न प्रकरणं विनियोजकमिति**। उभयाकाङ्क्षाभावादिति भावः।

समाधत्ते—**सत्यमिति**। **राजसूयाय ह्येना उत्पुनातीति**। एनाः राजाभिषेकार्थमाहृता अपः **राजसूयाय हि** राजसूयार्थमेव खलूत्पवनं करोत्यध्वर्युरित्यक्षरार्थः। **सर्वं इति**। विदेवनाद्यभिषेकान्ता इत्यर्थः। राजसूयाङ्गत्वे दृष्टान्तमाह—**प्रयाजेति**। प्रकरणमुपसंहरति—**तस्मादिति**। यत्त्वत्र मयूखमालिकायां—तैत्तिरीयशाखायामभिषेचनीयप्रयोगमध्ये '**दिशोऽभ्ययं राजाभूदिति पञ्चाक्षान् प्रयच्छति**' इत्येवमादिभिर्विदेवनादीन् विधाय तदनन्तरं **मारुतस्य चैकविंशतिकपालस्य वैश्वदेव्यै चामिक्षाया अग्नये स्विष्टकृते समवद्यति**' इत्यभिषेचनीयाङ्गेष्टिविशेषमाम्नाय '**अपां नप्त्रे स्वाहोर्जो नप्त्रे स्वाहाग्नये गृहपतये स्वाहेति तिस्र आहुतीर्जुहोति**'

---

१. च.

( स्थानप्रामाण्यनिरूपणम् )

**देशसामान्यं स्थानम् । तच्च द्विविधम्—पाठसादेश्यमनुष्ठानसादेश्यं चेति । यदाहुः—**

**तत्र क्रमो द्विधैवेष्टो देशसामान्यलक्षणः ।**
**पाठानुष्ठानसादेश्याद्विनियोगस्य कारणम् ॥ इति ।**

---

इत्यभिषेचनीयाङ्गहोमविशेष आम्नायते । तेन विदेवनादीनामभिषेचनीयाङ्गसन्दंशतयाऽऽम्नातानां तदवान्तरप्रकरणेनाभिषेचनीयमात्रार्थत्वात् तेषां क्रमप्रकरणविरोधोदाहरणत्वं कृत्वा चिन्तयेरयुक्तम् । **तत्रेदं वक्तव्यम्**—नाभिषेचनीयस्यावान्तरप्रकरणं सम्भवति । स हि ज्योतिष्टोमविकृतिभूतः क्लृप्तोकारैः प्राकृतैरेव धर्मैर्निराकाङ्क्षः । न च मारुतस्येति वाक्येनाभिषेचनीयाङ्गभूता इष्टिरप्याम्नायते । तस्य पूर्वविहितमारुतामिक्षायागाङ्गभूतयोः स्विष्टकृद्यागयोः कालमात्रविधायकत्वात् । तैत्तिरीयब्राह्मणे हि प्रथमाष्टके सप्तमप्रपाठके सप्तमानुवाके **'मारुत एष भवति, 'एकविंशतिकपालो भवति'** इति वाक्यद्वयेन मारुतयागः तद्गुणश्च विहितौ । तत्रैव दशमानुवाके **'वैश्वदेव्यामिक्षा'** इत्यनेनामिक्षायागो विहितः । तत्सम्बन्धिनोश्च स्विष्टकृद्यागयोरत्नेत्रैणानुष्ठानमनेन वाक्येन विधीयते । एवं सत्यपि यद्येतदनन्तरं विहितस्य होमविशेषस्य प्राकृतकार्यापन्नत्वेन विधानं स्यात् तदानीं तादृशपदार्थान्वयं यावदाकाङ्क्षाया अनुवृत्तेः तत्सन्दष्टानां विदेवनादीनां भवेदवान्तरप्रकरणादभिषेचनीयाङ्गत्वम् । न त्वेतदस्ति । केवलमसंयुक्ततयैव तस्य विधानात् । प्राकृताङ्गानुवादेन विहितधर्ममध्यपतितस्यैवासंयुक्ताङ्गस्य विकृतौ प्रकरणग्राह्यत्वसिद्धान्तात् । अत एवोक्तं **भाट्टदीपिकायां—यस्य हि प्रधानकार्यापन्नतया वैकृताङ्गस्य विधानं, यथा—औदुम्बरत्वशरत्वादेः, तस्यैवानिवृत्ताकाङ्क्षतया विधानम्, तत्सन्दष्टस्यैव च तत्पूर्वभाविनो वा प्रधानोत्तराङ्गस्य विकृतिप्रकरणेन ग्रहणम्''** इति । एवञ्च होमविशेषस्य विकृतिभावनायां निवृत्ताकाङ्क्षायामेवोपहोमादिवत् विधानात् नात्रावसरोऽवान्तरप्रकरणस्य । एतदेवाभिप्रेत्य **वार्तिककारैरप्युक्तम्—''यद्यनिराकाङ्क्षीकृतेऽभिषेचनीये तेषां पाठः स्यात् ततोऽवान्तरकरणमवगम्येत । स तु प्रागेव विदेवनादिभ्यः प्राकृतैर्धर्मैर्निराकाङ्क्षीकृतः'** इति । **'योग्योपकारप्रदानेन पूरिते कथंभावे निवृत्तं प्रकरणम्, समीपाम्नातधर्मानर्थक्यापत्तिभयादेव पुनरुत्पाद्येत'** इति च । एवञ्च स्थानविनियोज्यत्वस्यैव सम्भवात् युक्ता क्रमप्रकरणविरोधोदाहरणतेति ।

( स्थाननिरूपणम् )

क्रमप्राप्तं स्थाननिरूपणमवतारयति—**देशसामान्यमिति** । समानदेशत्वमित्यर्थः । एकस्थलसम्बद्धत्वमिति यावत् । **पाठसादेश्यमिति** । पाठतः सादेश्यमनुष्ठानतस्सादेश्यमित्यर्थः । अत्र वार्तिकं प्रमाणयति—**तत्रेति** । **देशसामान्यलक्षणः** सादेश्यरूपः । **पाठानुष्ठानसादेश्यादिति** । सादेश्यशब्दः 'द्वन्द्वान्त' इति न्यायेन प्रत्येकं सम्बध्यते । पाठसादेश्यात् अनुष्ठानसादेश्यादित्यर्थः । ननु अलौकिकार्थस्य शब्दातिरिक्तप्रमाणा-

स्थानं क्रमश्चेत्यनर्थान्तरम् । पाठसादेश्यमपि द्विविधम्-यथासङ्ख्यपाठः सन्निधिपाठश्चेति । तत्र 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्, 'वैश्वानरं द्वादशकपालं निर्वपे'दित्येवंक्रमविहितेष्टिषु 'इन्द्राग्नी रोचना दिव' इत्यादीनां याज्यानुवाक्यामन्त्राणां यथासङ्ख्यं प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमित्येव(१)यो विनियोगः स यथासङ्ख्यपाठात् । प्रथमपठितमन्त्रस्य हि कैमर्थ्याकाङ्क्षायां(२)प्रथमतो विहितं कर्मैव प्रथममुपतिष्ठते, समानदेशत्वात् ।

यानि तु वैकृतान्यङ्गानि(३)प्राकृताङ्गानुवादेन विहितानि सन्दंशापति-

---

गम्यत्वात् सादेश्यादेश्च शब्दत्वाभावात् न विनियोजकत्वम्, अतश्च तेषां प्रयोजनाकाङ्क्षायां विश्वजिन्न्यायेन स्वर्गार्थत्वमेव युक्तमित्यत आह—**विनियोगस्य कारणमिति ।** यद्यपि सादेश्यस्य न शब्दरूपत्वं, तथापि सन्निधिपठितानामङ्गानां प्रधानोपकारसम्पादकत्वे सम्भवति न कल्पनागौरवापादकस्वर्गफलकत्वं युक्तम् । अतश्च प्रधानार्थत्वे वर्णनीये पाठसादेश्यादेर्युक्तैव नियामकतेति भावः । श्लोकस्थक्रमशब्दस्यार्थान्तरपरत्वभ्रमं वारयितुमाह—**स्थानमिति । अनर्थान्तरमिति ।** पर्याय इत्यर्थः । **ऐन्द्राग्नमेकादशकपालमिति ।** अस्ति काम्येष्टिकाण्डसमाख्यातः फलार्थमिष्टीनां विधायको ब्राह्मणभागः । अस्ति च काम्येष्टियाज्यानुवाक्याकाण्डसमाख्यातो मन्त्रभागः । तत्र काम्येष्टिकाण्डे येष्टिः प्रथमं पठिता तस्याः काम्येष्टियाज्यानुवाक्याकाण्डगतं प्रथमं याज्यानुवाक्यायुगलमङ्गम्, द्वितीयस्या इष्टेः द्वितीयं युगलमङ्गमित्येवंरूपेण यः क्रमः स यथासंख्यपाठादित्यर्थः । किमत्र नियामकम् ? अत आह—**प्रथमेति । कैमर्थ्याकाङ्क्षायां** प्रयोजनाकाङ्क्षायाम् । **समानदेशत्वादिति** । उभयोः प्रथमपठितत्वेन प्राथम्यरूपैकदेशस्थत्वादित्यर्थः । इदमुदाहरणं मैत्रायणीयशाखानुरोधेन, तत्रैव द्वितीयकाण्डे प्रथमप्रपाठके प्रथमेऽनुवाके **"ऐन्द्राग्नमेकादशकपालं निर्वपेत् यस्य सजाता वीयायुः"** इत्यैन्द्राग्नेष्टिं विधाय द्वितीयेऽनुवाके वैश्वानरेष्टिविधानात् । एवं चतुर्थकाण्डे एकादशप्रपाठके ऐन्द्राग्नमन्त्रानाम्नाय वैश्वानरमन्त्राणामाम्नानात् ॥

एवं यथाक्रमपाठं निरूप्येदानीं सन्निधिपाठं निरूपयति—**यानि त्विति । वैकृतानि** विकृतिसन्निधौ पठितानि न वैकृतात्वमात्रेण सन्निधिग्राह्यत्वं भवति । औदुम्बरत्वशरादेर्वैकृताङ्गत्वेऽपि प्रकरणग्राह्यत्वानपायात् । अत आह—**प्राकृताङ्गानुवादेनेति ।** ते हि प्राकृतखादिरत्वबर्हिःकार्यानुवादेन विहिता इति न तत्रातिप्रसङ्ग इति भावः । ननु प्राकृताङ्गानुवादेन विहितानां विदेवनादीनां प्रकरणग्राह्यत्वमस्त्येव, अत आह—**सन्दंशपतितानीति** । विदेवनादयो हि सन्दंशपतिता इति पूर्वमेवोक्तम् । अतो न तत्रातिप्रसङ्गः । ननु नाङ्गानां विकृत्यर्थत्वं भवितुमर्हति । तेषां फलाकाङ्क्षासत्त्वेन फलेनैवान्व-

---

१. यत्तच्छब्दौ न स्तः । २. प्रथमविहितं

३. यत्वत्र क्वचित् पुस्तकेषु प्राकृताङ्गानुवादेनाविहितानि इति पाठो दृश्यते। व्याख्यातं च कैश्चित्तमेव पाठमवलम्ब्य, तन्न युक्तम् । न ह्यत्राविहितस्याङ्गत्वं वक्तुं प्रवृत्तिर्ग्रन्थकारस्य । अतो यथोक्त एव पाठस्साधीयान् ।

तानि तेषां विकृत्यर्थत्वं सन्निधिपाठात्। तेषां हि कैमर्थ्याकाङ्क्षायां फलवद्वि-कृत्यपूर्वमेव भाव्यत्वेन संबध्यते, उपस्थितत्वात्। अत एव तेषु न विश्वजि-न्न्यायावतारः। स्वतन्त्रफलार्थत्वे विकृतिसन्निधिपाठानर्थक्यापत्तेश्च।

पशुधर्माणामग्नीषोमीयार्थत्वमनुष्ठानसादेश्यात्। औपवसथ्येऽह्नि अ-ग्नीषोमीयः पशुरनुष्ठीयते, तस्मिन्नेव दिने ते धर्माः पठ्यन्ते। अतस्तेषां कैमर्थ्याकाङ्क्षायामनुष्ठेयत्वेनोपस्थितं पश्वपूर्वमेव भाव्यत्वेन संबध्यते। अतो युक्तमनुष्ठानसादेश्यात्तदर्थत्वं तेषाम्।

न च पाठसादेश्यादेव तत्किं न स्यादिति वाच्यम्। अग्नीषोमीयस्य पशोः क्रयसन्निधौ पाठात्। न च क्रयसन्निधौ तस्य पाठे तदनुष्ठानमपि तत्र स्यादिति वाच्यम्। 'स एष द्विदैवत्यः पशुरौपवसथ्येऽहन्यालब्धव्यः' इति वचनात्तदनुपपत्तेः। न च स्थानात्प्रकरणस्य बलीयस्त्वेन पशुधर्माणां ज्योति-

---

यौचित्यात्। विकृतेश्च स्वतः फलत्वाभावादित्याशङ्क्याह—फलवद्विकृतीति। विकृ-त्यपूर्वस्य स्वतः फलरूपत्वाभावेऽपि फलवत्त्वात् तदन्वयेऽपि परम्परयाऽङ्गानां फलवत्त्वं लभ्यत एवेति भावः। आनर्थक्यापत्तेश्चेति चकारेणोपस्थितपरित्यागे प्रमाणाभा-वोऽपि पूर्वोक्तः समुच्चितः॥

एवं द्विविधमपि पाठसादेश्यं निरूप्याधुनाऽनुष्ठानसादेश्यं निरूपयति—पशुधर्मा-णामिति। उपाकरण, नियोजन, पर्यग्निकरण, संज्ञपनादीनां पशुयागाङ्गानामित्यर्थः। यो दीक्षितो यदग्नीषोमीयं पशुमालभते'' इति विहितो योऽग्नीषोमदेवताकः पशुयागः तदर्थत्वमित्यर्थः। अनुष्ठानसादश्यमेव निरूपयति—औपवसथ्य इति। औपवसथ्यमहः दीक्षादिनतः चतुर्थमहः। दिन इति। तस्मिन् दिनेऽनुष्ठेयत्वेन पठि-तानां धर्माणां मध्ये उपाकरणादयोऽपि पठिता इत्यर्थः।

ननु अग्नीषोमीयस्यौपवसथ्येऽह्नि अनुष्ठाने तत्पाठेनापि तत्रैव भाव्यम्। एवञ्च प्रबलेन पाठसादेश्येनैव धर्माणां पश्वपूर्वार्थत्वे सम्भवति किमर्थं दुर्बलप्रमाणाश्रयणमिति शङ्कते—न चेति। तत् अग्नीषोमीयार्थत्वम्। अथवा ननु 'आग्नेयमग्निष्टोम आलभत' इत्यस्य सवनीयविधायकस्यौपवसथ्येऽहन्येव पाठात् प्रबलेन पाठसादेश्येन धर्माणां सवनीयपश्वपूर्वार्थत्वे सम्भवति किमर्थं दुर्बलेनानुष्ठानसादेश्येनाग्नीषोमीयार्थ-त्वमङ्गीक्रियते इति शङ्कते—न चेति। अस्मिन् पक्षे तदित्यनेन सामान्यतः पश्वपूर्वस्य ग्रहणम्। अथवा अग्नेय एवाग्नीषोमीयभ्रान्त्या पृच्छति—नचेति। य औपवसथ्येऽ-हनि पठितः स नाग्नीषोमीयः, स तु क्रयसन्निधौ पठितः, अतः पाठसादेश्याभावात् न तेनाङ्गत्वमित्यर्थः। क्रयसन्निधाविति। 'अरुणया पिङ्गाक्ष्ये'त्यादिवाक्यैः दीक्षणी-योत्तरदिनेऽनुष्ठेयत्वेन विहिता ये सोमक्रयाः तत्सन्निधावित्यर्थः। ननु यस्य यत्र पाठ-स्तत्रैव तस्यानुष्ठानमुचितमिति अग्नीषोमीयस्य क्रयसन्निधौ पाठे तत्रैव तस्यानुष्ठानापत्त्या पशुधर्मैस्सहानुष्ठानसादेश्यस्याप्यभावात् कथं तद्ग्राहकत्वमिति शङ्कते—नचेति। ननु एषां ज्योतिष्टोममहाप्रकरणे पाठात् प्रकरणात् तदर्थत्वमेव कुतो न स्यात् इत्याशङ्कते—

ष्टोमार्थत्वमेव किं न स्यादिति वाच्यम् । तस्य सोमयागत्वेन पशुधर्मग्रहणेऽयोग्यत्वात् । अतः 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायात् स्थानात्पशुयागार्थत्वमेव धर्माणां युक्तम् ।

न च तेषां तदर्थत्वं प्रकरणादेव किं न स्यादिति वाच्यम् । अग्नीषोमीयकथंभावाकाङ्क्षायाः क्लृप्तोपकारैः प्राकृतधर्मैरेवोपशान्तत्वात् । स हि सान्नाय्ययागप्रकृतिकः, उभयोः पशुप्रभवत्व(१)सामान्यात् । तदुक्तम्-

---

न चेति । पशुधर्मग्रहण इति । उपाकरणनियोजनादीनां पशुसंबन्धित्वेन श्रुतानां सोमलताद्रव्यके यागे साक्षादुपयोगाभावादिति भावः । नच "आनर्थक्यात्तदङ्गेषु" ति न्यायेन ज्योतिष्टोमाङ्गभूतेषु अग्नीषोमीयसवनीयानुबन्ध्यरूपेषु पशुयागेषु त्रिष्वप्यवतारोऽस्त्विति वाच्यम् । प्रकरणं हि प्रथमतो धर्मग्रहणाय प्रवृत्तं साक्षात् ग्रहणायोगात् परावर्तते । यदि तावत् न कश्चिदपि पशुधर्मान् ग्रहीतुं शक्नुयात् तदा गत्यभावात् परावृत्तमपि प्रकरणं पुनरभिमुखीभूय धर्मान् गृह्णातीति वक्तव्यम् । नचैतदस्ति । स्थानादग्नीषोमीयार्थत्वसम्भवादिति । अत इति । सोमयागस्य पशुधर्मग्रहणे अयोग्यत्वादित्यर्थः । ननु सोमयागस्य स्वयमयोग्यत्वेऽपि तदङ्गभूतपशुष्ववतारसम्भवेन कुतो न प्रकरणग्राह्यतेत्यत आह—आनर्थक्यप्रतिहतानामिति । यदि प्रकरणात् ज्योतिष्टोमार्थत्वं तर्ह्यनन्यथासिद्धस्य स्थानस्यानर्थक्यं भवतीति स्वतो दुर्बलमपि स्थानमानर्थक्यप्रतिहतत्वात् प्रबलं सत् अन्यत्र चरितार्थत्वात् दुर्बलं प्रकरणं बाधत एवेत्यर्थः । न्यायादित्यनन्तरं चकारोऽध्याहर्तव्यः ।

ननु पशुयागस्य धर्माकाङ्क्षत्वात् धर्माणाञ्च प्रयोजनाकाङ्क्षत्वादुभयाकाङ्क्षयैव परस्परं सम्बन्धोऽस्तु किमन्यतराकाङ्क्षयेति शङ्कते—न चेति । क्लृप्तोपकारैरिति । अयं भावः—भावना न स्वरूपतः पदार्थानाकाङ्क्षति । किन्तूपकारजनकत्वेन । निरूपितमेतदधस्तात् । एवञ्चाग्नीषोमीयभावनायाः कथंभावाकाङ्क्षायां प्रकृतावुपकारजनकत्वेन क्लृप्तानां धर्माणामेव दूरस्थानामप्यतिदेशोपस्थितानां प्रथममन्वयो वाच्यः । अन्वितेषु च तेषु तैरेवाकाङ्क्षाशान्तेर्नोभयाकाङ्क्षा सम्भवति । अङ्गानां विकृतिसन्निधिपाठवैयर्थ्यभिया तु तदाकाङ्क्षाबलादेव विकृतेराकाङ्क्षामुत्थाप्य तत्सम्बन्धो वाच्यः । अतश्च सिद्धमन्यतराकाङ्क्षारूपस्थानविनियोज्यत्वमिति । ननु स्यादेतदेवं यदि विकृतित्वमग्नीषोमीयस्य स्यात्, स एव खलु सर्वेषां पशुयागानां प्रकृतिभूतः, अत आह-स हीति । यद्यप्यग्नीषोमीययागः सर्वपशुयागप्रकृतिभूतः तथापि तत्र कतिपयानामेवाङ्गानां पाठात् देवतावाहनादिसन्निपत्योपकारकविषयेऽस्त्येव तस्याकाङ्क्षा । किञ्च यत्रायं (२) पशुरुत्पन्नः क्रयसन्निधौ न तत्र धर्मा आम्नाताः । ते त्वौपवसथ्येऽहन्याम्नाताः । तत्रोत्पन्नेतिकर्तव्यताकाङ्क्षा न प्रदेशान्तरस्थैर्धर्मैश्शाम्यतीति तस्यान्यतो धर्मग्राहकत्वावश्यंभावे सादृश्यात् दर्शपूर्णमासान्तर्गतसान्नाय्यतो धर्मातिदेश इति भावः । किं तत् सादृश्यम् ? अत आह-पशुप्रभवत्वसामान्यादिति । सान्नाय्यविकृतित्वे आष्टमिकं सूत्रं प्रमाण-

---

१. पशुप्रभवद्रव्यत्व २. अपूर्वतया विहित इत्यर्थः ।

'साान्नाय्यं वा तत्प्रभवत्वात्' इति ।

साान्नाय्यं दधिपयसी । तत्र पशुयागः पयोयागप्रकृतिकः साक्षात्पशुप्रभवत्वात् । अतश्चोदकप्राप्तैस्तद्धर्मैर्निराकाङ्क्षत्वान्न पशुयागे धर्माणां प्रकरणं विनियोजकम् ; किं तु स्थानमेव । तदेवं निरूपितः संक्षेपतः स्थानविनियोगः।

तच्च समाख्यातः प्रबलम् । स्थानविनियोगे हि पदार्थयोर्देशसामान्यलक्षणः संबन्धः प्रत्यक्षः । समाख्याविनियोगे तु संबन्धो न प्रत्यक्षः । पदार्थयोर्भिन्नदेशत्वात् । न च सा संबन्धवाचिका । यौगिकानां शब्दानां द्रव्यवाचकत्वेन संबन्धावाचकत्वात् । तथा हि—समाख्या संबन्धसामान्यवाचिका

---

यति-साान्नाय्यमिति । वाशब्दः पक्षव्यावर्तकः । पशुस्साान्नाय्यमेव प्रकृतित्वेन गृह्णीयात्, कुतः ? तत्प्रभवत्वात् पशुप्रभवत्वात्, पशुरपि पशुजन्यः, साान्नाय्यमपि पशुजन्यमिति सूत्रार्थः । साान्नाय्ययागस्य दधिपयोयागोभयरूपत्वेन दधियागप्रकृतिकत्वम् ? उत पयोयागप्रकृतिकत्वम् ? अथ वा सौर्ये आग्नेयवदुभयधर्मप्रवृत्तिः ? अत आह—तत्रेति । पयोयागप्रकृतिक इति । दध्नस्तु पयसा व्यवहितत्वादिति भावः । ननु पाठसादेश्यादेरप्युभयाकाङ्क्षान्यतराकाङ्क्षारूपभेदसत्वात् तत्स्वरूपं तदुदाहरणादिकं च कुतो नोक्तम् ? अत आह— सङ्क्षेपत इति । यत् प्रसिद्धमवश्यनिरूपणीयं तदस्माभिरत्र निरूपितम् । अधिकमन्यतोऽवगन्तव्यमिति भावः । अत्र च पशुधर्माणां 'पशुमुपाकरोति, यूपे पशुं नियुञ्जीत, पशुं पर्यग्नि करोति, इत्यादिभिर्वाक्यैः श्रुत्यैव पश्वर्थत्वेन विनियोगात् न पुनः स्थानविनियोज्यत्वसम्भवः, तथाप्यपूर्वसाधनत्वलक्षणातात्पर्यग्राहकत्व एव भाक्तो विनियोजकत्वव्यवहार इति द्रष्टव्यम् ॥

एवं स्थानं निरूप्य तद्गतं समाख्यातः प्राबल्यं निरूपयति—तच्चेति । देशसामान्यलक्षण इति । पाठतोऽनुष्ठानतो वा पदार्थयोरेकदेशस्थत्वस्यैव स्थानपदार्थत्वेन निरूपितत्वादिति भावः । एवञ्च स्वाध्यायपाठादनुष्ठानाद्वा उभयोः सम्बन्धोऽवगम्यत एवेति न समाख्यावदत्र सम्बन्धस्य कल्पनीयतेति मनसि निधायाह-प्रत्यक्ष इति । भिन्नदेशत्वादिति । एकस्य मन्त्रकाण्डादौ सत्वादपरस्य च ब्राह्मणगतत्वादित्यर्थः । ननु कृत्तद्धितसमासेषु भावप्रत्ययेन सम्बन्धाभिधानात् भावप्रत्ययवाच्यस्य प्रकृतिवाच्यत्वनियमात् समाख्याया एव सम्बन्धवाचित्वं सिध्यतीति तत्रापि प्रत्यक्ष एव सम्बन्ध इत्यत आह—नचेति । यथा च कृत्तद्धितसमासेषु न सम्बन्धवाचित्वं तथाऽरुणाधिकरणे वार्तिककारैर्निपुणतरमुपपादितम् । ननु यौगिकशब्देषु सर्वत्र सम्बन्धस्य प्रतीयमानत्वात् सम्बन्धवाचित्वं तेषामवश्यमभ्युपेयमित्यत आह—यौगिकानामिति । सम्बन्धावाचकत्वमेवोपपादयति—तथा हीति । अयं भावः-समाख्या सम्बन्धत्वेन रूपेण सम्बन्धं बोधयति ? उत संयोगसमवायादिविशेषरूपत्वेन ? यदि तावत् सम्बन्धत्वेन रूपेण, ततः सामान्यस्य प्रवृत्त्यजनकत्वेन तन्मात्रोक्तौ फलविशेषो न स्यात् । किञ्च सामान्योक्तौ सर्वेषां सम्बन्धानां सम्बन्धत्वाविशेषात् तद्वाचकानां सर्वेषामपि यौगिकशब्दानां पर्यायत्वं स्यात् । अथ सम्बन्धविशेषोऽभिधीयेत, ततस्तस्य स्वतो विशेषाभावात् सम्बन्धिकृत एव भेदोऽभ्युपगन्तव्यः । सम्बन्ध्यपि चानभिधीयमानो न शक्योऽभिधीयमानं सम्ब-

स्यात्, ? तद्विशेषवाचिका वा ? । नाद्यः । तदुक्तौ प्रयोजनाभावात् । सर्वयौगिकशब्दानां पर्यायतापत्तेश्च । द्वितीयेऽवश्यं संबन्धिनौ वाच्यौ । तदन्तरेण संबन्धे विशेषाभावात् । तत्प्रतिपत्तिमन्तरेण तदप्रतिपत्तेश्च । अतश्चावश्यं संबन्धिवाचकत्वं समाख्याया वक्तव्यम् । तथा च न संबन्धवाचकत्वं, संबन्धिप्रतिपत्त्यैव वाक्यार्थप्रतिपत्तिन्यायेन तत्प्रतिपत्तिसंभवे तत्र शक्तिकल्पने गौरवात् । यथाहुः—

सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते ।
नहि संबन्धवाचित्वं संभवत्यतिगौरवात् ॥ इति ।

तथा—

पाकं तु पचिरेवाह कर्तारं प्रत्ययोऽप्यकः ।
पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्यचित् ॥ इति ।

तथाच समाख्या न संबन्धवाचिका । 'होतृचमस' इत्यादिका तु वैदिकी

---

न्धं व्यवच्छेत्तुमित्यवश्यं सोऽप्यभिधातव्यः । न चैकस्मिन् सम्बन्धिनि सम्बन्धो व्यवतिष्ठते । न च तन्मात्राभिधानेनोभयनिष्ठस्सम्बन्धोऽवगन्तुं शक्यत इत्यपरोऽपि सम्बन्ध्यभिधेयः । तत्र गोमानित्यादौ गोशब्देनैको गोरूपस्सम्बन्ध्यभिधीयते, द्वितीयस्य तु न कश्चिदभिधाता दृश्यते । अतश्च सम्बन्धविशेषमभिदधता मतुपा तद्वन्तमेकमनुक्त्वा सम्बन्धविशेषमभिधातुमशक्नुवता अवश्यं द्वितीयोऽपि सम्बन्ध्यभिधातव्यः । ततश्च तमभिधाय पुनस्सम्बन्धाभिधानेऽत्यन्तं गौरवमिति । **तदुक्तौ** सम्बन्धसामान्योक्तौ । **तदन्तरेण** सम्बन्धिनावन्तरेण । **विशेषाभावादिति** । भूतले घटः, आकाशे शब्दः, इत्यादौ संयोगसमवायादिसम्बन्धानां तत्तत्सम्बन्ध्येकनिरूप्यत्वादिति भावः । **तत्प्रतिपत्तिमन्तरेण** सम्बन्धिप्रतिपत्तिमन्तरेण । **वाक्यार्थप्रतिपत्तिन्यायेनेति** । यथा वाक्ये पदार्थानां परस्परसम्बन्धो वाचकशब्दं विनैव समभिव्याहारादेव भासते तद्वदत्रापि प्रकृतिप्रत्यययोः समभिव्याहारबलादेव सम्बन्धप्रतीतिर्भविष्यतीत्यर्थः । अत्र वार्तिकं प्रमाणयति—**सर्वत्रेति** । स्पष्टोऽर्थः । **पाकन्त्विति** । पाचक इत्यत्र पचिधातुः पाकं ब्रूते, तदुत्तरं श्रूयमाणः कर्त्रर्थकण्वुल्प्रत्ययादेशभूतोऽक इत्यंशः कर्तारं ब्रूते । तयोस्सम्बन्धस्तु न केनाप्युच्यत इत्यर्थः । प्रकृतिप्रत्यययोः सम्बन्धबलादेव तस्य प्रतिपत्तिसम्भवादिति भावः ।

समाख्यायास्सम्बन्धावाचकत्वमुपसंहरति—**तथा चेति** । एवं सामान्यतस्समाख्यायाः सम्बन्धावाचकत्वमुपवर्ण्य तद्विशेषभूतयोर्लौकिकवैदिकयोस्समाख्ययोः तत् सङ्क्रमयितुकामः प्रथमं वैदिकसमाख्यायां तत् सङ्क्रमयति—**होतृचमस इति** । तुशब्दो ह्यर्थे । **निषादेति** । "एतया निषादस्थपतिं याजयेत्" इत्यत्र निषादानां स्थपतिः इति षष्ठीतत्पुरुषो वा निषादश्चासौ स्थपतिश्चेति कर्मधारयो वेति सन्दिह्य षष्ठीतत्पुरुषाङ्गीकारे पूर्वपदे सम्बन्धिलक्षणाङ्गीकरणापत्तिरूपं दोषमुद्भाव्य तदपनुत्तये कर्मधारयसमासाभ्युपगम एव श्रेयानिति सिद्धान्तितं षाष्ठप्रथमे । तेन निश्चीयते—निषादस्थपतिशब्दो न षष्ठ्यर्थसम्बन्धवाचीति । एवञ्च यथा निषादस्थपतिशब्दः लक्षणाकल्पनादिरूपगौरवभिया न षष्ठ्यर्थसम्बन्धवाचकः एवं होतृचमसशब्दोऽपि न षष्ठ्यर्थभूतसम्बन्धवाचक इत्यर्थः ।

समाख्या निषादस्थपतिशब्दवन्न षष्ठ्यर्थसंबन्धवाचिका। नापि वाक्यवत्तद्बोधिका, तस्याः पदत्वेनाप्रमाणत्वात्। पौरोडाशिकमित्यादिसमाख्यास्त्वतिदुर्बलाः, लौकिकत्वेन पुरुषप्रत्ययसापेक्षत्वात्; काण्डगोचरत्वेन तत्तत्पदार्थागोचरत्वाच्च। काण्डवाचकत्वमपि न काण्डत्वेन, किं तु पौरोडाशिकत्वादिनैव। न ह्येकहायनीशब्दो द्रव्यवाचकोऽपि गोत्वेन(१)तद्वदति, किं तर्हि? एकहायनीत्वेनैव।

स्थानविनियोगे तु पदार्थयोर्विशेषपुरस्कारेणैव संबन्धः प्रत्यक्षप्रमाणप्रतिपन्नः। अतश्च समाख्यामुपलभ्य नूनमनयोः पदार्थयोः संबन्धोऽस्तीति यावत्कल्प्यते तावत्प्रत्यक्षप्रतिपन्नेन संबन्धेन परस्परमाकाङ्क्षा, तदभावे च संबन्धानुपपत्तेः; कल्पितसंबन्धेन च यावदितरत्राकाङ्क्षादि(२)कल्पना तावदन्यत्राकाङ्क्षया वाक्यादिकल्पनया विनियोगः क्रियते इति सिद्धं स्थानस्य समाख्यातः प्राबल्यम्। अत एव शुन्धनमन्त्रः सान्नाय्यपात्राङ्गं, पाठसादेश्यात्; न तु पौरोडाशिकसमाख्यया पुरोडाशपात्राङ्गमिति॥

---

ननु वाचकत्वाभावेऽपि वाक्यार्थस्य वाक्यावाच्यस्य यथा वाक्यतः प्रतीतिरभ्युपगम्यते, एवं पदावाच्यस्यापि पदबोध्यत्वमस्तु, अत आह—नापीति। तद्बोधिका सम्बन्धबोधिका। तस्याः समाख्यायाः। पदत्वेनेति। प्रमाणाधीनत्वात् वस्तुसिद्धेः केवलस्य पदस्य शाब्दबोधरूपप्रमित्यजनकत्वेन प्रामाण्यासम्भवादिति भावः। एवं वैदिक्यां समाख्यायां सम्बन्धावाचकत्वं सङ्गमय्येदानीं लौकिक्यां तत्सङ्गमयति—पौरोडाशिकमिति। पौरोडाशिकम्, हौत्रम्, आध्वर्यवम्, इत्यादिकास्समाख्या याज्ञिकैरेव पुरुषैः कल्पिताः। अतस्तदर्थनिश्चयार्थं तत्कल्पकपुरुषीयज्ञानयाथार्थ्यनिश्चयोऽपेक्षणीयः। अतः प्रमाणान्तरसापेक्षत्वान्न झटिति निश्चयमादध्यादिति भावः। काण्डगोचरत्वेनेति। काण्डविशेषस्यैव तादृशसमाख्याविशिष्टत्वादिति भावः। ननु पौरोडाशिकत्वेनापि काण्ड एव गोचरीभवतीति को विशेषः? अत आह-नहीति। द्रव्यवाचकोऽपीति। एकहायनीशब्दस्य बहुव्रीहित्वात् तस्य चान्यपदार्थे शक्त्यङ्गीकारादिति भावः। एकहायनीत्वेनैवेति। एतादृशस्थले वाच्यस्य द्रव्यस्वरूपस्य भेदाभावेऽपि प्रवृत्तिनिमित्तभेदमादायैव सहप्रयोग उपपादनीयः। अन्यथा पर्यायत्वापत्तेरेकहायन्या गवा सोमं क्रीणातीति सहप्रयोगो न स्यादिति भावः। इतरत्र समाख्यास्थले। अन्यत्र स्थानविनियोगे। शुन्धनमन्त्रः 'शुन्धध्वं दैव्याय कर्मणे देवयज्यायै' इति मन्त्रः। पौरोडाशिकमिति समाख्याते मन्त्रकाण्डे सान्नाय्ययागाङ्गसन्निधौ शुन्धध्वमिति मन्त्र आम्नातः। स पाठसादेश्यरूपात् स्थानात् सान्नाय्यसम्बन्धिपात्रप्रोक्षणाङ्गमित्यर्थः। पात्राङ्गं पात्रप्रोक्षणाङ्गम्। कुम्भी, शाखापवित्रम्, अभिधानी, दोहनपात्रमित्यादीनि सान्नाय्यपात्राणि। उलूखलम्, मुसलम्, कृष्णाजिनम्, दृषदुपले, इत्यादीनि पुरोडाशपात्राणि।

( समाख्यानिरूपणम् )

एवं स्थानगतं समाख्यातः प्राबल्यं निरूप्येदानीं समाख्यां निरूपयति—समाख्ये-

---

१. द्वदिता २. कल्प्यते

( समाख्यानिरूपणम् )

समाख्या यौगिकः शब्दः । सा च द्विविधा-वैदिकी लौकिकी चेति । तत्र होतुः चमसभक्षणाङ्गत्वं 'होतृचमस' इति वैदिक्या समाख्यया । अध्वर्योस्तत्तत्पदार्थाङ्गत्वं लौकिक्या 'आध्वर्यव'मितिसमाख्ययेति संक्षेपः ।

तदेवं निरूपितानि संक्षेपतः श्रुत्यादीनि षट् प्रमाणानि ।

---

ति । वैदिकी । वेदे श्रुता । लौकिकी याज्ञिकसम्प्रदायसिद्धा ।

श्रुत्यादिनिरूपणमुपसंहरति—तदेवमिति ॥

एवं श्रुत्योर्विरोधे—ऐन्द्रीमन्त्रस्यैव तद्धितश्रुत्या प्राप्तमिन्द्राङ्गत्वं बाधित्वा तृतीयाश्रुत्या प्रबलया गार्हपत्याङ्गत्वम् ।

लिङ्गयोर्विरोधे—मुख्यसामर्थ्येन गौणसामर्थ्यस्य बाधः, यथा-'बर्हिर्देवसदनं दामी' त्यत्रैव गौणसामर्थ्यप्राप्तमुलपराजिलवनाङ्गत्वं बाधित्वा मुख्यसामर्थ्येन बर्हिर्लवनाङ्गत्वम् ।

वाक्ययोर्विरोधे—'इत्सरा वा एषा यज्ञस्य । 'तस्मात् यत्किञ्चित्प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्ति' इत्यत्रोपांशुत्वस्य व्यवहितयज्ञपदसम्बन्धरूपं वाक्यं बाधित्वा सन्निहितयत्किञ्चित्पदसम्बन्धरूपात् वाक्यात् भागधर्मत्वम् ।

क्रमयोर्विरोधे—काम्येष्टिकाण्डपठितयोर्द्वयोर्याज्ययोरिन्द्राग्निदेवतयोरसन्निधानाविशेषादैन्द्राग्नद्वयाङ्गत्वमनियमेन प्राप्स्यमानं बाधित्वा यथासंख्यपाठात् प्रथमस्य प्रथमाङ्गत्वम्, द्वितीयस्य द्वितीयाङ्गत्वम् ।

समाख्ययोर्विरोधे—आध्वर्यवमिति सामान्यसमाख्यां बाधित्वा याजमानमिति विशेषसमाख्यया याजमानेषु पदार्थेषु यजमानकर्तृत्वम् ।

एवं श्रुतिवाक्ययोर्विरोधे—आरुण्यस्य वाक्यादेकहायन्यङ्गत्वं प्राप्स्यमानं बाधित्वा तृतीयाश्रुत्या क्रयाङ्गत्वम् ।

श्रुतिप्रकरणयोर्विरोधे-'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य' इत्यादीनां सामिधेन्यनुवचनानां प्रकरणाद्दर्शपूर्णमासाङ्गत्वं बाधित्वा षष्ठीश्रुत्या प्रतिष्ठादिरूपफलार्थत्वम् ॥

श्रुतिक्रमयोर्विरोधे-रशनाधर्माणां त्रिवृत्त्वदर्भमयीत्वादीनां क्रमादग्नीषोमीयाङ्गत्वं बाधित्वा श्रुत्या यूपाङ्गत्वम् ॥

श्रुतिसमाख्ययोर्विरोधे-पौरोडाशिकमिति समाख्याते दर्शपूर्णमासकाण्डे पठितानां 'इषे त्वे'त्यादीनां समाख्यया पुरोडाशाङ्गत्वं बाधित्वा 'इषे त्वेति शाखां छिनत्ति' इतीतिकरणरूपया श्रुत्या शाखाछेदनाङ्गत्वम् ॥

एवं लिङ्गप्रकरणयोर्विरोधे-पूषानुमन्त्रणमन्त्राणां प्रकरणात् दर्शपूर्णमासयागाङ्गत्वं बाधित्वा लिङ्गात् पूषयागाङ्गत्वम् ॥

लिङ्गस्थानयोर्विरोधे—ज्योतिष्टोमप्रकरणे भक्षावान्तरप्रकरणे श्रुतयोः भक्षणार्थानुज्ञापनानुज्ञार्थयोर्मन्त्रयोः 'उपहूत उपह्वयस्वे' त्यनयोः क्रमात् प्रथमस्यानुज्ञापनार्थत्वे द्वितीयस्य चानुज्ञार्थत्वे प्राप्ते तद्बाधित्वा लिङ्गात् द्वितीयस्यानुज्ञापने प्रथमस्य चानुज्ञायां विनियोगः ॥

एतत्सहकृतेन विनियोगविधिना—समिदादिभिरुपकृत्य दर्शपूर्णमासाभ्यां यजेते—त्येवंरूपेण यानि विनियुज्यन्ते तान्यङ्गानि। तानि द्विविधानि-सिद्धरूपाणि क्रियारूपाणि चेति।

तत्र सिद्धरूपाणि जातिद्रव्यसङ्ख्यादीनि। तानि च दृष्टार्थान्येव। क्रियारूपाणि च द्विविधानि-गुणकर्माणि प्रधानकर्माणि चेति। एतान्येव सन्निप-

---

लिङ्गसमाख्ययोर्विरोधे—मन्त्रानुवाकान्तर्गतानां 'अश्विनोस्त्वा बाहुभ्याᳬ सध्यास' मित्यादीनां समाख्यया प्राप्तमन्त्राङ्गत्वं बाधित्वा लिङ्गेन ग्रहणावेक्षणादौ विनियोगः।

एवं वाक्यक्रमयोर्विरोधे—'युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः' इति यूपपरिव्याणाङ्गभूतस्य मन्त्रस्य स्थानादग्नीषोमीयाङ्गत्वे प्राप्ते तद्बाधित्वा परिवीतपदैकवाक्यत्वात् सवनीयपश्वङ्गत्वम्।

वाक्यसमाख्ययोर्विरोधे—ज्योतिष्टोमादिप्रधानानामाध्वर्यवसमाख्यया अध्वर्युकर्तृकत्वे प्राप्ते तद्बाधित्वा स्वर्गकामादिपदैकवाक्यत्वादर्थिमात्रविषयत्वम्॥

एवं प्रकरणसमाख्ययोर्विरोधे—पौरोडाशिककाण्डपठितानां प्रयाजादीनां समाख्यया पुरोडाशमात्राङ्गत्वे प्राप्ते तद्बाधित्वा प्रकरणात् सर्वदर्शपूर्णमासार्थत्वम्। एवमनेकस्य शेषस्यैकशेषिणं प्रति विनियुज्यमानस्यापि प्रमाणान्युदाहरणीयानि, एतत्सर्वं वार्तिकादौ सम्यङ्निरूपितं तत एवावगन्तव्यम्, विस्तरभयात्तु नेह प्रतन्यत इत्याशयेनाह—सङ्क्षेपत इति।

एतत्सहकृतेन। श्रुत्यादिप्रमाणषट्कविशिष्टेन। समिदादिभिः। 'समिधो यजति' इत्यादिवाक्यविहितैः प्रयाजानूयाजादिभिः। एवंरूपेणेति। यद्यपीदं न प्रयोगविधिस्वरूपम्, अङ्गविध्येकवाक्यतामापन्नः प्रधानविधिरिति प्रयोगविधिस्वरूपमभिधास्यति ग्रन्थकारोऽप्यनुपदमेव। तथापि तैस्तैः प्रातिस्विकविधिभिः श्रुत्यादिसहकृतैः तत्र तत्र विनियुक्तस्याङ्गकलापस्य प्रयोगविधिरनुष्ठापको भवतीत्याशयेनेदम्।

जातिद्रव्यसंख्यादीनीति। जातिः ब्राह्मणत्वादिः। द्रव्यं व्रीह्यादि, संख्या एकत्वादिः, आदिपदेन अरुणादिगुणस्य पुंस्त्वादेर्लिङ्गस्य च परिग्रहः। दृष्टार्थान्येवेति। तैः क्रियानिर्वृत्तिरूपदृष्टप्रयोजनस्यैव जननादिति भावः। क्रियारूपाणि विभजते-क्रियारूपाणि चेति। गुणकर्माणीति। गुणभूतानि कर्माणि गुणकर्माणि इति मध्यमपदलोपिसमासः। एवं प्रधानकर्माणीत्यत्रापि। गुणकर्मणि द्रव्यस्य प्राधान्यं कर्मणो गुणत्वम्, यथा 'व्रीहीनवहन्ती'त्यत्र व्रीहीणां प्राधान्यं अवहननस्य तदङ्गता। प्रधानकर्मणि कर्मणः प्राधान्यं द्रव्यस्य गुणत्वम्, यथा—प्रयाजादौ कर्मणः प्राधान्यं आज्यादेस्तदङ्गता। यथाह सूत्रकारः—"तानि द्वैधं गुणप्रधानभूतानि यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि। द्रव्यस्य गुणभूतत्वात्। यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत तस्य द्रव्यप्रधानत्वात्" इति। एतान्येवेति। यानि क्रियारूपाणि गुणकर्मप्रधानकर्माणि तान्येवेत्यर्थः। सन्निपत्येति। सन्निपत्य द्रव्यादिषु

स्योपकारकाण्यारादुपकारकाणीति चोच्यन्ते। तत्र कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म सन्निपत्योपकारकम्। यथा-अवघातप्रोक्षणादि। तच्च दृष्टार्थमदृष्टार्थं दृष्टादृष्टार्थं च। दृष्टार्थमवघातादि। अदृष्टार्थं प्रोक्षणादि। दृष्टादृष्टार्थं पशुपुरोडाशयागादि। तद्धि द्रव्यस्य यागांशेनाऽदृष्टं देवतोद्देशेन च देवतास्मरणं दृष्टं करोति। इदमेव चाश्रयिकर्मेत्युच्यते।

तच्च सन्निपत्योपकारकं द्विविधम्-उपयोक्ष्यमाणार्थमुपयुक्तार्थं चेति। तत्रावघातप्रोक्षणादि उपयोक्ष्यमाणार्थम्, व्रीहीणां यागे उपयोक्ष्यमाणत्वात्। प्रतिपत्तिकर्म इडाभक्षणादि उपयुक्तपुरोडाशादिसंस्कारकम्। उपयुक्तस्या (१) कीर्णकरतानिवर्तकं कर्म प्रतिपत्तिकर्म।

---

संबध्य उपकुर्वन्तीति सन्निपत्योपकारकाणि। आरादुपकारकाणीति। आरात् साक्षात् द्रव्यादिसंबन्धमन्तरा उपकुर्वन्तीत्यारादुपकारकाणि।

तत्र सन्निपत्योपकारकारादुपकारकयोर्मध्ये। प्रोक्षणादीत्यादिपदेन स्विष्टकृत्पशुपुरोडाशयागेडाभक्षणादयो गृह्यन्ते। सन्निपत्योपकारकं विभजते—तच्चेति। दृष्टः प्रत्यक्षावगतः अर्थः प्रयोजनं यस्येति विग्रहः। अदृष्टार्थमिति। अदृष्टं अपूर्वं अर्थः प्रयोजनं यस्येति विग्रहः। अवघातादीत्यादिपदेन पेषणसंयवनादयो गृह्यन्ते। प्रोक्षणादीत्यादिपदेन पात्राग्निपरिधि सम्मार्गपर्यग्निकरणादयो गृह्यन्ते। सम्मार्गादयो हि पूर्वशोधितेष्वेव पात्रेषु पुनः क्रियन्ते। अतस्तत्र केवलमदृष्टमन्तरा न किञ्चित् दृष्टं प्रयोजनमस्तीति भावः। पशुपुरोडाशेति। पशुयागाङ्गभूतः यस्तद्देवताकः पुरोडाशयागस्त इत्यर्थः। पशुपुरोडाशयागादीत्यादिपदेन स्विष्टकृद्वाजिनयागादयो गृह्यन्ते। कथमेषामुभयार्थता? तदुपपादयति—तद्धीति। अस्ति यागादौ अंशत्रयं-उद्देशांशः, त्यागांशः, प्रक्षेपांशश्चेति। उद्दिश्य हि काञ्चन देवतां हविस्त्यज्यते। त्यक्तस्य द्रव्यस्य विहितदेशे अग्न्यादौ प्रक्षेपश्च क्रियते। अतश्च पशुपुरोडाशयागादौ त्यागांशेनाऽदृष्टं परमुत्पाद्यते न किञ्चित् दृष्टं प्रयोजनम्। उद्देशांशेन पूर्वं वपायागे उपयुक्तायाः हृदयाद्यङ्गयागे चोपयोक्ष्यमाणायाः देवतायाः स्मरणरूपं दृष्टं प्रयोजनमुत्पाद्यते। पुरोडाशयागकाले स्मृताया देवतायाः हृदयाद्यङ्गयागकाले शीघ्रोपस्थितिसम्भवादिति पुरोडाशयागः दृष्टादृष्टरूपोभयप्रयोजनकत्वात् दृष्टादृष्टार्थ इत्यर्थः। उभयार्थसन्निपत्योपकारकस्य नामान्तरं ज्ञापयति—इदमेव चेति। यत् दृष्टादृष्टार्थं कर्मानुपदमुक्तं तदेवेत्यर्थः। यथाहुः पार्थसारथिमिश्राः-दृष्टादृष्टं च किञ्चित् कर्म, यदाश्रयिशब्दाभिधानायकं भजते, यथा पशुपुरोडाशयाग इति। एवञ्च 'इदमेव च सन्निपत्योपकारकमेव च न त्वारादुपकारकमित्यर्थः' इति सन्निपत्योपकारकस्य निखिलस्यापि आश्रयिकर्मत्वं वदन् अर्थसङ्ग्रहव्याख्याता निरस्तो वेदितव्यः॥

सन्निपत्योपकारकमङ्गं विभजते—तच्चेति। उपयोक्ष्यमाणार्थमिति। उत्तरत्र यागे उपयोक्ष्यमाणं यत् व्रीह्यादि तदर्थमित्यर्थः। तदेवोपपादयति—व्रीहीणामिति। आकीर्णकरतानिवर्त्तकमिति। आकीर्णं संकीर्णं व्याप्तं करोतीत्याकीर्णकम्, तता

---

१ कीर्णतानिव,

**उपयुक्तसंस्कारार्थं च (१)कर्म उपयोक्ष्यमाणसंस्कारार्थात् दुर्बलम्, उपयुक्तापेक्षया उपयोक्ष्यमाणेऽत्यादरात्। अत एव 'प्रायणीयनिष्कास उदयनीयमभिनिर्वपतो' त्यत्र निष्कासस्य निर्वापार्थत्वम्, न तु तस्य तदर्थत्वम्, निष्कासस्योपयुक्तत्वादित्युक्तमेकादशे।**

**तच्च सन्निपत्योपकारकमारादुपकारकाद्बलीयः। नन्ववघातादि भवतु**

आकीर्णकरता, तन्निवर्त्तकमित्यर्थः। पुरोडाशादिर्हि प्रधानयागाद्यर्थमुत्पादितो निर्वृत्ते यागे निर्वृत्तप्रयोजनः अवशिष्टांशे कार्यान्तरमपेक्षमाणः उपरितनकार्योपयुक्तं स्थानं व्याप्नुवन् किमस्यावशिष्टस्य कार्यमिति मनो वा विक्षिप्तं कुर्वन् तिष्ठति, तस्य हि कार्यान्तरे इडाभक्षणादौ विहिते स विक्षेपो निवर्त्तते इति।

**उपयुक्तसंस्कारार्थं च कर्मेति**। यदुपयुक्तं पुरोडाशादिकं संस्करोति तत्कर्मेत्यर्थः। **उपयोक्ष्यमाणसंस्कारार्थादिति**। कर्मण इति शेषः। क्वचित् पुस्तकेषु कर्मपदं नास्ति। तदा एवं व्याख्यातव्यं दृष्टान्तानुरोधेन च। **उपयुक्तसंस्कारार्थं चेति**। उपयुक्तसंस्कारार्थत्वमित्यर्थः। एव मुत्तरत्रापि **संस्कारार्थादित्यस्य** संस्कारार्थत्वादित्यर्थः। एवं च सन्निपत्योपकारकनिष्ठं यदुपयुक्तसंस्कारार्थत्वं तस्य तन्निष्ठोपयोक्ष्यमाणसंस्कारार्थत्वापेक्षया दौर्बल्यमिति फलितम्। भावप्रधाननिर्देशमाश्रित्यार्थान्तिपदयोरेवमेवार्थो वर्णनीयः, अन्यथा दृष्टान्तासङ्गतेः। **अत एव** उपयोक्ष्यमाणसंस्कारार्थत्वापेक्षया उपयुक्तसंस्कारार्थत्वस्य दौर्बल्यादेव। **प्रायणीयनिष्कास इति**। स्तो ज्योतिष्टोमे प्रायणीयोदयनीयसंज्ञकाविष्टिविशेषौ। तत्र द्वितीयदिनानुष्ठेयप्रायणीयार्थश्चरुः यस्मिन् पक्वः तत्पात्रीप्रक्षालनजलं सावशेषलेपं तथैव स्थापयित्वा तस्मिन्नेव जले अवभृथानन्तरं कर्त्तव्याया उदयनीयेष्टेः चरुनिर्वपणं कार्यमिति विषयवाक्यार्थः। अत्र यः प्रायणीयनिष्कासाधिकरणक उदयनीयचरुनिर्वापः स प्रायणीयहविस्संस्कारकः? उतोदयनीयहविस्संस्कारकः? इति संदिह्य प्रायणीयनिष्कासस्य कृतार्थस्य प्रतिपत्तिसाकाङ्क्षस्येयं प्रतिपत्तिरुपदिश्यत इति पूर्वपक्षयित्वा उपयुक्तसंस्कारत्वापेक्षया उपयोक्ष्यमाणसंस्कारत्वस्य प्राबल्यात् निर्वापार्थत्वमेव निष्कासस्य इति राद्धान्तः कृतः। (२) **तस्य** निर्वापस्य। **तदर्थत्वं** निष्कासार्थत्वम्। तत्र कारणमाह—**उपयुक्तत्वादिति**। **एकादश इति**। द्वितीयचरणान्त्य इति शेषः।

**तच्चेति**। त्रिविधमपीत्यर्थः। **ननु** न सन्निपत्योपकारकस्य तत्त्वेन प्राबल्यम्, आरादुपकारकस्य वा न स्वरूपतो दौर्बल्यम्, किन्तु तयोः दृष्टफलजनकत्वतदजनकत्वकृते प्राबल्यदौर्बल्ये वक्तव्ये। तथा च दृष्टार्थानां सन्निपत्योपकारकाणामदृष्टार्थारादुपकारकापेक्षया प्राबल्ये सिद्धेऽपि नादृष्टार्थसन्निपत्योपकारकाणामारादुपकारकापेक्षया प्राबल्यं

१. क्वचित् कर्मेति नास्ति।

२. यत्त्वत्र महामहोपाध्यायश्रीवासुदेवाभ्यङ्करशास्त्रिमहोदयैः प्रभाख्य एतद्व्याख्याने चातुर्मास्ये वरुणप्रघासे कर्मणि प्रायणीयनामके दिवसे आमिक्षापात्रे यवपिष्टमयमेषमवदाय हुत्वा भाण्डलिप्तो य आमिक्षावशेषः तत्रोदयनीयनिर्वापः श्रुतः। उदयनीयश्चान्तिमो दिवसः इत्याद्युक्तम्, तत् सर्वमभित्तिचित्रायितम्। न हि वरुणप्रघासे प्रायणीयोदयनीयौ स्तः। न वा तत्रामिक्षावशेष उदयनीयनिर्वापश्रुतः। प्रायणीयोदयनीययोर्ज्योतिष्टोम एव विधानात्' अतो निर्मूलमेवेदं कथनम्।

बलीयः, तस्य दृष्टार्थत्वात्; आरादुपकारकस्य चादृष्टार्थत्वात्, दृष्टे संभवत्यदृष्टकल्पनस्यान्याय्यत्वात्। प्रोक्षणादि सन्निपत्योपकारकं तु कथं बलीयः; उभयोरदृष्टार्थत्वाविशेषात्।

किञ्च आरादुपकारकं साक्षात्प्रधानाङ्गम्, तस्यान्योद्देशेनाविधानात्। सन्निपत्योपकारकं तु अङ्गाङ्गम्। कर्माङ्गव्रीह्याद्युद्देशेन विधानात्। अङ्गाङ्गापेक्षया च साक्षादङ्गं बलीयः।

'अङ्गगुणविरोधे च तादर्थ्यात्' इति न्यायात्।

अत एव 'य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेत' इत्यविशेषविधानेऽपि पर्वानुग्रहः सोमयागस्यैव क्रियते, न तु दीक्षणीयादेः। अतः कथं सन्निपत्योपकारकस्य बलीयस्त्वम्।

उच्यते—सत्यप्यदृष्टार्थत्वाविशेषे सन्निपत्योपकारकमारादुपकारकाद्बलीयः। सन्निपत्योपकारके हि कर्मणि उपकार्योपकारकयोर्व्रीहिप्रोक्षणयोः संबन्धो वाक्यक्लृप्तः। उपकारमात्रं तु कल्प्यम्। आराादुपकारकस्थले तु

सम्भवतीति कथं सन्निपत्योपकारकत्वावच्छेदेन प्राबल्यमुक्तमिति शङ्कते—नन्विति। अवघातादीत्यादिपदेन दृष्टार्थसन्निपत्योपकारकाणां पेषणश्रपणादीनां ग्रहणम्। उभयोः प्रोक्षणादिसन्निपत्योपकारकाराादुपकारकयोः।

ननु उभयोरदृष्टार्थत्वाविशेषेऽपि द्वितीयाश्रवणात् द्रव्यप्राधान्यावगतेः तद्बलेन भवतु सन्निपत्योपकारकस्य प्राबल्यम्, अस्तु वा अदृष्टार्थत्वाविशेषादुभयोः समबलत्वमित्याशङ्क्य तदपि न सम्भवतीत्याह— किञ्चेति। अङ्गगुणेन प्रधानगुणस्य विरोधे सति प्रधानगुणानुग्रह एव न्याय्यः, तस्य प्रधानार्थत्वात् इति सूत्रार्थः। य इष्ट्येति। अत्र इष्ट्यादीन् यजिनानूद्य वैकल्पिकं कालद्वयं विधीयते। वाशब्दश्रवणाच्च न वाक्यभेदः, आत्मने वा यजमानाय वा यं कामं कामयते तमुद्गायेदितिवत्। अविशेषविधानेऽपीति। इष्टेः पशोरङ्गभूतयोः, सोमयागस्य च प्रधानभूतस्य अविशेषेण पर्वरूपकालविधान इत्यर्थः। न तु दीक्षणीयादेरिति। अयमत्र विषयः-सोमयागे प्रथमदिने कर्त्तव्या दीक्षणीयेष्टिः, चतुर्थदिने कर्त्तव्योऽग्नीषोमीयः पशुयागः। 'य इष्ट्येति' वाक्येन च विकृतीष्टिपश्वादावेव सद्यस्कालता विधीयते, न तु प्रकृतौ। तस्याः द्व्यहकालावरुद्धत्वादिति निर्णीतं पञ्चमे। एवञ्च दीक्षणीयेष्टिपश्वादेः पर्वकालेऽनुष्ठाने कृते प्रधानस्य सोमयागस्य पञ्चम्यां प्रतिपदि वा अनुष्ठानापत्तेः पर्वकालबाधः स्यात्। यदि प्रधानस्य पर्वकालानुग्रहः क्रियेत, तदा दीक्षणीयायास्ततः पूर्वमेकादश्यामनुष्ठानापत्तेः, पशोश्च चतुर्दश्यामनुष्ठानप्रसक्तेस्तयोः कालो बाध्येत। किमत्र युक्तमिति संदिह्य, प्रधानस्यैव कालानुग्रहो न्याय्यः, न त्वङ्गानाम्। अतश्चैकादश्यादौ दीक्षणीयादिकमनुष्ठाय पर्वणि सोमयागोऽनुष्ठेय इति सिद्धान्तितम्। एवं च प्रधानाङ्गभूतस्याराादुपकारकस्यैव प्राबल्ये वक्तव्ये तत्परित्यज्य अङ्गाङ्गसन्निपत्योपकारकस्य कथं प्राबल्यमुच्यत इत्याक्षेपमुपसंहरति— अत इति।

सम्बन्धः अङ्गाङ्गिभावः। वाक्यक्लृप्त इति। व्रीहिप्रोक्षणयोरेकवाक्योपादानरूपात्समभिव्याहारात्सिद्ध इत्यर्थः। कल्प्यमिति। परस्परमुपकार्योपकारकत्वाभावे एक-

(१)दर्शपूर्णमासप्रयाजयोः संबन्धः कल्प्यः, उपकारोऽपि ।

किं च आराදुपकारकस्थले हि प्रकरणं विनियोजकम्, इतरत्र तु 'व्रीहीन् प्रोक्षती' ति वाक्यमेव । व्रीहिपदेनापूर्वसाधनलक्षणां कृत्वा क्रतौ विनियोजकमिति बलीयस्त्वम् ।

(२)यदुक्तम्-'अङ्गगुणविरोधे च तादर्थ्यात्' इति न्यायेन दुर्बलत्वमिति, तदसत्; नहि व्रीह्याद्युद्देशेन विधीयमानं प्रोक्षणादि तदर्थं भवति, तत्स्वरूपे आनर्थक्यात्, किन्तु तत्संस्कारद्वारा क्रत्वर्थमेव, सन्निपत्योपकारकाणामुत्पत्त्यपूर्वप्रयुक्तत्वस्य वक्ष्यमाणत्वात् । अत उभयविधमप्यङ्गजातं क्रत्वर्थमेवेति नाङ्गगुणविरोधन्यायावतारः । दीक्षणीयादेः पर्वानुग्रहस्तु दीक्षणीयाद्यर्थ एव, तस्य तदपूर्वप्रयुक्तत्वात् । अतो युक्तं साक्षात्प्रधानाङ्गेन प्रधानपर्वानुग्रहेण स बाध्यत इति । तत्सिद्धं सन्निपत्योपकारकस्याराදुपकारकाद्बलीयस्त्वम् ।

अतएव "स्थाणौ स्थाण्वाहुतिं जुहोती" ति विहिता स्थाण्वाहुतिः यूप-

वाक्योपादानमनुपपन्नं स्यादित्येकवाक्योपादानान्यथानुपपत्त्या कल्प्यमित्यर्थः । **दर्शपूर्णमासप्रयाजादेरिति** । दर्शपूर्णमासयोः प्रयाजादीनाञ्चेत्यर्थः । **कल्प्य इति** । तयोः भिन्नस्थले पाठात् समभिव्याहाराभावेन प्रकरणपाठान्यथानुपपत्त्या परं सम्बन्धः कल्प्य इत्यर्थः । उपकारोऽपीत्यनन्तरं कल्प्य इत्यनुषज्यते । एवं च उभयकल्पनापेक्षया एककल्पनाया लघीयस्त्वेन सन्निपत्योपकारकस्यैव प्राबल्यमायातमिति भावः ।

**ननु** आराදुपकारकस्थलेऽपि उपकार्योपकारकयोरेकप्रकरणपाठरूपादधिकाराख्यप्रकरणात् सम्बन्धः क्लृप्त एव । अन्यथा **आग्नेय्या**न्यायोच्छेदापत्तेः; तत्र हि **आग्नेय्या आग्नीध्रमुपतिष्ठत'** इत्यत्र प्रकृताप्रकृतसाधारण्येन सर्वासामग्निदेवताकानामृचां ग्रहणं उत प्रकरणपठितानामाग्नेयीनामेवेति संदिह्य प्रकृतापूर्वसाधनत्वस्य प्रकृतासु क्लृप्तत्वेनोपकारस्य क्लृप्तत्वात् द्वारमात्रस्य कल्पनीयत्वात् प्राबल्यम् । अप्रकृतानां तु उपकारद्वारयोरुभयोरपि कल्प्यत्वात् दौर्बल्यमिति प्रकृतानामेव ग्रहणमित्युक्तम् । अतः कालात्ययापदिष्टोऽयं हेतुरित्यस्वरसादाह—**किञ्चेति** । **इतरत्र** सन्निपत्योपकारकस्थले । **वाक्यमेवेति** । अत्र समभिव्याहारमात्रेणाप्यङ्गत्वबोधने प्रकृतकार्यसिद्ध्या सत्या अपि द्वितीयाश्रुतेरप्रयोजकत्वमभिप्रेत्येदमुक्तमिति ध्येयम् । बलीयस्त्वमिति । सन्निपत्योपकारकस्येति शेषः ।

दृष्टान्ते प्रकृतवैषम्यं निरूपयति-**यदिति** । **तदर्थमिति** । तन्मात्रार्थमित्यर्थः । व्रीहिस्वरूपमात्रोद्देशेन विहितमिति यावत् । **क्रत्वर्थमेवेति** । यद्यप्यस्ति सन्निपत्योपकारकाराදुपकारकयोः उत्पत्त्यपूर्वप्रयुक्तत्वपरमापूर्वप्रयुक्तत्वकृतो भेदः, तथापि क्रत्वर्थत्वमुभयोरविशिष्टमित्यर्थः । **दीक्षणीयाद्यर्थ एवेति** । दीक्षणीयास्वरूपे आनर्थक्यप्रसक्तौ तजन्योत्पत्त्यपूर्वार्थत्वस्य स्थापितत्वादिति भावः ।

**प्रधानपर्वानुग्रहेण** । प्रधानभूतसोमयागसम्बन्धिनः पर्वरूपस्य कालस्य योऽनुग्रहः तेन । स दीक्षणीयापर्वानुग्रहः । **स्थाणाविति** । यूपव्रश्चनापादानभूतः काष्ठविशेषः

१. दर्शपूर्णमासयोः प्रयाजानुयाजयोः  २. यच्चोक्त०

व्रश्चनस्थाणुद्वारा यूपसंस्कारार्था, देवदत्तधारितायाः स्रजः शुचिदेशनिधानमिव देवदत्तसंस्कारार्थम्। न तु स्थाणवाहुतिरारादुपकारिकेत्युक्तं दशमे इति दिक्॥

द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म आरादुपकारकम्। यथा—

( अङ्गानामपूर्वार्थत्वनिरूपणम् )

प्रयाजादि। तदेवं निरूपितं द्विविधमप्यङ्गजातम्।

तच्च न यागादिस्वरूपप्रयुक्तम्, स्वरूपे आनर्थक्यात्, तदन्तरेणापि तत्सिद्धेः; किं त्वपूर्वप्रयुक्तमेव। नहि तदन्तरेणापूर्वं भवतीत्यत्र किंचित्प्रमाणमस्ति, तस्यादृष्टत्वात्।

न चैवं प्राधान्याददृष्टत्वाच्च फलप्रयुक्तत्वमेव किं न स्यादिति वाच्यम्।

---

स्थाणुशब्देनाभिधीयते। यूपस्य व्रश्चनं छेदनं यस्मात् वृक्षात् कृतं, स च्छेदनाधोभागावस्थितः काष्ठशेषस्स्थाणुः। तद्वारेत्यर्थः। ननु यूपच्छेदनानन्तरमेव स्थाणवाहुतेर्विहितत्वेन तदानीं यूपसम्बन्धस्यैवाभावात् कथं असम्बद्धे यूपे स्थाणवाहुतिः संस्कारं जनयेदित्याशङ्क्याह—देवदत्तेति। यथा लोके देवदत्तेन धृतायाः कृतकार्यायाः मालायाः परिशुद्धदेशे निक्षेपादिना सत्कारे कृते देवदत्तोऽभिमनुते-अनेनाहं सम्यगुपचरित इति। एवं यूपवियुक्ते कृतकार्येऽपि स्थाणौ होमे कृते यूपस्य तत्सम्बन्धित्वमात्रेण तत्र कश्चित्संस्कार उत्पद्यत इत्यर्थः। दशम इति। प्रथमषष्ठ इति शेषः।

( अङ्गानामपूर्वार्थत्वनिरूपणम् )

आरादुपकारकं निरूपयति-द्रव्यादीति। अङ्गनिरूपणार्थं यदारब्धं तानीत्यादिना तदुपसंहरति—तदेवमिति। द्विविधं सिद्धरूपं क्रियारूपं च।

तच्च द्विविधमङ्गजातं च। तदन्तरेणापि तादृशमङ्गजातमन्तरापि। तत्सिद्धेः यागादिस्वरूपसिद्धेः। दृष्टार्थसन्निपत्योपकारकस्थले यद्यपि तेनैव तत्स्वरूपनिष्पत्तिः क्रियते, यथा-अवघातपेषणादौ, तथापि तस्य फलस्य प्रकारान्तरेणापि सम्भवात् नियमवैयर्थ्यम्। अदृष्टार्थसन्निपत्योपकारकस्थले आरादुपकारकस्थले च स्वरूपजनकत्वस्याप्यभावाद्विधिवैयर्थ्यमित्याशयः। अपूर्वप्रयुक्तमिति। अपूर्वनिष्ठानुष्ठापकतानिरूपितानुष्ठाप्यतावदित्यर्थः। एवं चात्र प्रयुक्तत्वमनुष्ठाप्यत्वरूपमिति ध्येयम्। तस्य अपूर्वस्य। अदृष्टत्वादिति। लौकिकप्रमाणागम्यत्वादित्यर्थः। एवं च अङ्गानुष्ठानमन्तरा अपूर्वस्योत्पत्तौ प्रमाणाभावेन तदर्थमनुष्ठानावश्यम्भावेन नानर्थक्यापत्तिरिति भावः।

सर्वेषां प्रधानान्वयस्याभ्यर्हितत्वात् प्रधानभूतेन फलेन साकमन्वयमाशङ्कते—नचैवमिति। फलप्रयुक्तत्वमेवेति। अत्र च फलशब्देन प्रधानफलमेवाभिधीयते। एवञ्च-यथा दर्शपूर्णमासपदाभिधेयानां षण्णां यागानां स्वर्गफलसम्बन्धः सिद्धान्ते, एवमङ्गानामपि स्वर्गार्थत्वमेव भवतु, न यागीयापूर्वार्थत्वमिति शङ्कितुराशयः। भावनायाः करणाकाङ्क्षायां भावार्थाधिकरणन्यायेन समानपदश्रुत्या धात्वर्थस्यैव करणत्वेनान्वये जाते तन्मात्रस्य करणत्वं न सम्भवतीति तस्य स्वोपकारजनकपदार्थापेक्षायां सत्यामेव तत्राङ्गानामन्वयस्याभ्युपगमनीयतया तत्स्वरूपार्थत्वे पुनरानर्थक्यप्रसक्तौ तदुपस्थापिततज्जन्या-

फलभावनायां यागस्यैव करणत्वादङ्गानां च करणानुग्राहकत्वात्तदर्थत्वे(१) बुद्धे तत्र चानर्थक्यप्रसक्तौ तेन (१)स्वापूर्वमेवोपस्थाप्यते, सन्निकर्षात्। दोक्षणीयादिशब्देनेव तदपूर्वम्। न तु फलमुपस्थाप्यते, विप्रकर्षात्। अतो न तत्प्रयुक्तत्वमङ्गानाम्।

अत एव (२)'अगन्म सुवः सुवरगन्म' इति मन्त्रो विकृतावूहितव्य इत्युक्तं नवमे (३)'फलदेवतयोश्चे' त्यत्र। फलप्रयुक्तत्वं तु सौर्यादिविकृतिषु स्वर्गरूपफलाभावात् मन्त्रो न प्रवर्तेत' नतरां चोहितव्यः स्यादिति। तत्सिद्धमङ्गानामन्यप्रयुक्तत्वानुपपत्तेरपूर्वप्रयुक्तत्वम्।

तत्रापि सन्निपत्योपकारकाणां द्रव्यदेवतादिसंस्कारद्वारा यागस्वरूपे उपयोगादुत्पत्त्यपूर्वार्थत्वम्। अत एवौषधधर्माणामवघातादीनामाज्ये न प्रवृत्तिः, तेषामाग्नेयापूर्वप्रयुक्तत्वात्, आज्यस्य च तदर्थत्वाभावादित्युक्तं

---

पूर्वार्थत्वमेव भवितुमर्हति, न साक्षात् फलार्थत्वमिति समाधत्ते—**फलभावनायामिति**। **करणानुग्राहकत्वादिति**। करणनिष्ठफलजननानुकूलयोग्यताधायकत्वादित्यर्थः। तदर्थत्वे करणीभूतयागार्थत्वे। तत्र यागस्वरूपे। **आनर्थक्यप्रसक्ताविति**। देवतोद्देश्यकद्रव्यत्यागमात्रस्य यागस्यैतादृशाङ्गकलापमन्तरेणाप्युत्पद्यमानत्वेन तत्राङ्गानामुपयोगाभावादिति भावः। **स्वापूर्वमिति**। साक्षात्परम्परासाधारण्येन स्वजन्यमुत्पत्त्यपूर्वं परमापूर्वं चेत्यर्थः। एवञ्च स्वजन्यापूर्वत्वेन रूपेणापूर्वस्योपस्थितिरभ्युपगम्यते। तच्चापूर्वं सन्निपत्योपकारकस्थले उत्पत्त्यपूर्वम्, आरादुपकारकस्थले च परमापूर्वमिति विवेक्तव्यम्। **तत्प्रयुक्तत्वं** फलप्रयुक्तत्वम्।

**अतएव** फलप्रयुक्तत्वाभावादेव। **अगन्मेति**। मन्त्रोऽयं दर्शपूर्णमासप्रकरणे यजमानकाण्डे आम्नातो यजमानेन पठनीयः। वयं स्वर्गं प्राप्तवन्त इति तदर्थः। आदराथ द्विर्वचनम्। अस्य च फलप्रयुक्तत्वमुतापूर्वप्रयुक्तत्वमिति संदिह्य फलस्वरूपप्रयुक्तत्वे तादृशस्वर्गरूपफलस्य सौर्ययागेऽभावात् स्वर्गप्रकाशनरूपद्वाराभावेन अतिदेश एव न स्यात्। कः प्रसङ्ग ऊहस्य; तस्य अतिदिष्टपदार्थविषयकत्वात्। अतश्चापूर्वप्रयुक्तत्वमेव वक्तव्यम्। तदानीं च अपूर्वस्य तत्रापि सत्वात् सिद्ध्यत्यूह इत्युक्तं नवमप्रथमतृतीये। तदेतदाह—**अगन्मेत्यादिना**। **ऊहितव्य इति**। अगन्मसुव इत्यत्र सुवः इति स्थाने ब्रह्मवर्चसादिपदप्रक्षेपेण मन्त्रः पठनीयः इत्यर्थः। तदधिकरणपूर्वपक्षसूत्रमिदं **फलदेवतयोश्चेति**। फलस्य स्वर्गादेः देवताया अग्न्यादेश्च प्रयोजकत्वं स्यादिति तदर्थः।

एवमङ्गजातं द्विविधमपि निरूप्य सिद्धरूपाणामुत्पत्त्यपूर्वार्थत्वस्य सिद्धतया तत्र वक्तव्यविशेषं कञ्चिदपश्यन् क्रियारूपेषु नेष्वेकैकस्याप्यङ्गजातस्य प्रयोजनं कथयति-**तत्रापीति**। सन्निपत्योपकारकारादुपकारकाङ्गजातयोर्मध्य इत्यर्थः। द्रव्यसंस्कारकत्वं अवघातप्रोक्षणादीनाम्। देवतासंस्कारकत्वं देवतावाहनपशुपुरोडाशयागीयोद्देशांशादीनामिति विवेकः। **औषधधर्मेति**। ओषधिप्रभवव्रीह्यादिधर्मेत्यर्थः। **आग्नेयापूर्वेति**। आग्नेयजन्योत्पत्त्यपूर्वेत्यर्थः। तेषां अवघातादीनाम्। आग्नेयेत्युपलक्षणं प्रकृतपुरो-

---

१. सिद्धे. २. तेन चे यागज. ३. तै. सं. १-५-६-१. ४. जै. सू. २-१-४.

तृतीये ।

आरादुपकारकाणां तु स्वरूपेऽनुपयोगात् परमापूर्वार्थत्वम् । तत्रोत्पत्त्यपूर्वस्य यागस्वरूपानुष्ठानानन्तरमेवोत्पद्यमानत्वात् सन्निपत्योपकारकाणां पूर्वाङ्गानां तदुत्पत्तावुपयोगः, उत्तराङ्गानां तु तेषां तत्स्थितावुपयोगः । परमापूर्वस्य तु साङ्गप्रधाना(१)नुष्ठानानन्तरमेवोत्पद्यमानत्वात् सर्वेषामाराद्रुपकारकाणां तदुत्पत्तौ । प्रयोगबहिर्भूतस्य तु तस्य तत्स्थितावुपयोगः । यथा—बृहस्पतिसवस्य 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते' ति वाजपेयोत्तरकालमङ्गत्वेन विहितस्य वाजपेयापूर्वस्थितावुपयोगः । तस्य प्रागेवोत्पन्नत्वादित्युक्तं चतुर्थे । तत्सिद्धं सर्वथाङ्गानामपूर्वार्थत्वम् । प्रकृतमनुसरामः-तदेवं निरूपितः संक्षेपतो विनियोगविधिः ॥

## ( प्रयोगविधिनिरूपणम् )

प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः । स चाङ्गवाक्यैकवा-

---

डाशयागमात्रस्य । तदर्थत्वाभावात् पुरोडाशार्थत्वाभावात् । न च वाच्यमाज्यस्यापि पुरोडाशोपस्तरणाभिघारणार्थत्वात्तदर्थत्वमस्त्येवेति तत्राप्यवघातप्राप्तिर्भवेदेवेति । अत्रावघातादीनां प्रदेयतत्प्रकृतिद्रव्यसंस्कारकत्वेन विधानात् आज्यस्य प्रदेयसंस्कारोपयुक्तत्वेऽपि प्रदेयत्वस्य प्रदेयप्रकृतित्वस्य वा अभावात्, विशेषतश्चायमर्थो निरूपितस्तृतीये तेषामर्थाधिकरण इत्याह—**तृतीये इति** ।

**स्वरूपे** यागस्वरूपे । द्रव्यदेवतादिसम्बन्धमद्वारीकृत्य साक्षादेव तेषां विधानादिति भावः । **पूर्वाङ्गानामिति** । प्रधानयागानुष्ठानतः पूर्वमनुष्ठीयमानानामवघातप्रोक्षणादीनामङ्गानामित्यर्थः । **तदुत्पत्तौ** उत्पत्त्यपूर्वोत्पत्तौ । **उत्तराङ्गानां** प्रधानयागानन्तरमनुष्ठीयमानानां स्विष्टकृदिडाभक्षणादीनाम् । **तत्स्थितावित** । उत्पत्त्यपूर्वस्य पूर्वमेवोत्पन्नत्वेन तदुत्पत्तौ उपयोगासम्भवादिति भावः । **सर्वेषामिति** । पूर्वाङ्गानामुत्तराङ्गानाञ्चेत्यर्थः । **तदुपत्तौ** परमापूर्वोत्पत्तौ । सर्वेषामेवाराद्रुपकारकाणां तदुत्पत्तावेवोपयोगः ? नेत्याह—**प्रयोगबहिर्भूतस्येति** । आराद्रुपकारकस्येति शेषः । **तत्स्थितावित** । साङ्गप्रयोगपरिसमाप्तिसमनन्तरमेव तदीयपरमापूर्वस्योत्पत्त्यवश्यम्भावादिति भावः । एवं चोत्पत्त्यपूर्वमुत्पन्नमप्युत्तराङ्गाननुष्ठाने, परमापूर्वमुत्पन्नमपि प्रयोगबहिर्भूताङ्गाननुष्ठाने च विपद्यते इत्यङ्गविधानबलात् कल्पत इति हृदयम् । **वाजपेयोत्तरकालमिति** । इष्ट्वेति क्त्वाप्रत्ययेन साङ्गवाजपेयप्रयोगपरिसमाप्त्युत्तरकालिकत्वस्यैव बृहस्पतिसवे बोधनादिति भावः । **चतुर्थ इति** । तृतीयत्रयोदश इति शेषः । विनियोगविधिनिरूपणमुपसंहरति—**तदेवमिति**।

## ( प्रयोगविधिनिरूपणम् )

एवं विनियोगविधिं निरूप्य क्रमप्राप्तं प्रयोगविधिनिरूपणमारभते—**प्रयोगेति** । अत्र विनियोगप्रयोगविधिनिरूपणयोः पौर्वापर्यकारणं पूर्वमेवोपपादितम् । **प्रयोगेति** । प्र-

---

१. प्रयोगानुष्ठान

क्यतामापन्नः प्रधानविधिरेव । स हि साङ्गं प्रधानमनुष्ठापयन् विलम्बे प्रमाणाभावादविलम्बापरपर्यायं प्रयोगप्राशुभावं विधत्ते । न च विलम्बवदविलम्बेऽपि प्रमाणाभाव इति वाच्यम् । विलम्बे हि अङ्गप्रधानविध्येकवाक्यतावगततत्साहित्यानुपपत्तिः प्रसज्येत । न हि विलम्बेन क्रियमाणयोः पदार्थयोः 'सह कृत' मिति साहित्यं व्यवहरन्ति ।

नचैवं साहित्यानुपपत्त्या समानकालत्वमेव स्यात्, न त्वविलम्बः, मव्यवधानेन पूर्वोत्तरकालक्रियमाणपदार्थयोः 'अविलम्बेन कृत' मिति व्यवहारादिति वाच्यम् । अनेकपदार्थानामेकस्मिन् कालेऽनुष्ठानानुपपत्तेः । न च तावत्कर्तृसंपादनेनानुष्ठानं किं न स्यादिति वाच्यम् । "तस्यैतस्य यज्ञक्रतोश्चत्वार ऋत्विज" इत्यादिना कर्तॄणां नियतत्वात् ।

तस्मादङ्गवाक्यैकवाक्यतामापन्नः प्रधानविधिः एकवाक्यतावगततत्साहित्यं विदधत् उक्तविधया एककालानुष्ठानानुपपत्तेरविलम्बं विधत्ते इति सिद्धं प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिरिति ।

---

योगः अनुष्ठानं तस्य प्राशुभावः शैघ्र्यं असम्बन्धिपदार्थाव्यवधानरूपं तद्बोधको विधिरित्यर्थः । कोऽसौ प्रयोगविधिः ? अत आह–स चेति । प्रधानविधिरेवेति । फलसम्बन्धबोधकः यः प्रधानविधिः अधिकारविध्यपरपर्यायः स एवेत्यर्थः । अनेन प्रधानोत्पत्तिविधीनां अङ्गोत्पत्तिविधीनां वा नानुष्ठापकत्वमिति सूचितम् । विधेः प्राशुभावबोधकत्वमुपपादयति–स हीति । अङ्गानां प्रधानानां च एकेनैव प्रयोगविधिना विधानस्य, एकविधिविहितानामसति बाधके युगपदनुष्ठेयत्वरूपसाहित्यविवक्षायाश्च एकादशे वक्ष्यमाणत्वात् तस्यानुपपत्तिः प्रसज्येतेति भावः । विलम्बे हीति । स्वीक्रियमाण इति शेषः । यद्यपि विलम्बनिषेधकं प्रातिस्विकं प्रमाणं नास्ति, तथापि प्रयोगविध्यवगतसाहित्यबलादेव तद्बाधनमिति भावः ।

ननु प्रधानविधिना साहित्यस्यैव बोधनात् तस्य च एकक्षणवृत्तित्वरूपत्वात् अङ्गप्रधानयोरेकक्षणानुष्ठेयत्वमेवावगम्यत इति कथं विलम्बप्राप्तिरिति शङ्कते–न चैवमिति । समानकालत्वं एकक्षणानुष्ठानम्, स्यात् सिध्येत् । अनेकपदार्थेति । सर्वेषां पदार्थानां एकक्षणानुष्ठानासम्भवात् बाधितं सत् साहित्यमविलम्बानुष्ठाने पर्यवस्यतीति भावः । तावत्कर्तृसंपादनेनेति । अत्र कर्तृपदं क्रयक्रीतर्त्विग्परम् । इदञ्च सम्भवदङ्गाभिप्रायम् । अवघातपेषणादीनां पूर्वापरकालभाविनां तावत्कर्तृसम्पादनेनापि युगपदनुष्ठानासम्भवात् । यज्ञक्रतोरिति । क्रतुशब्दो मानसोपासनेऽपि वर्तते । स क्रतुं कुर्वीत, मनोमयः प्राणशरीरः इत्यत्र क्रतुशब्देन ध्यानविधानात् । तद्व्यावृत्तये यज्ञक्रतोरिति इति माधवः । कर्तॄणां ऋत्विग्रूपाणाम् ।

तस्मात् उक्तप्रमाणेनोक्तयुक्त्या च । अङ्गवाक्यैकवाक्यतामापन्न इति । समिधो यजति, आज्यभागौ यजति, इत्यादिभिरङ्गविधायकवाक्यैः या एकवाक्यता समिदादिभिरुपकृताभ्यां दर्शपूर्णमासाभ्यां स्वर्गं भावयेत् इत्याकारिका तामापन्न इत्यर्थः ।

स चायमविलम्बो नियते क्रमे आश्रीयमाणे भवति। अन्यथा हि किमेतदन (१) न्तरं कर्तव्यंतदनन्तरं वेति प्रयोगविक्षेपापत्तेः। अतः प्रयोगविधिरेव स्वविधेयप्रयोगप्राशुभावसिद्ध्यर्थं नियतं क्रममपि पदार्थविशेषणतया विधत्ते।

( क्रमलक्षणम् )

तत्र क्रमो नाम विततिविशेषः पौर्वापर्यरूपो वा। तत्र च षट् प्रमाणानि-श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्याख्यानि।

( श्रुतिनिरूपणम् )

तत्र क्रमपरवचनं श्रुतिः। तच्च द्विविधं-केवलक्रमपरं, तद्विशिष्टपदार्थपरं चेति। तत्र 'वेदं कृत्वा वेदिं करोती'ति केवलक्रमपरम्; वेदिकरणादेर्वचनान्तरेण विहितत्वात्। 'वषट्कर्तुः प्रथमभक्ष' इति तु क्रमविशिष्टपदार्थपरम्।

---

भवति सिध्यति। प्रयोगविक्षेपापत्तेरिति। स्वकपोलकल्पितया कयाचिद्रीत्याऽनुष्ठाने कृते केषांचित् द्विरनुष्ठानं केषांचिदनुष्ठानाभाव इति वैकल्यापत्तेरित्यर्थः। ननु सत्यामपि क्रमापेक्षायां तद्बोधकशास्त्राभावात् कथं तस्य प्राप्तिः? अत आह—प्रयोगविधिरेवेति। ननु क्रमस्य पदार्थत्वाभावात् कथं विधेयत्वम्? अत आह—पदार्थविशेषणतयेति। यद्यपि स्वातन्त्र्येण न विधातुं शक्यते, तथापि कालादिवत्पदार्थविशेषणतया तस्य सम्भवत्येव विधिरिति भावः।

विततिविशेष इति। तत्तत्पदार्थानन्तरं तत्तत्पदार्थाः कर्त्तव्या इत्यनेकपदार्थवृत्तिपौर्वापर्यसमुदाय इत्यर्थः। यत्किञ्चित्पदार्थप्रतियोगिकयत्किञ्चित्पदार्थानुयोगिकाऽव्यवहितोत्तरत्वरूपानन्तर्यस्य क्त्वादिशब्दाभिधेयस्य लघुभूतस्य उत्तरपदार्थोपस्थापकत्वेन दृष्टार्थस्य क्रमत्वे सम्भवति गुरुभूतस्य तावत्पदार्थनिष्ठस्याशाब्दस्य विततिविशेषस्य क्रमत्वाङ्गीकरणं न युक्तिसहमित्याशयवानाह—पौर्वापर्यरूपो वेति। क्त्वाततःशब्दबलात् पूर्वापरत्वेन प्रतीयमानयोः पदार्थयोः नैरन्तर्यमित्यर्थः। यथाश्रुते मध्ये केषांचित् पदार्थानामनुष्ठानेऽपि पौर्वापर्याबाधात् प्राशुभावभङ्गापत्तेः। वस्तुतस्तु एकपदार्थप्रतियोगिकापरपदार्थानुयोगिक आनन्तर्यविशेष एव क्रमपदार्थः। तस्यैव च उत्तरपदार्थाङ्गत्वम्। तस्य च उत्तरपदार्थस्मारकत्वेन दृष्टार्थताऽपि। एवञ्च वषट्कर्तुः प्रथमभक्ष इत्यत्र प्राथम्यस्य क्रमत्वं भाक्तमिति ध्येयम्।

तत्र षण्णां प्रमाणानां मध्ये। क्रमबोधिकायाः श्रुतेः लक्षणमाह—क्रमपरवचनमिति। क्रमपरत्वं च वृत्त्या क्रमबोधकत्वं द्रष्टव्यम्। तेन क्त्वाप्रत्ययादीनामपि क्रमलक्षकाणां सङ्ग्रहः। तच्च क्रमपरवचनं च। आद्यमुदाहरति-वेदमिति। कथं तस्य केवलक्रमपरत्वम्? अत आह—वेदिकरणादेरिति। आदिपदेन आख्यातोपात्तकर्तृसंख्ययोः परिग्रहः। द्वितीयमुदाहरति—वषट्कर्तुरिति। 'याज्याया अधि वषट्करोति' इत्यादिना याज्योत्तरं पठनीयत्वेन यो विहितो वषट्कारस्तत्पठितुर्होत्रादेरित्यर्थः। नन्वत्र

---

१. एतदनन्तरमेतत्कर्तव्यमेतदनन्तरं वा

एकप्रसरताभङ्गभयेन भक्षानुवादेन क्रममात्रस्य विधातुमशक्यत्वात् ।

( श्रुतिप्राबल्यनिरूपणम् )

सेयं श्रुतिरितरप्रमाणापेक्षया बलवती । तेषां वचनकल्पनद्वारा क्रमप्रमाणत्वात् । अत एवाश्विनस्य पाठक्रमात्तृतीयस्थाने ग्रहणप्रसक्तौ 'आश्विनो दशमो गृह्यते' इति वचनाद्दशमस्थाने ग्रहणमित्युक्तम् ॥

( अर्थक्रमनिरूपणम् )

यत्र प्रयोजनवशेनार्थनिर्णयः स आर्थः क्रमः । यथाऽग्निहोत्रहोमयवागूपाकयोः । अत्र हि यवाग्वा होमार्थत्वेन तत्पाकः प्रयोजनवशेन पूर्वमनुष्ठीयते।

---

भक्षानुवादेन क्रममात्रविधानमस्तु किं विशिष्टविधिनेत्यत आह—**एकप्रसरतेति** । **एकप्रसरता** सम्भूय विशिष्टार्थप्रतिपादकत्वं, तस्या भङ्ग इत्यर्थः । पदस्य ह्येकदा एक एव व्यापारः उद्देश्यत्वेन विधेयत्वेन वा विशिष्टस्य शुद्धस्य वा स्वार्थस्य समर्पणम् । न द्वयमप्येकदैकस्य । तदिदानीं भज्येत । किञ्च अत्र भक्षानुवादेन प्राथम्यविधौ भक्षस्योद्देश्यत्वेन तस्य विधेयप्राथम्यान्वयात् पूर्वं उद्देश्यत्वेन क्रियान्वयोऽभ्युपगन्तव्यः, अतश्च क्रियान्वयात् पूर्वं भक्षप्राथम्ययोः विशेषणविशेष्यभावानवगमात् एकार्थीभावलक्षणसामर्थ्याभावात् समासो न स्यात्, अस्ति तु सः । अतश्च समासबलादुभयोस्सम्भूयैकार्थप्रतिपादकत्वं वक्तव्यम् । ततश्च विशिष्टविधान एव पर्यवस्यतीति भावः ।

( श्रुतिप्राबल्यनिरूपणम् ) ।

एवं श्रुतिं निरूप्य तद्गतं क्रमबोधकेतरप्रमाणापेक्षया प्राबल्यं निरूपयति—**सेयमिति** । **इतरप्रमाणापेक्षयेति** । क्रमबोधकार्थादिप्रमाणापेक्षयेत्यर्थः । तत्र कारणमाह—**वचनकल्पनद्वारेति** । पाठादिस्थलेषु न प्रत्यक्षवचनमस्ति, येन क्रमो विधीयेत । पौर्वापर्यरूपेण पाठान्यथानुपपत्त्या तु 'एतदनन्तरमेतत्कर्त्तव्य' मिति कल्पनीयं क्रमबोधकं वचनम् । यावच्च तैः कल्पयितुमारभ्यते ततः पूर्वमेव प्रत्यक्षेण क्लृप्तेन वचनेन क्रमे बोधिते न तेषां प्रवृत्तिरिति दौर्बल्यं तेषामिति भावः । **अत एव** इतरापेक्षया प्राबल्यादेव । **आश्विनस्येति** । अश्विदेवताकस्य ग्रहस्येत्यर्थः । **पाठक्रमादिति** । **'ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णाति, आश्विनं गृह्णाति'** इति धाराग्रहेषु तृतीयस्थाने आश्विनग्रहविधायकवाक्यस्य पाठादिति भावः । यद्यप्यत्र प्रथमतः श्रुत्यर्थयोः प्राबल्यदौर्बल्यनिरूपणमेव कर्तुमुचितं तथापि यथाश्रुत्येव प्रयोजनस्य कल्पनीयत्वेन तयोर्विरोधस्यैवासम्भवात् तत्परित्यज्य श्रुतिपाठयोः प्राबल्यदौर्बल्योदाहरणमुक्तमिति वेदितव्यम् । **यथा ह्युक्तम्—**

**श्रुत्यर्थयोर्विरोधस्तु नैवं वचनसम्भवे ।**
**यथाश्रुत्येव हि न्याय्यमर्थस्य परिकल्पनम्** ॥ इति । **इत्युक्तमिति** पञ्चमचतुर्थप्रथम इति शेषः ।

( अर्थक्रमनिरूपणम् )

अर्थक्रमं लक्षयति—**यत्र स्विति** । **होमार्थत्वेनेति** । **यवाग्वाग्निहोत्रं जुहो**

स चायं पाठक्रमाद्बलवान्। यथापाठं ह्यनुष्ठाने क्लृप्तप्रयोजनबाधोऽदृष्टार्थत्वं च स्यात्। न हि होमानन्तरं क्रियमाणस्य किंचित् दृष्टं प्रयोजनमस्ति॥

(पाठक्रमनिरूपणम्)

पदार्थबोधकवाक्यानां यः क्रमः स पाठक्रमः। तस्माच्च पदार्थानां क्रम आश्रीयते। येन हि क्रमेण वाक्यानि पठितानि तनैव क्रमेणाधीतान्यर्थप्रत्ययं जनयन्ति। यथार्थप्रत्ययं च पदार्थानामनुष्ठानात्।

स च पाठो द्विविधः—मन्त्रपाठो ब्राह्मणपाठश्चेति। तत्राग्नेयाग्नीषोमीययोस्तत्तद्याज्यानुवाक्याक्रमात् यः क्रम आश्रीयते स मन्त्रपाठात्।

स चायं मन्त्रपाठो ब्राह्मणपाठाद्बलवान्; अनुष्ठाने ब्राह्मणवाक्यापेक्षया

---

तीति वाक्येन अग्निहोत्रहोमोद्देशेन यवाग्वा विधानादिति भावः। **प्रयोजनवशेन** होमनिष्पत्तिप्रयोजनसिध्यर्थम्। यद्यपि पाकस्य यवागूत्पत्तिरूपं दृष्टं प्रयोजनं सम्भवति, श्रुते च 'यवागूं पचती'ति द्वितीयया पाकस्य यवाग्वर्थत्वमेव, तथापि अनुपयुक्ताया यवाग्वाः पाकप्रयोजनस्यैवानुपपत्तेः होमापूर्वीययवागूप्रयोजनकत्वमेव पाकस्य वक्तव्यमिति तदर्थत्वाभावे प्रयोजनबाधोऽस्त्येवेति हृदयम्।

(पाठक्रमनिरूपणम्)

पाठक्रमं निरूपयति-**पदार्थेति**। पदार्थाः (अनुष्ठेयानि) तत्सम्बन्धीनि वा अङ्गानि तद्विधायकानां ज्ञापकानां वा वाक्यानां यः आनुपूर्वीरूपेण यत् पठनं, स इत्यर्थः। **तस्मात् पाठक्रमात्**। वाक्यपाठक्रमानुरोधेन पदार्थानां क्रमाश्रयणे हेतुमाह—**येन हीति**। यादृशानुपूर्वीको ग्रन्थस्तादृशानुपूर्वीविशिष्टस्यैवाध्ययनम्। यथाध्ययनं चार्थज्ञानम्। यथार्थज्ञानमनुष्ठानमिति अनुष्ठाने पाठक्रमो नियामक इति। **अर्थप्रत्ययं जनयन्तीति**। **अर्थप्रत्ययं** अर्थविषयकनिश्चयम्। लोके स्नायात्, भुञ्जीत, व्रजेत् इत्यादौ पाठानुसारेणैव अनुष्ठानप्रतिपत्तेः इहापि तथैव भवितुमुचितमिति भावः।

पाठं विभजते—**स चेति**। आद्यमुदाहरति-**तत्रेति**। **अत्रायं विषयः**—दर्शपूर्णमासप्रकरणे मन्त्रकाण्डे प्रयाजाज्यभागादिमन्त्रपाठानन्तरं(१) **'अग्निर्मूर्द्धा' 'भुवो यज्ञस्य'** इत्याग्नेययाज्यानुवाक्याद्वयमाम्नातम्। ततः उपांशुयाजमन्त्राम्नानानन्तरं (२)**अग्नीषोमा सवेदसा; 'युवमेतानि'** इत्यग्नीषोमीययाज्यानुवाक्याद्वयमाम्नातम्। तत्र ब्राह्मणवाक्ययोरन्यादृशत्वेऽपि मन्त्रपाठमनुसृत्यैव **प्रथममाग्नेयानुष्ठानम्, ततः अग्नीषोमीयानुष्ठानमिति**।

मन्त्रपाठस्येतरापेक्षया प्राबल्यमाह—**स चेति**। **न व्याप्रियत इति**। तावतैव

---

१. अग्निमूर्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वति। इति पुरोनुवाक्या॥ (तै. ब्रा. ३. ५. १०. १.) भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिस्सचसे शिवाभिः। दिवि मूर्धानं दधिषे सुवर्षां जिह्वामग्ने चकृषे हव्यवाहम्. इति याज्या। इति।

२. अग्नीषोमा सवेदसा सहूती वनतंगिरः। सं देवत्रा बभूवथुः। इति पुरोनुवाक्या। युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम्। युवँसिन्धूँरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीतान्। इति याज्या॥

**मन्त्रवाक्यस्यान्तरङ्गत्वात् । ब्राह्मणवाक्यं हि प्रयोगाद्बहिरेव 'इदमेवं कर्तव्य' मित्येवमवबोध्य कृतार्थमिति न पुनः प्रयोगकाले व्याप्रियते । मन्त्राः पुनरनन्यप्रयोजनाः प्रयोगसमवेतार्थस्मारका इति वक्ष्यामः । तेनानुष्ठानक्रमस्य स्मरणक्रमाधीनत्वात् तत्क्रमस्य च मन्त्रक्रमाधीनत्वादन्तरङ्गो मन्त्रपाठ इतरस्मादिति बलवान् । अत एवाग्नेयाग्नीषोमीययोर्ब्राह्मणपाठादादावग्नीषोमीयानुष्ठानं, पश्चादाग्नेयानुष्ठानमित्येवं क्रमं बाधित्वा मन्त्रपाठादादावाग्नेयानुष्ठानं, पश्चादग्नीषोमीयस्येत्येव क्रम इत्युक्तम् ॥**

**प्रयाजानां (१)"समिधो यजति' तनूनपातं यजति' इत्येवं विधायकवाक्यक्रमात् यः क्रमः स ब्राह्मणपाठक्रमः । अत्र च यद्यपि ब्राह्मणवाक्यान्यर्थं विधाय कृतार्थानि तथापि प्रयाजानां स्मारकान्तरस्याभावात् तान्येव स्मारकत्वेन स्वीक्रियन्ते । तथा च येन क्रमेण तान्यधीतानि तेनैव क्रमेणार्थस्मरणं**

---

तस्य शान्ताकांक्षत्वादिति भावः । मन्त्राणामस्तु प्रयोगसमवेतार्थस्मारकत्वम् । तावता प्रकृते किमायातम् ? अत आह—**तेनेति । स्मरणक्रमाधीनत्वादिति ।** अज्ञातस्यास्मृतस्य वा अनुष्ठानासम्भवादिति भावः । **तत्क्रमस्य** स्मरणक्रमस्य । **मन्त्रक्रमाधीनत्वादिति** । एवञ्च मन्त्रपाठक्रमानुरोधेन स्मरणम्, स्मरणानुरोधेनानुष्ठानमिति मन्त्रपाठस्यानुष्ठानौपयिकत्वात् तदनौपयिकात् ब्राह्मणपाठात् तस्य प्राबल्यमनुष्ठानविषये इत्याशयवानाह—**अन्तरङ्गो मन्त्रपाठ इत्यादि** । तत्रोदाहरणमाह—**आग्नेयेति** । तैत्तिरीयसंहितायां द्वितीयकाण्डे पञ्चमप्रपाठके द्वितीयेऽनुवाके **"ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्"** इत्यनेनाग्नीषोमीययागो विहितः । तत्रैव षष्ठप्रपाठके तृतीयानुवाके **"यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति"** इत्याग्नेययागो विहितः । एवञ्च ब्राह्मणपाठक्रमादादावग्नीषोमीयानुष्ठानं पश्चादाग्नेयानुष्ठानञ्च प्राप्तम्, तद्बाधित्वा मन्त्रपाठक्रमेणैव क्रम आश्रीयत इति ।

ब्राह्मणपाठक्रममुदाहरति—**प्रयाजानामिति । समिधो यजतीति** । अत्र समित्पदं तत्प्रख्यन्यायेन कर्मनामधेयम् । समिन्नामकेन यागेन क्रतूपकारं भावयेदिति वाक्यार्थः । अनेन वाक्येनैकमेव कर्म विधीयते । बहुवचनं तु 'समिधो अग्न आज्यस्य व्यन्तु' इति मन्त्रवर्णे समिद्देवतागतत्वेन बहुत्वस्य प्राप्तत्वात् बहुत्वसंख्याविशिष्टयागविधौ च गौरवापत्तेः स्वाश्रयदेवतयागवृत्तित्वसम्बन्धेन एकत्वलक्षणार्थमिति ध्येयम् । एवं तनूनपातादिवाक्येष्वपि द्रष्टव्यम् । **ननु** ब्राह्मणवाक्यानां प्रयोगाद्बहिरेव अर्थविधायकत्वेन चारितार्थ्यस्य पूर्वमुक्तत्वात् तेषां प्रयोगकालसम्बन्धस्यैवाभावात् कथं तेषां तत्सम्बन्धिक्रमबोधकत्वमित्याशङ्क्य परिहरति—**अत्र च यद्यपीति । स्मारकान्तरस्याभावादिति ।** एवञ्च यत्र कर्माङ्गभूतो मन्त्रः समस्ति तत्र मन्त्रपाठक्रमादेव क्रमः, यत्र स नास्ति, तत्र ब्राह्मणपाठस्याप्यगत्या क्रमबोधकत्वमङ्गीकरणीयमिति भावः ।

**ननु तैत्तिरीयशाखायां "समिधो अग्न आज्यस्य व्यन्तु" "तनूनपादग्न आज्यस्य वेतु"** इत्यादीनां प्रयाजयाज्यामन्त्राणां पाठात् तेषां च प्रयोगकाले व्यापृ-

---

१. तै. स. २. १. १. १.

जनयन्तीति युक्तं तेनैव क्रमेण तेषामनुष्ठानमिति। तत्सिद्धं प्रयाजानां ब्राह्मणपाठक्रमात् क्रम इति।

ननु—प्रयाजेषु प्रयोगसमवेतार्थस्मारकत्वं विधायकत्वेन कृतार्थानां ब्राह्मणवाक्यानां किमिति स्वीक्रियते, प्रयोगसमवेतार्थस्मारकाणां याज्यामन्त्राणामाग्नेयादिष्विवात्रापि सत्त्वात्। न च तेषां देवतास्मारकत्वात् कर्मस्मारकत्वेन ब्राह्मणवाक्यं स्वीक्रियते इति वाच्यम्। आग्नेयादिष्वपि कर्मस्मारकत्वेन तत्स्वीकारापत्तेः।

न चेष्टापत्तिः। तथा सति ब्राह्मणपाठान्मन्त्रपाठस्य बलीयस्त्वं न स्यात्। तद्बलीयस्त्वे हि मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वमितरस्य तदस्मारकत्वं हेतुः। यदि च कर्मस्मारकत्वं ब्राह्मणवाक्यस्य स्वीक्रियते तदा प्रधानकर्मस्मारकत्वेन ब्राह्मणवाक्यस्यान्तरङ्गत्वात् अङ्गभूतदेवतास्मारकत्वेन च मन्त्राणां बहिरङ्गत्वात् मन्त्रपाठाद्ब्राह्मणपाठस्यैव बलीयस्त्वं स्यात्। तथा च (१)'मन्त्रतस्तु विरोधे स्यात्' इति पाञ्चमिकाधिकरणविरोधः। तत्र हि ब्राह्मणपाठान्मन्त्रपाठस्य बलीयस्त्वादादावाग्नेयानुष्ठानं पश्चादग्नीषोमीयस्येत्युक्तम्।

अथ—आग्नेयादिषु याज्यामन्त्रा एव देवताप्रकाशनद्वारा कर्मप्रकाशकाः त्यज्यमानद्रव्योद्देश्यत्वरूपत्वाद्देवतात्वस्येति--चेत्, तुल्यं प्रयाजेषु, तत्रापि हि याज्यामन्त्रा देवताप्रकाशकाः। प्रयाजेषु देवताया मान्त्रवर्णिकत्वात्।

---

तिसम्भवेनान्तरङ्गत्वात् तेषामेव क्रमबोधकत्वौचित्यात् कथं तान् परित्यज्य ब्राह्मणवाक्यानां क्रमबोधकत्वमङ्गीक्रियते इत्याशङ्कामिष्टापत्त्या परिहरिष्यन्, भाष्यादौ प्रयाजोदाहरणस्य च क्त्वाचिन्तात्वमाविर्भावयिष्यन् प्रथमतः शङ्कामारचयति-**नन्वित्यादिना**। **तेषां** प्रयाजीययाज्यामन्त्राणाम्। **तत्स्वीकारापत्तेः** ब्राह्मणवाक्यस्वीकारापत्तेः। **इतरस्य** ब्राह्मणवाक्यस्य। **ननु**—ब्राह्मणवाक्यानां कर्मस्मारकत्वेऽपि मन्त्राणां कर्मसम्बन्धिदेवतास्मारकत्वेन प्रयोगसमवेतार्थस्मारकत्वानपायादुभयोरपि प्रयोगसमवेतत्वाविशेषात् कथं मन्त्रपाठापेक्षया ब्राह्मणपाठस्य प्राबल्यं भवितुमर्हति इत्यत आह—**यदि चेति**। **अङ्गभूतदेवतेति**। प्रधानभूतयागाद्युद्देशेनैव द्रव्यदेवतयोर्विधानात् कर्मणः प्राधान्यम्, द्रव्यदेवतयोरङ्गत्वम्। तत्रापि द्रव्यापेक्षया देवताया अङ्गत्वमित्याद्यष्टमे विस्तरः। एवञ्च प्रयोगसमवेतार्थस्मारकत्वाविशेषेऽपि प्रधानस्मारकत्वेनान्तरङ्गत्वात् प्राबल्यम्, अङ्गस्मारकत्वेन बहिरङ्गत्वाद्दौर्बल्यमिति युक्तमेवेति भावः। मन्त्रपाठापेक्षया ब्राह्मणपाठस्य बलीयस्त्वे दोषमाह—**तथा चेति**। "**मन्त्रतस्तु विरोधे स्यात् प्रयोगरूपसामर्थ्यात् तस्मादुत्पत्तिदेशः सः**" इति **सूत्रम्**। **अस्यार्थः-विरोधे** मन्त्रब्राह्मणक्रमयोर्विरोधे मन्त्रपाठक्रमादेव पदार्थानुष्ठानक्रमः **स्यात्**, **प्रयोगरूपसामर्थ्यात्** मन्त्रस्य प्रयोज्यपदार्थस्मारणे सामर्थ्यात् **तस्मात् सः** ब्राह्मणपाठः **उत्पत्तिदेशः** कर्मोत्पत्तिमात्रबोधकः, न प्रयोगकाले व्याप्नोतीति। **पश्चादग्नीषोमीयस्येति**। एतच्च निरूपितमधस्तात्। **अभ्यादृशत्वात्** विपरीतक्रमत्वात्। **तस्यैव** मन्त्रपाठबोधितस्यैव।

---

१. जै.सू. ५. १. १६.

तथा च प्रयाजेषु याज्यामन्त्राणां देवताप्रकाशनद्वारा कर्मप्रकाशकत्वात् तत्क्रमो मन्त्रपाठादेव स्यात्, न तु ब्राह्मणपाठक्रमात्।

न च मन्त्रपाठस्यान्यादृशत्वात् प्रयाजक्रमो ब्राह्मणपाठक्रमादेवेति वाच्यम्। अन्यादृशत्वे तस्यैव क्रमस्यानुष्ठानं स्यात्, मन्त्रक्रमस्य बलीयस्त्वात्।

(१) अभ्यासाधिकरणे च वार्तिककृता 'क्रमविनियुक्तैर्वलिङ्गकमन्त्रवर्णैः' इत्यादिना प्रयाजेषु याज्यामन्त्राणां क्रमविनियोग उक्तः। (२) नवमेऽपि तन्त्ररत्ने 'समिधः समिधोऽग्न आज्यस्य व्यन्त्वि' त्यादिभिः क्रमप्रकरणप्राप्तैर्मन्त्रैर्देवताः गुणत्वेन समर्प्यन्त इत्युक्तम्। मन्त्राणामन्यादृशक्रमत्वे तदनुपपत्तिः स्यात्। तत्कथं प्रयाजेषु ब्राह्मणपाठक्रमात् क्रम इति चेत्—

उच्यते—सत्यमेतत्। तथापि यत्रार्थस्मारका मन्त्रा न सन्त्येव, यथा तूष्णीं विहितेषु कर्मसु—तेषां क्रमो ब्राह्मणपाठक्रमात्। तत्र तेषामेव प्रयोगसमवेतार्थस्मारकत्वा(३)त्। प्रयाजोदाहरणं तु कृत्वाचिन्तया, तत्र ब्राह्मणवाक्यानां प्रयोगसमवेतार्थस्मारकत्वाभावात्। यथाहुरर्थवादचरणे वार्तिककाराः (४) 'प्रयाजादिवाक्यान्यर्थं समर्प्य चरितार्थानि स्वरूपसंस्पर्शे सत्यपि प्रयोज्यतां न प्रतिपद्यन्ते' इति।

तस्मात्समन्त्रककर्मणां मन्त्रपाठक्रमात् क्रमः। अमन्त्रककर्मणां क्रमस्तु ब्राह्मणपाठक्रमादेवेति दिक्॥

---

**अभ्यासाधिकरण इति।** समिधो यजति, तनूनपातं यजतीत्यादीनां अभ्यासात् अनन्यपरविधिपुनःश्रवणरूपात् यत्र कर्मभेदो निरूप्यते द्वितीयद्वितीयद्वितीये तत्रेत्यर्थः। **क्रमविनियुक्तेत्यादि।** यथासंख्यपाठरूपस्थानप्रमाणेन विनियुक्ता ये एवंलिङ्गकाः समिदादिलिङ्गका मन्त्रवर्णाः तैर्देवतायाः समर्पणात् समिदादिपदानां तत्प्रख्यन्यायेन नामधेयत्वमिति प्रघट्टकार्थः। एवं च प्रयाजेषु मन्त्राभावकथनं न मनो रञ्जयतीति भावः। गमकान्तरमप्याह—**नवमेऽपीति। तदनुपपत्तिरिति।** अन्यादृशक्रमत्वे तदनुसारेणैव अनुष्ठानप्रसक्त्या तथैव देवताप्राप्तिसम्भवेन तद्विपरीतक्रमकब्राह्मणपाठानुसारेण देवताप्राप्त्यसम्भवात्तामादाय तत्प्रख्यन्यायेन नामधेयत्वकथनं वार्त्तिककारीयं क्रमेण देवतासमर्पणकथनं च तन्त्ररत्नकारीयमनुपपन्नं भवेदित्यर्थः।

एवमाक्षिप्य समाधत्ते-**सत्यमिति। तेषामेवेति।** स्मरणपूर्वकानुष्ठानस्यैव विहितत्वेन स्मृतेरवश्यप्राप्तत्वात्। ध्यानाद्युपायान्तरापेक्षया ब्राह्मणवाक्यानामन्तरङ्गत्वादिति भावः। तर्हि किमर्थं प्रयाजोदाहरणम्? अत आह-**कृत्वाचिन्तयेति।** प्रयाजेषु मन्त्राभावं कृत्वा चिन्तयेदमुदाहरणमित्यर्थः। प्रयाजेषु ब्राह्मणवाक्यानां प्रयोगसमवेतार्थस्मारकत्वाभावे वार्तिकं प्रमाणयति—**यथाहुरित्यादिना। अर्थवादचरण इति।** मन्त्राधिकरणपूर्वपक्ष इति शेषः। **प्रयाजादिवाक्यानीति। अस्यार्थः**-प्रयाजानूयाजादिविधिवाक्यानि प्रयाजादीननुष्ठेयपदार्थान् विधाय तावतैव कृतार्थानि क्रतुप्रकरणाभ्यां तत्स्वरूपस्य संस्पर्शे सत्यपि प्रयोगकालोच्चार्यमाणस्वरूपमनुष्ठेयत्वं न लभन्त इति। एवञ्च प्र-

---

१. पू. मी. २. २. २. तं. वा. पृ. ४५७. २ नवमे तन्त्र० ३ ०कत्वम्. ४. तं. वा. पृ. ५१.

( स्थानक्रमनिरूपणम् )

प्रकृतौ नानादे (१) शानां पदार्थानां विकृतौ वचनादेकस्मिन् देशेऽनुष्ठाने कर्तव्ये यस्य देशेऽनुष्ठीयन्ते तस्य प्रथममनुष्ठानमितरयोस्तु पश्चात्-(२) अयं यः क्रमः स स्थानक्रमः।

स्थानं नामोपस्थितिः। यस्य हि देशेऽनुष्ठीयते तत्पूर्वतने पदार्थे कृते स एव प्रथममुपस्थितो भवतीति युक्तं तस्य प्रथममनुष्ठानम्। अत एव साद्यस्क्रे अग्नीषोमीयसवनीयानुबन्ध्यानां सवनीयदेशे सहानुष्ठाने कर्तव्ये आदौ सवनीयपशोरनुष्ठानम्; तस्मिन्देशे आश्विनग्रहणानन्तरं सवनीयस्यैव प्रथममुपस्थितेः; इतरयोस्तु पश्चात्।

तथा हि-ज्योतिष्टोमे त्रयः पशुयागाः--अग्नीषोमीयः, सवनीयः, आनुबन्ध्यश्चेति। ते च भिन्नदेशाः। अग्नीषोमीय औपवसथ्येऽह्नि, सवनीयः सुत्याकाले, आनुबन्ध्यस्त्वन्ते। साद्यस्क्रो नाम सोमयागविशेषः। स चाव्यक्तत्वात् ज्योतिष्टोमविकारः। अतस्ते त्रयोऽपि पशुयागाः साद्यस्क्रे चोदकप्राप्ताः। तेषां च (३) तत्र साहित्यं श्रुतं—'सह पशूनालभेत' इति। तच्च साहित्यं सवनीयदेशे; तस्य प्रधानप्रत्यासत्तेः, स्थानातिक्रमसाम्याच्च। सवनीयदेशे ह्यनुष्ठाने क्रियमाणे अग्नीषोमीयानुबन्ध्ययोः स्वस्वस्थानातिक्रममात्रं भवति, अग्नीषोमीयदेशे ह्यनुष्ठाने क्रियमाणे सवनीयस्य स्वस्थानातिक्रममात्रम्, आनुबन्ध्यस्य तु स्वस्थानातिक्रमः सवनीयस्थानातिक्रमश्च स्यात्। एवमानुबन्ध्यदेशेऽग्नीषोमीयस्य द्रष्टव्यः।

---

योगकालोच्चरणाभावेन तत्कालिकस्मरणजनकत्वं तेषां दूरापेतमिति भावः।

( स्थानक्रमनिरूपणम् )

क्रमप्राप्तं स्थानक्रममुदाहरति-प्रकृताविति। नानादेशानामिति। बहुव्रीहिरयम्। अज्ञातावोधकस्थानव्यावृत्तमत्र स्थानपदार्थमाह-स्थानं नामेति। युक्तमिति। उपस्थित्यधीनत्वादनुष्ठानस्येति भावः। उक्तमर्थं क्वचित् सङ्गमयति-साद्यस्क्र इति। साद्यस्कः एकदिनानुष्ठेयः सद्यःसोमक्रयविशिष्टः सोमयागविशेषः। आनुबन्ध्यानामिति। पशुयागानामिति शेषः।

सवनरूपसोमयागसम्बन्धित्वात्सवनीयः। ते पशुयागाः। भिन्नदेशा इति। भिन्नकालानुष्ठेया इत्यर्थः। तदेवोपपादयति—अग्नीषोमीय इति। अन्ते अवभृथानन्तरम्। ज्योतिष्टोमविकार इति। अग्निष्टोमसंस्थाकज्योतिष्टोमविकृतिभूत इत्यर्थः। साहित्यमत्र एककालिकतन्त्रानुष्ठानरूपम्। प्रधानप्रत्यासत्तेरिति। प्रधानस्य सोमयागस्य समनन्तरानुष्ठेयत्वेन सन्निहितत्वादित्यर्थः। स्थानातिक्रमसाम्यादिति। अग्नीषोमीयस्य स्वस्थानं परित्यज्य सवनीयदेशे उत्कर्षः। आनुबन्ध्यस्यापि स्वस्थानं परित्यज्य सवनीयदेशे अपकर्ष इत्युभयोरेकैकं स्वं स्वं स्थानं परित्यज्य स्थानान्तरप्राप्तिरूपं साम्यं भवतीत्यर्थः। तदेवोपपादयति—सवनीयदेश इति।

---

१. देशस्थानां. २. एवं ३. तत्र साहित्यं सह पशूनालभेत इति विहितम्।

तथा च सवनीयदेशे सर्वेषामनुष्ठाने कर्तव्ये सवनीयस्य प्रथममनुष्ठानम्। आश्विनग्रहणानन्तरं हि सवनीयदेशः। प्रकृतौ 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोती' त्याश्विनग्रहणानन्तरं तस्य विहितत्वात्। तथा च साद्यस्क्रेऽप्याश्विनग्रहणे कृते सवनीय एवोपस्थितो भवतीति युक्तं तस्य स्थानात्प्रथममनुष्ठानमितरयोश्च पश्चादित्युक्तम्॥

( मुख्यक्रमनिरूपणम् )

प्रधानक्रमेण योऽङ्गानां क्रम आश्रीयते स मुख्यक्रमः। येन हि क्रमेण प्रधानानि क्रियन्ते तेनैव चेत् क्रमेण तेषामङ्गान्यनुष्ठीयन्ते तदा सर्वेषामङ्गानां स्वैः प्रधानैस्तुल्यं व्यवधानं भवति, व्युत्क्रमेण त्वनुष्ठाने केषांचिदङ्गानां स्वैः प्रधानैरत्यन्तमव्यवधानमन्येषामत्यन्तं व्यवधानं स्यात्, तच्चायुक्तम्, प्रयोगविध्यवगतसाहित्यबाधापत्तेः, अतः प्रधानक्रमोऽप्यङ्गक्रमे हेतुः

अत एव प्रयाजशेषेणाग्नेयहविषोऽभिघारणं, पश्चादैन्द्रस्य दध्नः,

---

एवं स्थानातिक्रमवैषम्यपरिहारार्थं सवनीयदेश एवानुष्ठानस्य कर्तव्यताप्राप्तौ तत्र च प्रथमं सवनीयस्यैवोपस्थितत्वेन तस्यैव प्रथममनुष्ठानमित्याह-**तथा चेति**। **सर्वेषामिति**। त्रयाणां पशूनामित्यर्थः। कोऽसौ सवनीयदेशः? अत आह—**आश्विनेति**। त्रिवृता त्रिगुणया रज्वा। परिवीय परितः संवेष्ट्य। **इतरयोश्च पश्चादिति**। तयोरपि मध्ये कस्य प्रथममनुष्ठानमिति चिन्तायां तत्र प्रकृतिदृष्टक्रमस्य परित्यागे प्रमाणाभावेन प्रथमतोऽग्नीषोमीयस्य, अनन्तरमानुबन्ध्यस्येत्येवं क्रमो बोद्धव्यः। इदं सर्वं पञ्चमे निरूपितमित्याह-**इत्युक्तमिति**॥

( मुख्यक्रमनिरूपणम् )

एवं स्थानक्रमं निरूप्यानन्तरप्राप्तं मुख्यक्रमं निरूपयितुमारभते—**प्रधानेनेति**। यत्रानेकप्रधानानि एकप्रयोगविधिपरिगृहीतान्येकदानुष्ठीयन्ते तदा तदङ्गानां तैरेव सहानुष्ठाने कर्तव्ये कस्य प्रधानस्याङ्गानि प्रथमतोऽनुष्ठेयानि कस्य वा तदनन्तरमिति क्रमविशेषापेक्षायां तत्र यस्य प्रधानस्य प्रथमनुष्ठानं तदङ्गानि प्रथममनुष्ठेयानीत्येवं रूपो यः क्रमः स मुख्यक्रम इत्यर्थः। एवं क्रमाश्रयणस्य प्रयोजनमाह—**येन हीति**। विपर्यये दोषमाह—**व्युत्क्रमेणेति**। प्रथमप्रधानस्याङ्गानां पश्चादनुष्ठाने द्वितीयप्रधानाङ्गानां च प्रथममनुष्ठाने कृत इत्यर्थः। कथमयुक्तत्वमत आह—**प्रयोगेति**। प्रयोगविधिना हि अङ्गानां प्रधानानां च युगपदनुष्ठेयत्वरूपसाहित्यबोधनात् तस्याशक्यानुष्ठानत्वेन ततः अविलम्बापरपर्यायासम्बन्धिपदार्थान्तराव्यवधानरूपप्राशुभावपर्यवसानात् अनेकप्रधानस्थले च तस्यापि संपादयितुमशक्यत्वेन तत्र 'येन नाव्यवधान' मिति न्यायेन यावद्भिः पदार्थैरवश्यं सोढव्यं व्यवधानं तावत एव व्यवधानस्य प्रयोगविधिनाभ्यनुज्ञातत्वात् व्युत्क्रमेणानुष्ठाने क्वचिदधिकव्यवधानापत्त्या प्रयोगविधेस्तदंशे बाधापत्तिरित्यर्थः। **अङ्गक्रमे हेतुरिति**। अनेन मुख्यानां क्रम इव क्रमो मुख्यक्रम इति व्युत्पत्तिरपि सूचिता।

उदाहरणमाह—**प्रयाजशेषेणेति**। अयमत्र विषयसंग्रहः-दर्शपूर्णमासप्रकरणे

आग्नेययागैन्द्रयागयोः पौर्वापर्यात्। अत्र हि द्वयोरभिघारणयोः स्वेन स्वेन प्रधानेन तुल्यमेकान्तरितव्यवधानं भवति, आग्नेयहविरभिघारणाग्नेययागयोः ऐन्द्रयागहविरभिघारणेन व्यवधानात्। ऐन्द्रयागहविरभिघारणैन्द्रयागयोश्चाग्नेययागेन व्यवधानात्। अतश्चादावाग्नेयहविरभिघारणम्, तत ऐन्द्रस्य हविषः, तत आग्नेययागः, ततश्चैन्द्रो यागः, इत्येवंक्रमो मुख्यक्रमात् सिद्धो भवति।

यदि तु आदावैन्द्रहविषोऽभिघारणं, तत आग्नेयस्य क्रियते, तदा याज्यानुवाक्याक्रमवशादादावाग्नेयस्यानुष्ठानादाग्नेययागतदङ्गहविरभिघारणयोरत्यन्तमव्यवधानम्, ऐन्द्रयागतदङ्गहविरभिघारणयोरत्यन्तं व्यवधानं स्यात्, तच्च न युक्तम्। अतो युक्तः प्रयाजशेषाभिघारणस्य मुख्यक्रमात् क्रम इति॥

स चासौ मुख्यक्रमः पाठक्रमात् दुर्बलः। मुख्यक्रमो हि प्रमाणान्तरसापेक्षप्रधानक्रमप्रतिपत्तिसापेक्षतया विलम्बित(१)प्रतिपत्तिकः, पाठक्रमस्तु निरपेक्षस्वाध्यायपाठक्रममात्रसापेक्षतया न तथेति बलवान्।

अत एव आग्नेयोपांशुयाजाग्नीषोमीयाणां क्रमेणानुष्ठीयमानानामप्यु-

---

प्रयाजहोमानन्तरं श्रुतम्—प्रयाजशेषेण हवींष्यभिघारयतीति। तेन प्रयाजानिष्ट्वा तच्छेषेण वेद्यामासादितानां प्रधानहविषामभिघारणं कर्तव्यतया प्राप्तम्। तत्र दर्शे तावत् त्रीणि हवींषि—आग्नेयः पुरोडाशः, ऐन्द्रं दधि, ऐन्द्रं पयश्चेति। तत्र त्रयाणां मध्ये प्रथमं कस्य हविषोऽभिघारणमनन्तरं च कस्येत्याकाङ्क्षायामाग्नेयस्यैव प्रथममनुष्ठेयत्वेन तदङ्गहविरभिघारणस्यैव प्रथममनुष्ठानम्, अनन्तरमेव दध्नः, दधियागस्य पश्चादनुष्ठीयमानत्वात्। एवं च प्रयोगविध्यवगतस्य साहित्यस्यानुग्रहो भवतीति। प्रयोगविध्यवगतसाहित्यानुग्रहमेवोपपादयति—अत्र हीति।

वैपरीत्येनानुष्ठाने बाधमाह—यदि त्विति। ननु आग्नेययागैन्द्रयागयोः पौर्वापर्ये किं बीजम्? अत आह—याज्यानुवाक्याक्रमवशादिति। तैत्तिरीयब्राह्मणे तृतीयाष्टके पञ्चमप्रपाठके सप्तमानुवाके "अग्निर्मूर्धा दिवः" "भुवो यज्ञस्य" इत्याग्नेय्यौ याज्यानुवाक्ये आम्नाय ततः प्राजापत्याग्नीषोमीयैन्द्राग्नयाज्यानुवाक्याः पठित्वा अनन्तरं "एन्द्र सानसिँ रयिं" "प्र ससाहिषे" इत्यैन्द्र्यौ याज्यानुवाक्ये आम्नाते। एवं च प्रथमतः आग्नेययाज्यानुवाक्ययोः अनन्तरमैन्द्रयाज्यानुवाक्ययोश्च पाठात्तत्क्रमानुसारेणेत्यर्थः।

एवं मुख्यक्रमं निरूप्य तस्य पाठक्रमापेक्षया दौर्बल्यं निरूपयति—स चेति। प्रमाणान्तरेति। क्वचिद्ब्राह्मणपाठक्रमात् क्वचिच्च याज्यानुवाक्याक्रमादित्यर्थः। प्रमाणान्तरसापेक्षेति। याज्यानुवाक्यापाठादिरूपप्रमाणान्तरसापेक्षः प्रधानक्रमः, तत्प्रतिपत्तिमपेक्षते चाङ्गानां क्रम इति विलम्बेन प्रतिपत्तियोग्य इत्यर्थः।

अत एव मुख्यक्रमस्य पाठक्रमापेक्षया दौर्बल्यादेव। पौर्णमास्यां हि आग्नेयः

---

१. प्रवृत्तिकः।

पांशुयाजाज्यनिर्वापो मुख्यक्रमान्न पूर्वमनुष्ठीयते, तस्य दुर्बलत्वात्। पाठक्रमात्तु पश्चादनुष्ठीयते, तस्य प्रबलत्वादिति।

स चायं मुख्यक्रमः प्रवृत्तिक्रमाद्बलवान्। प्रवृत्तिक्रमे ह्याश्रीयमाणे बहूनामङ्गानां प्रधानविप्रकर्षो भवति, अस्मिंस्तु आश्रीयमाणे सन्निकर्षः। तद्यथा—दर्शपूर्णमासयोरादावाग्नेयानुष्ठानं, ततः सान्नाय्यस्य। तद्धर्माश्च केचित् पूर्वमनुष्ठीयन्ते। तत्र यदि प्रवृत्तिक्रममाश्रित्य तद्धर्माः सर्वे पूर्वमनुष्ठीयेरन्, तत आग्नेयधर्माः, तत आग्नेयानुष्ठानं, ततः सान्नाय्यानुष्ठानम्, तदा तद्धर्माणां स्वप्रधानेन सह द्वाभ्यामाग्नेयधर्मतदनुष्ठानाभ्यां विप्रकर्षः स्यात्।

यदा तु सान्नाय्यधर्माणां केषाञ्चित् पूर्वमनुष्ठानेऽपि अन्ये सर्वे मुख्यक्रममाश्रित्याग्नेयधर्मानुष्ठानानन्तरमनुष्ठीयन्ते तदा सर्वेषामाग्नेयधर्मसान्नाय्यधर्माणामेकैकेन विजातीयेन व्यवधानं भवति;—आग्नेयधर्माणां स्वप्रधानेन सह सान्नाय्यधर्मैर्व्यवधानात्, सान्नाय्यधर्माणां च स्वप्रधानेन सहाग्नेयानुष्ठानेन व्यवधानात्—इति न विप्रकर्षः। तस्मात् मुख्यक्रमः प्रवृत्तिक्रमाद्बलवान्॥

## ( प्रवृत्तिक्रमनिरूपणम् )

सह प्रयुज्यमानेषु प्रधानेषु सन्निपातिनामङ्गानामावृत्त्यानुष्ठाने कर्तव्ये द्वितीयादिपदार्थानां प्रथमानुष्ठितपदार्थक्रमात् यः क्रमः स प्रवृत्तिक्रमः।

---

पुरोडाशः, उपांशुयाजः आज्यहविष्कः, अग्नीषोमीयः पुरोडाशः, इति त्रीणि प्रधानानि। तत्र आग्नेयाग्नीषोमीययोः पौर्वापर्यं तु तदीययाज्यानुवाक्याक्रमादित्युक्तं पूर्वम्। उपांशुयाजश्च 'उपांशुयाजमन्तरा यजती'ति वाक्येन आग्नेयाग्नीषोमीययोर्मध्ये कर्तव्यतया विहित इति तेनैव क्रमेण तेऽनुष्ठीयन्ते। तत्र च तदङ्गभूतहविर्निर्वापाः, 'अग्नये जुष्टं निर्वपाम्यग्नीषोमाभ्याम्' इत्यादिना विहिताः। एवं च अत्र मुख्यक्रमानुरोधेन आग्नेयानन्तरमग्नीषोमीयात्पूर्वं कर्तव्य आज्यनिर्वापः, अथ वा पाठक्रमानुसारेण अन्त एवेति सन्देहे मुख्यक्रमापेक्षया पाठक्रमस्य प्राबल्यात्तदनुसारेणान्त एवानुष्ठानमिति।

एवं मुख्यक्रमस्य पाठक्रमापेक्षया दौर्बल्यं निरूप्य इदानीं तस्य प्रवृत्तिक्रमापेक्षया प्राबल्यं निरूपयति—**स चेति**। प्रवृत्तिक्रमस्य दौर्बल्ये कारणमाह—**प्रवृत्तीति**। **तद्धर्माः** सान्नाय्यधर्माः। **केचिदिति**। शाखाच्छेदनवत्सापाकरणादय इत्यर्थः। **पूर्वमिति**। तेषां पूर्वं पठितत्वेन पाठक्रमानुसारेण पूर्वमेवानुष्ठानस्य प्राप्तत्वादिति भावः। **तद्धर्माणां** सान्नाय्यधर्माणाम्।

## ( प्रवृत्तिक्रमनिरूपणम् )

एवं मुख्यक्रमं निरूप्य प्रवृत्तिक्रमं निरूपयति—**सहेति**। युगपदनुष्ठीयमानेष्वित्यर्थः। **सन्निपातिनामिति**। सन्निपत्योपकारकाणामित्यर्थः। यत्र बहूनां प्रधानानामेककालकर्तव्यता प्राप्ता तत्र तदङ्गानामपि सन्निपत्योपकारकाणां युगपदनुष्ठानं प्राप्तम्, तच्चाशक्यमित्येकैकस्मिन् प्रधानेऽङ्गावृत्त्यामवश्यं भाविन्यां तत्र यत्प्रधानमारभ्य येन क्रमेण प्राथमिकाङ्गानुष्ठानं कृतं तेनैव क्रमेण तदेव प्रधानमारभ्य द्वितीयाङ्गानुष्ठानमिति यः क्रमः

यथा-प्राजापत्याङ्गेषु। प्राजापत्या हि 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ती'ति वाक्येन तृतीयानिर्देशात् सेतिकर्तव्यताका एककालत्वेन विहिताः, अतस्तेषां तदङ्गानां चोपाकरणनियोजनप्रभृतीनां साहित्यं संपादनीयम्।

तत्र प्राजापत्यानां संप्रतिपन्नदेवताकत्वेनैकस्मिन् कालेऽनुष्ठानादुपपद्यते साहित्यम्। तदङ्गानां चैकस्मिन् कालेऽनुष्ठानमशक्यम्। न ह्यनेकेषां पशूनामुपाकरणमेकस्मिन् काले कर्तुं शक्यम्। अतस्तेषां साहित्यमव्यवधानेनानुष्ठानात् संपाद्यम्-एकस्योपाकरणं कृत्वाऽपरस्योपाकरणमिति। अतः प्राजापत्येषु एकं पदार्थं सर्वत्रानुष्ठाय द्वितीयः पदार्थोऽनुष्ठेयः। तत्र प्रथमपदार्थानुष्ठानं कस्माच्चित्पशोरारभ्य कर्तव्यम्। द्वितीयस्तु पदार्थो येन क्रमेण प्रथमोऽनुष्ठितः तेनैव क्रमेणानुष्ठेयः प्रयोगविध्यवगतस्य मिथोऽङ्गसाहित्यस्योपपत्तये।

प्रयोगविधिना हि दैक्षे तदङ्गानामुपाकरणनियोजनादीनां मिथः साहित्यमानन्तर्यापरपर्यायं विहितम्। तच्च साहित्यं सवनीयपशौ चोदकेन प्राप्तम्,

---

स प्रवृत्तिक्रम इत्यर्थः। उदाहरति-**प्राजापत्येष्विति**। वाजपेये हि **'सप्तदश प्राजापत्यान् पशूनालभते'** इति वाक्येन प्रजापतिदेवताकाः सप्तदश पशव आम्नातास्तेष्वित्यर्थः। तदेवोपपादयति-**प्राजापत्या हीति**। **सेतिकर्तव्यताका इति**। अयमाशयः--यत्र हि तृतीयानिर्देशः तत्र तृतीयाप्रकृत्यर्थस्य करणत्वमवगम्यते, तच्च करणत्वं फलजनकत्वरूपम्, तच्च न प्रधानमात्रस्य सम्भवतीत्यङ्गविशिष्टस्यैव तद्वाच्यम्। एवञ्च तत्र साङ्गस्य प्रधानस्य भावनाकरणत्वं, न तु प्रधानमात्रस्य, यथा-**'अप्स्ववभृथेन चरन्ति'' "उच्चैः प्रवर्ग्येण''**त्यादौ, तत्र साङ्ग एव अवभृथे अप्पूदेशविधानम्, साङ्ग एव च प्रवर्ग्ये स्वरविधानम्, न तु यत्र द्वितीयानिर्देशस्तत्र, । तत्र करणत्वस्याप्रतीयमानत्वेन प्रधानमात्रस्यैवोद्देश्यत्वात्, यथा-**"यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्या"** इत्यादौ, प्रकृतेऽपि तृतीयानिर्देशात् साङ्गेष्वेव पशुषु द्वन्द्वोपात्तसाहित्यस्यान्वयो वक्तव्यः। एवञ्च प्रधानेष्विव अङ्गेष्वपि एककालानुष्ठेयत्वरूपं साहित्यं प्राप्तमिति तद्यद्यपि प्रधानानामेकदेवताकत्वात् युगपदनुष्ठानं सम्भवति, अङ्गानां तु विभिन्नदेवताकत्वादेककालानुष्ठानासम्भवेन अविलम्बापरपर्यायप्राशुभावे पर्यवस्यति। अतः तत्सिद्ध्यर्थं प्रथममङ्गमुपाकरणरूपं यस्मिन् कस्मिंश्चित् पशावारभ्य केनचित् क्रमेणानुष्ठेयम्। द्वितीयं त्वङ्गं नियोजनं यस्मिन् पशावुपाकरणमारभ्य येन क्रमेण कृतं तस्मिन्नेव पशौ आरभ्य तेनैव क्रमेण कर्तव्यमित्याह—**तत्रेत्यादिना**। **सम्प्रतिपन्नदेवताकत्वेनेति**। एकदेवताकत्वेनेत्यर्थः। **एकस्मिन् कालेऽनुष्ठानादिति**। प्रयोगविधिना साङ्गानां प्रधानानां यौगपद्यबोधनात् यत्र विभिन्नदेवताकस्थले तदसम्भवः तत्र क्रमापेक्षायां पाठादीनां क्रमनियामकत्वेऽपि यत्रैकदेवताकस्थले यौगपद्यसम्भवस्तत्र तन्त्रानुष्ठानस्यैव उचितत्वादिति भावः। **'प्रजापतेर्जायमानाः' 'इमं पशुं पशुपते'** इति मन्त्रद्वयेन बर्हिर्भ्यां प्लक्षशाखया च पशोरुपस्पर्शनपूर्वकं देवतार्थत्वेन संकल्पनमुपाकरणम्। यूपे पशोर्बन्धनं **नियोजनम्**।

प्राजापत्येषु उपाकरणादिप्राप्तिमुपपादयति-**प्रयोगविधिनेति**। **तच्चेति**। दैक्षे

तस्य प्राणिद्रव्यकत्वेन दैक्षविकृतित्वात्। सवनीयाच्चैकादशिनेषु प्राप्तम्, सुत्याकालत्वसामान्यात्। तेभ्यश्च प्राजापत्येषु प्राप्तम्, गणत्वसामान्यात्।

प्राजापत्येषु च प्रतिपशु यागभेदाच्चोदका भिद्यन्ते। अतश्चोदकात्तत्तत्पश्वङ्गभूतानामुपाकरणनियोजनादीनां साहित्यमानन्तर्यापरपर्यायं प्राप्तम्। अत एकस्य पशोरुपाकरणानन्तरमेव नियोजनं चोदकबलात् कर्तव्यत्वेन प्राप्तम्। तत्तु न क्रियते, प्रत्यक्षवचनावगतसर्वपश्वङ्गसाहित्यानुपपत्तेः। अत एकस्मिन् पशावुपाकरणे कृते तदनन्तरमेव कर्तव्यत्वेन प्राप्तमपि नियोजनं न क्रियते। प्रत्यक्षवचनबलात्तु पश्वन्तरेषु षोडशसु उपाकरणमेव क्रियते। कृते तु तेषूपाकरणे प्रथमपशोर्नियोजनस्य तदीयोपाकरणेन व्यवधाने प्रमाणाभावात् प्रथमपशावेव नियोजनं कार्यम्। अतश्च येन क्रमेणोपाकरणं कृतं तेनैव क्रमेण नियोजनं कार्यम्।

---

यद्विहितं तदित्यर्थः। **चोदकेन** अतिदेशेन। तत्र कारणमाह—**तस्येति**! सवनीयस्येत्यर्थः। **प्राणिद्रव्यकत्वेनेति**। सवनीयस्यापि पशुद्रव्यकत्वात् अग्नीषोमीयस्यापि तथात्वात् उभयोः सादृश्यसत्वादित्यर्थः। **ऐकादशिनेष्विति**। "आग्नेयः कृष्णग्रीवः, सारस्वती मेषी, बभ्रुः सौम्यः, पौष्णः श्यामः, शितिपृष्ठो बार्हस्पत्यः, शिल्पो वैश्वदेवः, ऐन्द्रोऽरुणः, मारुतः कल्माषः, ऐन्द्राग्नस्संहितोऽधोरामः सावित्रः, वारुणः पेत्वः" इति विहितेषु पशुष्वित्यर्थः। **सुत्याकालत्वसामान्यादिति**। प्राणिद्रव्यकत्वरूपसादृश्येन अस्याप्यधिकसादृश्यस्य सत्वादित्यर्थः। **तेभ्यः** ऐकादशिनेभ्यः। **गणत्वसामान्यादिति**। प्राजापत्यानां पशुसमुदायरूपगणत्वादैकादशिनानामपि गणत्वात् सादृश्यसद्भावादित्यर्थः। अत्रापि पूर्ववत् सादृश्याधिक्यादित्येव व्याख्येयम्। सर्वमेतन्निरूपितमष्टमे।

**ननु** प्राजापत्यगणस्य एकत्वात् स्वप्रकृतितः एक एव अतिदेश इति तावत्स्वपि पशुषु सकृदेवोपाकरणादीनामनुष्ठेयतया अनेकेषां तेषामप्रसक्तत्वात् कथं साहित्यप्राप्तिः? अत आह—**प्राजापत्येष्विति**। **यागभेदादिति**। एवञ्च गणत्वे सत्यपि तत्तद्द्रव्यदेवतासम्बन्धभेदादिना यागभेदस्य द्वितीये निरूपितत्वात् तेषां च पृथक् पृथग्धर्मापेक्षत्वेन प्रत्येकमतिदेशतो धर्माणां प्राप्तिः स्यादेवेति भावः। **उपाकरणमेव क्रियत इति**। एतेन प्राजापत्यपशुषूपाकरणादीनां पदार्थानुसमय एव, न काण्डानुसमय इति पाश्चमिकः सिद्धान्तः सूचितः। न च एकस्मिन् पशौ सर्वमुपाकरणाद्यङ्गजातमनुष्ठाय अपरस्मिन् पशौ तस्यानुष्ठानेऽपि तावत एव व्यवधानस्य सम्भवेन अङ्गप्रधानयोस्तुल्यव्यवधानसम्भवात् किमर्थं प्रकृतिप्राप्तमेकस्मिन् पशौ तदीयोपाकरणनियोजनयोरानन्तर्यं बाधित्वा पदार्थानुसमय आश्रीयत इति **वाच्यम्**। "**वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ती**"ति प्रत्यक्षवचनेन प्रधानानामिव अङ्गप्रधानयोरपि साहित्यबोधनात् एकस्मिन् क्षणे तेषामपि युगपदुपकर्तव्यतायाः प्राप्तत्वात्। अतश्च यस्मिन् क्षणे एकस्मिन् पशावुपाकरणं प्राप्तं तस्मिन्नेव क्षणे पश्वन्तरेऽपि तत्प्राप्तम्। तत्तु अशक्यानुष्ठानत्वान्न क्रियते प्रथमक्षणे। द्वितीयक्षणे-

एवञ्च तत्तत्पशुपाकरणानां स्वस्वनियोजनैस्तुल्यं षोडशक्षणैर्व्यवधानं भवति। अन्यथा केषांचिदत्यन्तव्यवधानं केषांचिच्चाव्यवधानं स्यात्। तच्च न युक्तम्। तस्मात् येन क्रमेण प्रथमपदार्थोऽनुष्ठितस्तेनैव द्वितीयोऽनुष्ठेयः। तत्सिद्धं प्रथमानुष्ठितपदार्थक्रमात् यो द्वितीयपदार्थक्रमः स प्रवृत्तिक्रम इति।

तदेवं निरूपितः संक्षेपतः षड्विधक्रमनिरूपणेन प्रयोगविधिव्यापारः॥

## ( अधिकारविधिनिरूपणम् )

फलस्वाम्यबोधको विधिरधिकारविधिः। फलस्वाम्यं च कर्मजन्यफलभोक्तृत्वम्। स च 'यजेत स्वर्गकाम' इत्येवंरूपः। अनेन हि स्वर्गमुद्दिश्य यागं विदधता स्वर्गकामस्य यागजन्यफलभोक्तृत्वं प्रतिपाद्यते।

'यस्याहिताग्नेरग्निर्गृहान् दहेत् सोऽग्नये क्षामवते पुरोडाशमष्टा-

---

ऽपि तस्याकरणे प्रयोगविध्यवगतसाहित्यं बाध्येतेति आनुमानिकं नैरन्तर्यं बाधित्वाऽपि पदार्थानुसमयस्यैवाश्रयणीयत्वात्। तदेतत्सर्वं मनसि निधायाह—**अत इत्यादिना**।

**षोडशक्षणैरि**त्युपलक्षणमसम्बन्धिपदार्थान्तरीयक्षणानाम्। **केषांचिच्चेति**। चकारादल्पव्यवधानस्य ग्रहणम्। प्रवृत्तिक्रमनिरूपणमुपसंहरति-**तदिति**। पञ्चमाध्यायार्थभूतप्रयोगविधिनिरूपणमुपसंहरति-**तदेवमिति**।

( अधिकारविधिनिरूपणम् )

क्रमप्राप्तमधिकारविधिं निरूपयति—**फलस्वाम्येति**। कीदृशमत्र फलस्वाम्यमित्यत आह—**फलस्वाम्यं चेति**। एवञ्च यो यत्फलमभिलषति स तत्साधने यागादौ अधिकरोतीति अधिकारबोधकत्वादस्य अधिकारविधित्वमित्यर्थः। **स च** अधिकारविधिश्च। **स्वर्गमुद्दिश्येति**। यद्यप्यत्र पुरुषविशेषणं स्वर्गकामशब्दः तमेवाभिधातुं शक्नोतीति न स्वर्गस्योद्देश्यता प्रतीयते तथापि अस्वार्थे पुरुषस्य प्रवृत्त्यनुदयात् विधिबलेन भावनायाः पुरुषार्थभाव्यकत्वे अवश्याभ्युपगते तद्विशेषाकाङ्क्षायां स्वर्गकामपदेन विशिष्टफलापेक्षिणः पुरुषस्य शेषित्वबोधनात् विशेष्यस्य आख्यातादेव प्राप्तत्वेन विशेषणभूतस्वर्गादिमात्रपरं स्वर्गकामादिपदम्, प्रथमा च कर्मत्वपरेत्यभिसन्धायैवमभिहितम्। **यागं विदधतेति**। षष्ठाद्यन्यायेन स्वर्गे भाव्यत्वेनान्विते भावार्थाधिकरणन्यायेन धात्वर्थस्य करणत्वेनान्वयस्य युक्तत्वादिति भावः।

नन्वेवं सति नित्ये नैमित्तिके च पुंसः अधिकारो न स्यात्, तत्र कर्मजन्यफलस्यैवाभावेन तद्भोक्तृत्वस्य दूरापास्तत्वात्। न च विश्वजिन्न्यायेन स्वर्गः, रात्रिसत्रन्यायेन 'धर्मेण पापमपनुदती' ति वाक्यशेषश्रवणात् पापक्षयो वा फलत्वेन कल्प्यतामिति वाच्यम्। निमित्तफलयोः उभयोः एकस्मिन् वाक्ये उद्देश्यत्वाङ्गीकारे वाक्यभेदापत्तेः। उक्तं च-"निमित्तफलसम्बन्ध एकवाक्ये न युज्यते।

उद्देश्यद्वयसम्बन्धे वाक्यभेदः प्रसज्यते"॥ इति।

अत आह-**यस्याहिताग्नेरिति**। अयं भावः—भावनायाः इष्टभाव्यकत्वस्वाभा-

कपालं निर्वपे'दित्यादिभिस्तु गृहदाहादौ निमित्ते कर्म विदधद्भिर्निमित्तवतः कर्मजन्यपापक्षयरूपफलस्वाम्यं प्रतिपाद्यते।

तच्च फलस्वाम्यं तस्यैव योऽधिकारिविशेषणविशिष्टः। अधिकारिविशेषणं च तदेव यत्पुरुषविशेषणत्वेन श्रुतम्। अत एव 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यनेन स्वाराज्यमुद्दिश्य राजसूयं विदधतापि न स्वाराज्यकाममात्रस्य तत्फलभोक्तृत्वं प्रतिपाद्यते, किं तु राज्ञः सतस्तत्कामस्य।

किंचित्तु पुरुषविशेषणत्वेनाश्रुतमप्यधिकारिविशेषणं भवति। यथा-अध्ययनविधिसिद्धा विद्या, अग्निसाध्येषु च कर्मसु आधानसिद्धाग्निमत्ता, सामर्थ्यं च। एतेषां पुरुषविशेषणत्वेनाश्रवणेऽप्यधिकारिविशेषणत्वमस्त्येव। उत्तरक्रतुविधीनां ज्ञानाक्षेपशक्तेरभावेनाध्ययनविधिसिद्धज्ञानवन्तं प्रत्येव प्रवृत्तेः। अग्निसाध्यकर्मणां चाग्न्यपेक्षत्वेन तद्विधीनामाधानसिद्धाग्निमन्तं प्रत्येव प्रवृत्तेः।

---

त्येन नैमित्तिकस्थलेऽपि अवश्यं किञ्चित्फलं कल्पनीयम्। तच्च न स्वर्गादिरूपम्, अनुपस्थितस्वर्गकल्पने गौरवात्। मुमुक्षोः स्वर्गादीनामनिष्टत्वेन तदुत्पत्तौ शास्त्रस्यानिष्टसाधनानुष्ठापकत्वापत्तेश्च। नापि अकरणनिमित्तप्रत्यवायप्रागभावपरिपालनरूपं तत्। तस्याजन्यत्वेन फलत्वायोगात्। किन्तु पापक्षय एव आर्थवादिकः कल्प्यते। न च उद्देश्यानेकत्वकृतो वाक्यभेदः। उद्देश्यद्वयेन सह विधेयसम्बन्ध एव वाक्यभेदात्। अत्र च कर्मणः फलेन सह सम्बन्धः। तत्कर्तव्यतायाश्च निमित्तेन इति न वाक्यभेदः। उक्तं हि—

"द्वाभ्यां विधेयसम्बन्धे वाक्यभेदः प्रसज्यते।
उद्देश्येन निमित्तेन विधेयस्य न सङ्गतिः॥" इति।

दाहादावित्यादिपदेन "एतामेव निर्वपेद्यस्य हिरण्यं नश्येत्" इति विहिता हिरण्यनाशेष्टिः परिगृह्यते। कर्मजन्येति। कर्मजन्यं यत्पापक्षयरूपं फलं तत्स्वाम्यमित्यर्थः। नन्वेवं बृहस्पतिसवे क्षत्रियवैश्ययोः, राजसूये ब्राह्मणवैश्ययोः, वैश्यस्तोमे च ब्राह्मणक्षत्रिययोरधिकारापत्तिः। तेषामपि कर्मजन्यफलभोक्तृत्वसम्भवात्। अत आह—तच्चेति। नन्वेवमपि स्वर्गकामत्वादेरप्यधिकारिविशेषणत्वसम्भवात्तद्दोषतादवस्थ्यम्, अत आह—अधिकारीति। स्वर्गकामादिपदानां स्वर्गादिमात्रबोधकत्वेन पुरुषविशेषणत्वं न सम्भवतीति भावः। अत एव पुरुषविशेषणत्वेन श्रुतस्य अधिकारिविशेषणत्वादेव। राज्ञः सत इति। अत्र राजपदं क्षत्रियजातिमात्रवाचकम्। एवञ्च नेतरयोरत्र प्राप्तिः। एवं वैश्यस्तोमादावपि द्रष्टव्यमित्याशयः।

नन्वेवं शूद्रस्याप्यधिकारः स्यात्। तस्यापि स्वर्गकामत्वाविशेषात्। अत आह—किञ्चिदित्विति। विद्या निष्कृष्टवेदवाक्यार्थज्ञानम्। ब्राह्मणवाक्यार्थज्ञानं विना कर्मस्वरूपस्यैव ज्ञातुमशक्तेः, मन्त्रार्थज्ञानं विना प्रयोगसमवेतार्थस्मरणासम्भवाच्च। उत्तरक्रतुविधीनाम्। आधानानन्तरमनुष्ठीयमानदर्शपूर्णमासज्योतिष्टोमादिक्रतुविधीनाम्। ज्ञानाक्षेपशक्तेरभावेनेति। उत्तरक्रतुविधयः स्वविषयानुष्ठानार्थं तद्विषयकं ज्ञानमपेक्षमाणाः प्रमाणान्तरसिद्धार्थज्ञानवन्तं पुरुषमादाय तेनैव कृतार्था इति न तेषु स्वातन्त्र्येण ज्ञानाक्षेपकत्वशक्तिः कल्प्यते, गौरवादिति भावः। अत एव उत्तरक्रतुविधीनामग्निमद्विद्यावद्वि-

अत एव च शूद्रस्य न यागादावधिकारः। तस्याध्ययनविधिसिद्धज्ञानाभावात्, आधानसिद्धाग्न्यभावाच्च, अध्ययनस्योपनीताधिकारत्वादुपनयनस्य चा 'ष्टवर्षं ब्राह्मणमुपनयीते' त्यादिना त्रैवर्णिकाधिकारत्वात्। आधानस्यापि 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिना त्रैवर्णिकाधिकारत्वात्।

यद्यपि च 'वर्षासु रथकारोऽग्नीनादधीते' त्यनेन रथकारस्य सौधन्वनापरपर्यायस्याधानं विहितम्, योगाद्रूढेर्बलीयस्त्वात्, तथापि नास्योत्तरकर्मस्वधिकारः, अध्ययनविधिसिद्धज्ञानाभावात्।

न च तदभावे आधानेऽपि कथमधिकारः, तदनुष्ठानस्य तत्साध्यत्वादिति वाच्यम्; तस्याध्ययनविधिसिद्धज्ञानाभावेऽपि 'वर्षासु रथकारोऽग्नीनादधीत' इत्यनेनैव विधिनाऽऽधानमात्रोपयिकज्ञानाक्षेपणात्। अन्यथा एतस्यैव विधेरनुपपत्तेः। अतश्च रथकारस्याधानमात्रेऽधिकारेऽपि नोत्तरकर्मस्वधिकारः, विद्याभावात्।

एवञ्च तदाधानं नाग्निसंस्कारार्थम्। संस्कृतानामग्नीनामुत्तरत्रोपयोगाभावात्, किं तु तदाधानं लौकिकाग्निगुणकं विश्वजिन्न्यायेन स्वर्गफल-

---

षयकत्वादेव। उपनीताधिकारत्वादिति। 'अष्टवर्षं ब्राह्मणमुपनयीत' तमध्यापयीत' इति तच्छब्देन उपनीतस्यैव परामर्शात्, उपनयनस्य च 'अष्टवर्षं ब्राह्मणमुपनयीत एकादशवर्षं राजन्यं, द्वादशवर्षं वैश्यम्' इति त्रैवर्णिकमात्रं प्रति विहितत्वादित्यर्थः। उपनयीतेत्यादिना एकादशवर्षं राजन्यमुपनयीत, 'द्वादशवर्षं वैश्य' मित्यनयोः परिग्रहः। एवमुत्तरत्राप्यादिपदेन 'ग्रीष्मे राजन्यः, शरदि वैश्य' इत्यनयोः परिग्रहः।

ननु शूद्रस्याप्यस्त्येव यागादावधिकारः, रथकारस्याधानश्रवणात्। न च त्रैवर्णिक एव यदि कश्चिद्रथं करोति तस्यैष कालविधिः इति कथमनेन त्रैवर्णिकातिरिक्तस्य जातिविशेषस्याधानं सिध्यति। अत एव आपस्तम्बेनापि "ये त्रयाणां वर्णानामेतत्कर्म कुर्वन्ति तेषामेष कालः" इति त्रैवर्णिकाधिकारिकत्वमेवोक्तमिति वाच्यम्। योगापेक्षया रूढेर्बलीयस्त्वात्। न च प्रोक्षण्यधिकरणविरोधः। क्लृप्तस्यैव योगस्य कल्प्यरूढिबाधकत्वस्य तदधिकरणविषयत्वात्। आपस्तम्बवचनस्य अवयवव्युत्पत्तिरूपहेतुमूलकत्वेन सन्न्यायविरोधे तस्यैव बाध्यत्वात्। अतः कथं त्रैवर्णिकमात्राधिकारिकत्वमित्याशङ्क्य निराकरोति-यद्यपीति। अस्य रथकारस्य। उत्तरकर्मसु आधानोत्तरकालिकेषु अग्निहोत्रदर्शपूर्णमासादिकर्मसु। ज्ञानाभावादिति। रथकारस्य वर्णत्रयबहिर्भूतत्वेन तस्योपनयनाभावादनुपनीतस्याध्ययनाभावात् तज्जन्यज्ञानस्य दूरापास्तत्वादित्यर्थः। अनुपपत्तेरिति। एवञ्च आधानविधेः स्वान्यथानुपपत्त्या स्वमात्रोपयिकज्ञानमाक्षिप्य रथकारविषये प्रवृत्तावपि नोत्तरक्रतुविधयस्तद्विषये प्रवर्त्तन्त इति भावः।

नन्वेवं उत्तरक्रतुष्वधिकाराभावे आधानसंस्कृतानामग्नीनां प्रयोजनाभावात् आधानस्यैव वैयर्थ्यं स्यादित्यत आह—एवञ्चेति। नाग्निसंस्कारकमिति। यथा त्रैवर्णिककर्तृकमाधानं उत्तरक्रतूपयोगि गार्हपत्यादितत्तदग्निसंस्कारकं नैवं रथकारकर्तृकमाधानमित्यर्थः। उपयोगाभावादिति। यस्य चोत्तरत्र उपयोगः क्लृप्तः यथा-'व्रीहिभिर्य-

कञ्च स्वतन्त्रमेव प्रधानकर्म विधीयते। अग्नीनिति च द्वितीया 'सक्तून् जुहोती' तिवत्तृतीयार्था इति।

प्रकृतमनुसरामः। तत्सिद्धं-शूद्रस्याध्ययनविधिसिद्धज्ञानाभावादाधानसिद्धाग्न्यभावाच्च नोत्तरकर्मस्वधिकार इति।

नन्वेवं स्त्रिया अधिकारो न स्यात्। तस्या अध्ययनप्रतिषेधेन तद्विधिसिद्धज्ञानाभावात्। न च नास्त्येवेति वाच्यम्। 'यजेत स्वर्गकाम' इत्यादौ स्वर्गकामपदस्योद्देश्यसमर्पकत्वेन पुंस्त्वस्योद्देश्यविशेषणत्वाद् ग्रहैकत्ववदविवक्षितत्वेन स्त्रिया अधिकारस्य साधितत्वादिति चेत् स-

---

जेते' त्यादौ, यत्र वा अक्लृप्तोऽपि कल्पयितुं शक्यः यथा-'अध्वर्युं वृणीते' इत्यादौ। अत्र हि अध्वर्योरुत्तरत्र उपयोगाश्रवणेऽपि संस्कारविध्यन्यथानुपपत्त्या उपयोगः कल्पयितुं शक्यते-वृतेनाध्वर्युणा कर्म कर्तव्यमिति, तत्रैव संस्कार्यत्वाभ्युपगमः। यत्र तु तदुभयमपि न सम्भवति न तत्र संस्कार्यत्वकल्पना। किन्तु लक्षणादिना विनियोगभङ्ग एवेत्याशयः। कथं तर्हि द्वितीयाया उपपत्तिः? अत आह-**सक्तूनिति**। **अयं भावः**- '**कर्मणि द्वितीये**'ति सूत्रात् द्वितीयायाः कर्मत्वमेवार्थः। कर्मत्वं चेप्सितानीप्सितसाधारण्येन क्रियाव्याप्यत्वरूपमेव। अन्यस्य गुरुभूतत्वात्, तद्यत्र कर्मत्वाश्रयस्येप्सिततमत्वं प्रमाणान्तरप्रमितं तत्र तद्भाव्यत्वरूपेप्सिततमत्वे पर्यवस्यति, यत्र तु न तथा, तत्रान्यस्य धात्वर्थादेः स्वर्गादेर्वा भाव्यत्वावगमात् तदर्थत्वावधारणाच्चोपपदार्थस्य तत्र श्रूयमाणा द्वितीया विषयतासम्बन्धिकरणत्वलक्षिका भवति, यथा सक्तुषु। तत्र हि सक्तूनां भूतोपयोगस्य भाव्युपयोगस्य वा प्रमाणान्तराप्रमितत्वेन भाव्यत्वानवगमात् सन्निहितधात्वर्थस्यैव च तदवगमात् तदपेक्षितकरणसमर्पणेन तत्रत्या द्वितीया करणत्वलक्षिका। एवं प्रकृतेऽग्नीनां क्वचिदुपयोगाभावात् विधिश्रुत्या च स्वर्गादेरेव भाव्यत्वावगतेः तत्र च धात्वर्थस्याधानस्य करणत्वात्तदपेक्षिताधिकरणरूपत्वमेवाग्नीनाम्। अधिकरणस्यापि करणाकांक्षयैव ग्रहणात् करणत्व एवान्तर्भाव इति अग्नीनिति द्वितीया करणत्वलक्षिकेति। एतेन '**स्वाध्यायोऽध्येतव्य**' इत्यध्ययनविधिना स्वकुलपरम्परागताया एव शाखाया अध्ययनविधानेन शाखान्तराध्ययनस्याप्राप्तत्वेन तद्गतमन्त्राद्युपसंहारार्थं तद्विषये उत्तरक्रतुविधीनां ज्ञानाक्षेपकत्वशक्तिकल्पनावश्यंभावेन तद्वदेव शूद्रविषयेऽपि आक्षेपकत्वकल्पनाया निवारयितुमशक्यत्वात् न ज्ञानाभावहेतुना अनधिकारः साधयितुं शक्यते, किन्तु अग्न्यभावादेवेति केषाञ्चिदुक्तिरपास्ता। त्रैवर्णिकानां स्वशाखाधीतवाक्येषु ज्ञानाक्षेपकत्वशक्तेरकल्पनेन शाखान्तराधीतवाक्येषु परं तत्कल्पनेन लाघवात्। शूद्रस्य तु कात्स्न्र्येन तदाक्षेपकल्पनमिति गौरवात्।

विद्याभावस्याधिकाराभावप्रयोजकत्वे स्त्रिया अपि विद्याभावादधिकाराभावमापादयति-**नन्वेवमिति**। **अध्ययनप्रतिषेधेनेति**। '**न स्त्रीशूद्रौ वेदमधीयाताम्**', '**स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा**' इत्यादिश्रुतिस्मृतिभिरिति शेषः। इष्टापत्तौ दोषमाह-**यजेतेति**। **उद्देश्यसमर्पकत्वेनेति**। स्वर्गकामनावत्पुरुषं प्रत्येव यागादेर्विधानादिति भावः। **साधितत्वादिति**। षष्ठ इति शेषः।

त्यम्। अधिकारः साधितो, न तु स्वातन्त्र्येण, 'न स्त्री स्वातन्त्र्यमर्हती' त्यादिना तस्य निषिद्धत्वात्, स्वातन्त्र्येण कर्तृत्वे प्रयोगद्वयस्यापि वैगुण्यापत्तेश्च। (१)यजमानकर्तृकप्रयोगे पत्नीकर्तृकाज्यावेक्षणादिलोपात्, पत्नीप्रयोगे च यजमानकर्तृकाज्यावेक्षणादिलोपात्। अतो दम्पत्योः सहा·

---

"न स्त्री स्वातन्त्र्यमर्हती" त्यस्य पूर्वांशः पिता रक्षति कौमारे भर्ता रक्षति यौवने। पुत्रस्तु स्थाविरे भावे" इति मानवो बोध्यः।

"रक्षेत्कन्यां पिता विन्नां पतिः पुत्राश्च वार्धके।
अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित्स्त्रियाः"
"बालया वा युवत्या वा वृद्धया वापि योषिता।
न स्वातन्त्र्येण कर्तव्यं कार्यं किञ्चिद्गृहेष्वपि॥
बाल्ये पितृवशे तिष्ठेत् पाणिग्राहस्य यौवने।
पुत्राणां भर्त्तरि प्रेते न भजेत स्वतन्त्रताम्"

इत्यादीनां परिग्रहः। तस्य स्वातन्त्र्यस्य। ननु नैतत्स्त्रीणां कर्मण्यधिकारनिषेधकम्, तद्वाचकपदाभावात्; न च सामान्यतः स्वातन्त्र्यनिषेधेन कर्मण्यपि तत्प्रवृत्तिः सम्भवत्येवेति वाच्यम्। पूर्वोदाहृतवाक्यस्य विषयादौ स्वातन्त्र्यनिषेधपरत्वात्।

अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम्।
विषयेषु च सज्जन्त्यः संस्थाप्या आत्मनो वशे॥

इति पूर्वस्मिन् श्लोके विषयादौ स्वातन्त्र्येण प्रवृत्ताया एव तस्या निरोधस्योक्तत्वेन तद्विषयत्वस्यैवास्यापि वक्तव्यत्वात्, प्रकरणस्यास्य स्त्रीरक्षणमात्रबोधनपरत्वाच्चेत्यत आह—स्वातन्त्र्येणेति। स्वातन्त्र्येण कर्तृत्वे उभाभ्यामपि परस्परसम्बन्धमन्तरेण पृथक् पृथक् प्रयोगकर्तव्यतापत्त्या यजमानकर्तृके प्रयोगे पत्न्यभावेन पत्नीकर्तृकाणामङ्गानां लोपः, एवं पत्नीकर्तृके प्रयोगे यजमानाभावेन तत्कर्तव्यपदार्थानां लोप इति कर्मणोऽङ्गाभावप्रयुक्तं वैगुण्यमापद्येतेत्यर्थः। तदेवोपपादयति—यजमानेत्यादिना। पत्नीकर्तृकेति। 'पत्न्यवेक्षितमाज्यं भवति' इत्यादिना ये विहिताः पत्नीकर्तृकाज्यावेक्षणादयः तेषां लोपादित्यर्थः। आदिपदेन अन्वारम्भणादयो गृह्यन्ते। एवमुत्तरत्रापि। न च क्रयेण पत्नीं यजमानं वा सम्पाद्याज्यावेक्षणादिकमनुष्ठीयतामिति वाच्यम्। क्रयक्रीतयोः पत्नीत्वस्य वा यजमानत्वस्य वा असम्भवात्। "पत्युर्नो यज्ञसंयोगे" इति सूत्रेण पत्नीशब्दस्य यजधातूत्तरशानच्प्रत्ययान्तस्य च यजमानशब्दस्य फलभोक्तृत्वरूपस्वामित्ववाचकत्वात् परिक्रीतस्य च स्वामित्वाभावस्य षष्ठे निरूपितत्वात्।

"क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते।
न सा दैवे न सा पित्र्ये दासीं तां कवयो विदुः"

इत्यादिना क्रीतायाः पत्नीत्वस्य निषिद्धत्वाच्च। अतश्च स्वातन्त्र्येण नास्ति कर्मण्यधिकारः स्त्रियाः, तथापि स्वपतिना सहास्त्येवाधिकार इत्याह—अत इति। ननु तस्या

---

१ यजमानप्रयोगे

धिकारः। सहाधिकारत्वे च यजमानविधयैव पत्न्या अपि कार्यसिद्धेर्न ज्ञानं विना तस्या अधिकारानुपपत्तिः।

'पाणिग्रहणात्तु सहत्वं कर्मसु, तथा पुण्यफलेषु' इति वचनेन स्त्रिया अधिकारनिर्णयाच्च निषादस्थपतेरिवाध्ययनविधिसिद्धज्ञानविरहिणोऽपि 'एतया निषादस्थपतिं याजयेत्' इति वचनान्निषादेष्टयाम्।

निषादस्थपतिशब्दे हि निषादं स्थपति चेति कर्मधारयो न तु निषादानां स्थपतिरिति षष्ठीतत्पुरुषः, षष्ठ्यर्थे लक्षणापत्तेः। एतावांस्तु विशेषः—निषादस्याध्ययनसिद्धज्ञानाभावेन एतस्यैव विधेस्तत्कर्मौपयिकज्ञानाक्षेपकत्वम्। पत्न्यास्तु तादृशज्ञानाभावेऽपि यजमानेन सहाधिकारात्तस्य च तादृशज्ञानवत्त्वात्तेनैव च तस्याः कार्यसिद्धेर्नोत्तरक्रतुविधीनां ज्ञानाक्षेपकत्वम्।

अध्ययननिषेधेन तत्सिद्धविद्याभावात् "न ह्यविद्वान् विहितोऽस्ति" इति न्यायेन अविदुष्यास्तस्याः अधिकारनिषेधात् अधिकाराभावस्तदवस्थ एवेत्यत आह—**यजमानविधयैवेति**।

**ननु** आज्यावेक्षणादीनां अन्यथानुपपत्त्या तावत्स्वेवाङ्गेषु अधिकारकल्पनेऽपि न सर्वत्राधिकारकल्पने प्रमाणमस्तीत्यत आह—**पाणिग्रहणादिति**। कर्मस्वित्यविशेषेण कर्मपदश्रवणेन सर्वेष्वेवाङ्गप्रधानेषु साहित्यमवगम्यते, नाज्यावेक्षणादिमात्रे। किञ्च पुण्यफलेष्वपि साहित्यं गम्यते। तच्च फलभोक्तृत्वं कर्मस्वधिकारमन्तरा न सम्भवतीति सर्वेष्वपि कर्मस्वधिकारस्सिद्ध एवेति। एवञ्च वैतानिके कर्मणि स्त्रीणां सहाधिकारः तद्धर्मवत्सु च केषुचित् एकाग्निसाध्येषु कर्मसु सहाधिकारः, न तु सन्ध्यावन्दनजपादौ स्वतन्त्राधिकारिके स्त्रिया अधिकारः नापि सावित्रीव्रतादौ पुंसोऽधिकारः, पूर्तादौ तु स्वातन्त्र्येण द्वयोरधिकार इति सिद्धम्। तत्र दृष्टान्तमाह—**निषादेति**। एवञ्च यथा निषादस्थपतेः वचनबलात् निषादेष्ट्यामधिकारोऽङ्गीक्रियते, एवमत्रापि वचनबलादेवाधिकाराङ्गीकरणमिति भावः।

तदेव निरूपयति—**निषादेति**। **अयं भावः—"(१) रौद्रं वास्तुमयं चरुं निर्वपे"**दितीष्टिं काञ्चन विधाय श्रूयते **"एतया निषादस्थपतिं याजये"**दिति। वास्तुमयं वास्तुशाकप्रकृतिकमित्यर्थः। केचित्तु वास्तुमध्य इति पठन्ति। तदा वास्तुमध्ये गृहमध्य इत्यर्थः। तत्र निषादस्थपतिशब्दस्य निषादानां स्थपतिरिति तत्पुरुषसमासमाश्रित्य त्रैवर्णिकेष्वेव यो निषादानामधिपतिः तदधिकारिकेयमिष्टिः? उत निषादश्चासौ स्थपतिश्चेति कर्मधारयमङ्गीकृत्य निषाद एव सन् यः स्थपतिः, तदधिकारिका? इति सन्दिह्य षष्ठीतत्पुरुषाङ्गीकरणे पूर्वपदे लक्षणा भवति। अतो लक्षणानापादककर्मधारयाङ्गीकरणमेव वरम्। यद्यप्यस्मिन् पक्षे विधेः ज्ञानाक्षेपकशक्तिकल्पनारूपं गौरवं भवति तथापि फलमुखत्वात् न तत् दोषायेति। **निषादः** ब्राह्मणात् शूद्रायामुत्पन्नः शूद्रकर्माधिकृतो

१. मैत्रायणीयसंहितायां "वास्त्वमयं रौद्रं चरुं निर्वपेत् यत्र रुद्रः प्रजाः शमयेत, वास्त्वो वै वास्त्वं जातं वास्त्वमयं खलु वै रुद्रस्य, स्वेनैवेनं भागधेयेन शमयति। तया निषादस्थपतिं याजयेत्" इति श्रुतम्। भाष्ये तु वास्तुमध्ये रौद्रं चरुं निर्वपेदित्येव पाठोऽङ्गीकृतः॥

ये तु पत्नीमात्रकर्तृकाः पदार्थाः आज्यावेक्षणादयस्ते ज्ञानं विनाऽशक्यानुष्ठाना इति तद्विधीनां तदाक्षेपकत्वं स्वीक्रियते। तत्सिद्धमध्ययनविधिसिद्धज्ञानस्याधानसिद्धाग्निमत्तायाश्चोत्तरकर्मसु अधिकारिविशेषणत्वमिति।

एवं सामर्थ्यस्यापि अधिकारिविशेषणत्वम्। असमर्थं प्रति विध्यप्रवृत्तेः। 'आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी' ति न्यायात्।

तच्च सामर्थ्यं काम्ये कर्मणि अङ्गप्रधानविषयम्। न ह्यङ्गासमर्थः प्रधानमात्रसमर्थश्च काम्ये कर्मण्यधिकारी। प्रधानविधेरङ्गविध्येकवाक्यतापन्नस्य साङ्गकर्मसमर्थं प्रत्येव प्रवृत्तेः। यथाविनियोगमधिकारात्। यदि हि समर्थं प्रत्येव प्रवृत्तौ कयाचित् श्रुत्या विरोधः स्यात् तदाऽसमर्थस्याप्यधिकारः स्यात्। न च विरोधोऽस्ति। स्वर्गकामश्रुतेः समर्थं प्रत्येव प्रवृत्तौ विरोधाभावात्। प्रत्युतासमर्थं प्रति प्रवृत्ता प्रधानविधेरङ्गवाक्यैकवाक्यतया प्रतिपन्नस्याङ्गसाहित्यस्य बाधापत्तेः। नित्यवत् श्रुतानामङ्गानां पाक्षिकत्वप्रसङ्गाच्च। अतः साङ्गे प्रयोगे समर्थस्यैव काम्ये कर्मण्यधिकारः।

---

जातिविशेषः। नन्वेवं यथात्र विधिना ज्ञानाक्षेपात् तदौपयिकज्ञानसम्पादनेन निषादस्याधिकारोऽङ्गीक्रियते, एवमेव स्त्रिया अपि विधिना ज्ञानाक्षेपात् तदर्थमध्ययनं कुतो न स्यात्? इत्यत आह—**एतावांस्त्विति**। एवञ्च सत्यां गतौ नोत्तरक्रतुविधीनां ज्ञानाक्षेपकत्वशक्तिकल्पनं युक्तिसहमिति भावः।

एवञ्च ये यजमानकर्तृकाः पदार्थाः, तत्र यजमानज्ञानेनैव कार्यसिद्धावपि ये तावत् यजमानेनासम्भवदनुष्ठानाः पत्नीमात्रकर्तृकाः तत्रागत्या तद्विधेर्ज्ञानाक्षेपकत्वशक्तिरङ्गीक्रियत एवेत्याह—**ये त्विति**। नैतावता सर्वेषामुत्तरक्रतुविधीनां ज्ञानाक्षेपकत्वशक्तिकल्पनमुचितमिति भावः। अग्निविद्ययोरधिकारिविशेषणत्वनिरूपणमुपसंहरति—**तत्सिद्धमिति**।

एवमग्निविद्ययोरधिकारिविशेषणत्वमुपवर्ण्य इदानीं सामर्थ्यस्यापि तदुपपादयति—**एवमिति**। **विध्यप्रवृत्तेरिति**। अत एवासमर्थत्वात् तिरश्चामनधिकारः, देवादीनां विग्रहाद्यभावादेव नाधिकारः इत्यादि बोध्यम्। **अङ्गप्रधानविषयमिति**। सकलाङ्गानुष्ठानसमर्थः प्रधानानुष्ठानसमर्थश्च यः स एव काम्ये कर्मण्यधिकरोतीत्यर्थः। तदेवाह—**न त्विति**। कुत एतत्? अत आह—**प्रधानेति**। **अयमाशयः**—अङ्गविध्येकवाक्यतापन्नः प्रधानविधिः प्रयोगविधिरित्युक्तम्। स च यथा प्रधानमनुष्ठापयति एवमङ्गविषयेऽप्यनुष्ठापको भवतीति यत्किञ्चिदङ्गलोपेऽपि प्रधानस्य सर्वाङ्गसाहित्याभावेन वैगुण्यापत्त्या फलानुत्पत्तिप्रसङ्ग इति। **यथाविनियोगमिति**। साङ्गस्यैव प्रधानस्य फले विनियोगात् तत्रैव चाधिकारोऽपि वक्तव्य इत्यर्थः। ननु यथा नित्यनैमित्तिकयोः यथाशक्त्युपबन्धानुसारेण सङ्कोचोऽङ्गीक्रियते, तद्वत् काम्ये ऽपि कुतो न स्यात्? अत आह—**यदि हीति**। ननु मास्तु कस्यापि प्रमाणस्य बाधः, तथापि सर्वाङ्गोपसंहाराभावे कस्यापि प्रमाणस्य बाधो विधेः आनर्थक्यं वा यावत् न स्यात् तावत् दुःखात्मके कर्मणि कथं प्रवृत्तिः स्यात् प्रेक्षावताम्? अत आह—**प्रत्युतेति**। ननु षोडशिग्रहणाग्रहणवत् विकल्पाङ्गीकारे कथमास्यन्तिको बाधः? अत आह—**नित्यवदिति**।

नित्यकर्मणां तु अङ्गेषु यथाशक्तिन्यायः। तानि हि यावज्जीवश्रुत्या यावज्जीवं कर्तव्यत्वेन चोदितानि। न च यावज्जीवं केनापि साङ्गः प्रयोगः कर्तुं शक्यते। अतो नित्यकर्मसु प्रधानमात्रसमर्थोऽधिकारी। अङ्गानि तु यावन्ति कर्तुं शक्यन्ते तावन्ति कार्याणीत्यास्तां (१)बहूक्त्या, सूरिभिः पराक्रान्तत्वात्। तत्सिद्धं फलस्वाम्यबोधको विधिरधिकारविधिरिति।

तदेवं निरूपितं चतुर्विधभेदनिरूपणेन विधेः प्रयोजनवदर्थपर्यवसानम्॥

इत्यापदेवकृतौ मीमांसान्यायप्रकाशे पूर्वभागः

---

काम्यकर्मवैलक्षण्यं नित्यकर्मणां दर्शयति-**नित्यकर्मणामिति**। **अङ्गेष्विति**। **अयमाशयः**-अङ्गानां हि विधिविहितत्वादुपादानम्, निमित्तानुरोधाद्वा त्यागः, उभयानुग्रहार्थं वा शक्तं प्रत्युपादानमशक्तं प्रति त्यागः, इति त्रय्येव गतिर्भवितुमर्हति। तत्र उभयानुग्रहो यदि सम्भवति तर्हि स एव न्याय्यः। सम्भवश्च यथाशक्ति व्रीहीन् सम्पादयेत् यथाशक्ति अवहन्यादित्यादि। तत्रापि न सर्वेषामङ्गानां यथाशक्तिन्यायविषयत्वं सम्भवति, किन्तु यानि शक्तौ सत्यां प्रयोगविधिरनुष्ठापयति तेषामेव, न तु कालादीनाम्, तेषामनुपादेयत्वात्। नचैवं एकस्यैव विधेः शक्तं प्रत्यनुष्ठापकत्वम् अशक्तं प्रति न इति वैरूप्यापत्तिरिति वाच्यम्। यथाशक्ति कुर्यादित्येकेनैव वचनेनोभयोपसङ्ग्रहादिति। **तानि** अङ्गानि। **यावज्जीवश्रुत्येति** "**यावज्जीवमग्निहोत्रं जुहोति**" "**यावज्जीवं दर्शपूर्णमासाभ्यां यजेत**" इत्यादि श्रुत्येत्यर्थः। **यावज्जीवं कर्तव्यत्वेनेति**। श्रुतिघटकं यावज्जीवपदं '**धातुसम्बन्धे प्रत्ययाः**' इत्यधिकारे "**यावति विन्दजीवो**"रित्यनेन विहितणमुल्प्रत्ययान्तम्। तेन च जीवनस्य प्राणधारणरूपस्य स्ववाक्यसमभिव्याहृतधात्वर्थं प्रति निमित्तता गम्यते। निमित्तस्य चायं स्वभावः यत् स्वाव्यवहितोत्तरकालानुष्ठापकत्वम्। अतश्च निमित्तवशात् साङ्गस्यैव यागादेः कर्तव्यतोच्यते तदा सर्वाङ्गोपसंहारासमर्थं पुरुषं प्रति विधेरप्रवृत्तेः निमित्तसङ्कोचापत्तिः। न चेष्टापत्तिः, निमित्तस्य उद्देश्यरूपत्वेन प्राधान्यात् गुणभूतनैमित्तिकानुसारेण प्रधानसङ्कोचस्यान्याय्यत्वात्। अतः प्रधानानुरोधेनाङ्गसङ्कोच एव युक्त इति। तदेतदाह-**यावज्जीवं केनापीत्यादिना**। यद्यप्यत्र जीवनरूपनिमित्तसम्बन्धात् नैमित्तिकत्वमेव प्रतीयते। तथापि अस्मिन् शास्त्रे नियतनिमित्तकानां नित्यत्वव्यवहारः, अनियतनिमित्तकानां नैमित्तिकत्वव्यवहारः इति तदनुसारेणैवेदमुक्तमिति ध्येयम्। **सूरिभिः पराक्रान्तत्वादिति**। **तन्त्ररत्नन्यायरत्नमालादौ पार्थसारथिमिश्रप्रभृतिभिः**, निपुणतरमुपपादितत्वादित्यर्थः। अधिकारिविधिनिरूपणमुपसंहरति- **तत्सिद्धमिति**।

प्रथमोपक्रान्तं विधेः प्रयोजनवत्त्वमुपसंहरति-**तदेवमिति**॥

**इति वेदविशारदेन महामहोपाध्यायेन चिन्नस्वाम्यपरनाम्ना वेङ्कटसुब्रह्मण्यशर्मणा विरचितायां सारविवेचिन्याख्यायां मीमांसान्यायप्रकाशव्याख्यायां पूर्वभागः॥**

---

१, तावत्।

॥ श्रीः ॥

# अथोत्तरभागः

## ( मन्त्रप्रयोजननिरूपणम् )

**मन्त्राणां च प्रयोगसमवेतार्थस्मारकतयाऽर्थवत्त्वम् । न तु तदुच्चारणमदृष्टार्थम्, दृष्टे संभवति अदृष्टस्याऽन्याय्यत्वात् । न च दृष्टस्य प्रकारान्तरेणापि संभवान्मन्त्राम्नानमनर्थकम् । मन्त्रैरेव स्मर्तव्यमिति नियमविध्याश्रयणात् ।**

## ( नियमविधिनिरूपणम् )

**साधनद्वयस्य पक्षप्राप्तौ अन्यतरस्य साधनस्याप्राप्ततादशायां यो विधिः स नियमविधिः । यदाहुः—**

---

॥ श्रीविश्वेशश्शरणं मम ॥

वामाङ्गविलसद्वामावक्त्रनिक्षिप्तचक्षुषम् ।
आश्रयं सर्वजगतामनाश्रयमुपास्महे ॥

एवं विधेः प्रयोजनवदर्थविधायकत्वेन प्रयोजनवत्त्वं निरूप्येदानीं क्रमप्राप्तं मन्त्राणां प्रयोजनवत्त्वनिरूपणमारभते-**मन्त्राणामिति** । प्रयोगोऽनुष्ठानं तत्समवेतः तद्विषयीभूतो योऽर्थः, तत्स्मारकत्वेनेत्यर्थः । कर्मणां स्मरणपूर्वकानुष्ठानस्यैव सर्वत्र विहितत्वात् तादृशस्मारकपदार्थापेक्षायां मन्त्राणामेव तादृशस्मृतिजनकत्वेनोपयोगस्य समुचितत्वादिति भावः । ननु न मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वं सम्भवति । तत्तत्प्रकरणपठितानामपि प्रयोगासमवेतार्थाभिधायिनां मन्त्राणां बहूनां सत्वात्, हुंफडादिस्तोभमन्त्राणां अर्थस्यैवाभावाच्च, जपादिमन्त्राणां केवलादृष्टार्थत्वस्य द्वादशे वक्ष्यमाणत्वाच्च । अतश्च तेषामदृष्टार्थत्वेऽवश्याभ्युपगन्तव्ये अवैरूप्याय सर्वेषामदृष्टार्थत्वमेव युक्तम्, न तु केषाञ्चित् दृष्टार्थत्वं, केषाञ्चिददृष्टार्थतेति वैरूप्याङ्गीकरणमुपपत्तिमदित्याशङ्कयाह—**न त्विति** । तत्र हेतुमाह-**दृष्ट इति** । एवञ्च यत्र दृष्टप्रयोजनमर्थप्रकाशनरूपं न सम्भवति तत्रादृष्टार्थत्वं हुंफडादिष्वङ्गीक्रियताम् । नैतावता सर्वत्रादृष्टार्थता युक्ता । द्वादशाधिकरणं तु न जपमन्त्राणामदृष्टार्थतापरम्; किन्तु तेषामपि अर्थप्रकाशनरूपदृष्टार्थतैव, प्रकाशनं परमदृष्टार्थमित्येवं परमिति भावः । ननु यद्यर्थस्मरणमेव प्रयोजनं मन्त्राणाम्, तर्हि तत् ध्यानेन उपद्रष्टृवचनादिना वा सिध्यत्येवेति मन्त्राम्नानं व्यर्थमेव भवेदित्याशङ्कयाह-**न चेति । नियमविध्याश्रयणादिति** । एवञ्च नियमविधिबलात् नियमादृष्टं किञ्चिदुत्पद्यत इत्यङ्गीक्रियते, नैतावता मन्त्रोच्चारणस्यादृष्टार्थतेति भावः ॥

## ( नियमविधिनिरूपणम् )

अथ प्रसङ्गात् विधित्रयमपि निरूपयिष्यन् अत्र उपस्थितनियमविधिनिरूपणाय नियमविधिं प्रथमतो लक्षयति-**साधनद्वयस्येति** । अत्र द्वयशब्दोऽनेकमात्रपरः । द्वयोर्बहूनां वा साधनानां विकल्पेनैकस्मिन् कार्ये प्राप्तौ सत्यां तत्र एकस्य साधनस्य प्राप्तिदशायां

**विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति ।**
**तत्र चान्यत्र च प्राप्ते परिसङ्ख्येति गीयते ॥ इति ।**

---

या इतरस्याप्राप्तिः, तत्प्रापको विधिर्नियमविधिरित्यर्थः । अत्र विधित्रयलक्षकं वार्तिकं प्रमाणयति-**विधिरिति** । एतद्विध्यप्रवृत्तिदशायां प्रमाणान्तरेणात्यन्तमप्राप्तमर्थं यः प्रापयति सोऽप्राप्तप्रापकत्वात् **विधिरित्युच्यते** । यत्र प्रागेतद्वचनात् पाक्षिकी प्राप्तिः सम्भाव्यते तत्राप्राप्तिपक्षं यो नियमयति स विधिः नियामकत्वात् **नियम** इत्युच्यते । अत्रोभयत्रोदाहरणं मूल एवस्पष्टीकृतम् । **तत्र चान्यत्र चेति** सप्तमीद्वयेन साकं प्राप्ते इत्यस्य वैयधिकरण्येन सामानाधिकरण्येन च द्वेधा अन्वयस्सम्भवति । तत्र वैयधिकरण्येनान्वये तस्मिन् अन्यस्मिंश्च शेषिणि एकः शेषः यदि प्राप्नुयात्, तत्रान्यतरशेषिणः परिसंख्येति शेषिपरिसंख्या । सामानाधिकरण्येनान्वये तु स चान्यश्च शेषः एकस्मिन् शेषिणि प्राप्नुयाच्चेत् अन्यतरस्य शेषस्य परिसंख्या शेषपरिसंख्येति । एवञ्च एकस्मिन् अङ्गे प्रधानद्वयसम्बन्धे नियतप्राप्ते, एकस्मिंश्च प्रधाने अङ्गद्वयसम्बन्धे नियतप्राप्ते सति अन्यतरनिवृत्तिफलको विधिः **परिसंख्याविधिरिति** फलितम् ।

**आद्यस्योदाहरणम्—"इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते"** इति । अत्र इमामगृभ्णन् रशनामिति लिङ्गादेव रशनाप्रकाशनरूपात् मन्त्रस्य सन्निहितायामश्वरशनायामिव गर्दभरशनायामपि प्राप्तौ सत्यां विधिरत्यन्ताप्राप्तमर्थं प्रापयति । किन्तु गर्दभरशनातो मन्त्रस्य निवृत्तिं बोधयति ।

**द्वितीयस्य तूदाहरणम्**-गृहमेधीयाधिकरणे पञ्चमे पक्षे **"आज्यभागौ यजती"ति** आज्यभागयोः तदितराङ्गानां च युगपदेकस्मिन् गृहमेधीये प्राप्तौ आज्यभागातिरिक्ताङ्गानां परिसंख्या । तथा हि-चातुर्मास्येषु साकमेधाख्यं तृतीयं पर्व । तच्च दिनद्वयानुष्ठेयम् । तत्र प्रथमदिनानुष्ठेयतया गृहमेधीयेष्टिं विधाय श्रुतं **"आज्यभागा यजति यज्ञतायै"** इति वाक्यमुदाहृत्य विचारितं दशमसप्तमे । तत्राऽष्टौ पक्षा उक्ताः ।

तत्र दर्शपूर्णमासतोऽतिदेशप्राप्तयोराज्यभागयोः अनुवादमात्रमिदमिति-**प्रथमः पक्षः**

अनुवादमात्रत्वे वैयर्थ्यापत्तेः तत्परिहारार्थं तत्र विहितयोरेवाज्यभागयोः इहाभ्युदयकारित्वकल्पनया पुनर्विधानं आज्यभागवत्त्वसादृश्येन प्रकृतिनियमार्थमिति-**द्वितीयः** ।

उभाभ्यामपि विधानेऽदृष्टार्थत्वापत्तेः **"यज्ञताया"** इति स्तुतिदर्शनात् प्रकृतगृहमेधीयस्तुत्यर्थं सार्थवादकं वचनमिति-**तृतीयः** ।

असम्बन्धिवाचनिकगुणव्यवहितेन गृहमेधीयवाक्येन एकवाक्यत्वाभावेन तत्स्तावकत्वानुपपत्तेः अभ्यासात् आज्यभागधर्मककर्मान्तरविधानार्थमिति **चतुर्थः** ।

आज्यभागशब्दस्य धर्मलक्षणार्थत्वापत्तेः कर्मान्तरविध्ययोगात् अतिदेशेनाज्यभागयोः तदितरेषु च प्रयाजादिषु प्राप्तेषु आज्यभागपुनःश्रवणं तदितरप्रयाजादिपरिसंख्यार्थमिति **पञ्चमः** ।

अस्य च चोदकात् पूर्वं प्रवृत्त्यभावात् फलतः परिसंख्यात्वानुपपत्तेः प्राप्तपरिसंख्या-

( अपूर्वविधिनिरूपणम् )

**अस्यायमर्थः-यस्य यदर्थत्वं प्रमाणान्तरेणाप्राप्तं तस्य तदर्थत्वेन यो विधिः सोऽपूर्वविधिः। यथा-'यजेत स्वर्गकामः' इत्यादिः। यागस्य हि स्वर्गा-**

या एव वक्तव्यत्वात् तस्याश्च त्रिदोषग्रस्तत्वात् उपदिष्टाज्यभागवर्जं प्रयाजादीनामतिदेशः इति षष्ठः।

विकृतिभावनायाः उपकारापेक्षायां लाघवात् एकस्यैवातिदेशस्य कल्पनीयतया तस्य च प्रयाजादीतराङ्गविषयकत्ववत् आज्यभागविषयकत्वस्याप्युपपत्तौ तद्वर्जने प्रमाणाभावात् प्राकृतसर्वाङ्गविषयकस्यातिदेशस्यानेन विशेषविषयकेणोपसंहारः सासदश्यवत् इति सप्तमः।

उपसंहारस्य क्रत्वङ्गभूतविशेषपदार्थगोचरत्वेन अतिदेशागोचरत्वात् क्लृप्तोपकारैः प्राकृतैराज्यभागादिभिः गृहमेधीयस्य नैराकांक्ष्यात् तस्यापूर्वत्वज्ञापनार्थमिदं वचनम्। अप्राप्तपरिसंख्यात्वाच्च न त्रैदोष्यमपीति—**सिद्धान्तः**। एवञ्चाज्यभागयोस्तदितराङ्गाणां च युगपत् प्राप्तौ सत्यां इतराङ्गपरिसंख्येति। पञ्चमपक्षे प्राप्तपरिसंख्यात्वात् स्वार्थत्यागादिरूपं त्रैदोष्यम्। अष्टमपक्षे-चाऽप्राप्तपरिसंख्यात्वान्न तदिति ध्येयम्।

**तत्र चान्यत्र च प्राप्ते** इत्यमुमेव च पाठं मनसि निधायोदाहृतं **वार्तिककारैः**, व्याख्यातश्च **न्यायसुधायाम्**। अत एव **दीक्षितेन्द्रैः** मीमांसकमूर्धन्यैः "**प्राप्तिश्शेषिद्वये चेदि**"ति विधिरसायनमूलव्याख्यानावसरे—"**तत्र चान्यत्र चेति सप्तम्योः प्राप्त इति सप्तम्याश्च सामानाधिकरण्यविवक्षायां गर्दभरशनाग्रहणादिपरिसङ्ख्यायामेव लक्षणं न स्यात्। वैयधिकरण्येनान्वयविवक्षायां शंखिडोक्तराङ्गकलापादिपरिसंख्यायामेव न स्यात्। अत एव न्यायसुधायां 'तत्र चान्यत्र च प्राप्ते' इत्यस्य शेषान्तरपरिसंख्यायां सामानाधिकरण्येन शेष्यन्तरपरिसंख्यायां वैयधिकरण्येन च योजना दर्शिता**" इत्यादि **सुखोपयोजिन्यामुक्तम्**। इमामेव च योजनां मनसि निधाय **सिद्धान्तलेशसङ्ग्रहे तैरेव** विधिविचारावसरे "**द्वयोश्शेषिणोरेकस्य शेषस्य वा, एकस्मिन् शेषिणि द्वयोश्शेषयोर्वा नित्यप्राप्तौ शेष्यन्तरस्य शेषान्तरस्य वा निवृत्तिफलको विधिस्तृतीयः**" इत्येव परिसङ्ख्यालक्षणमुक्तम्। एवञ्च सति तत्र चान्यत्र च प्राप्तौ इति बहुत्र पाठ उपलभ्यते स लेखकप्रमादकृत इति भाति। स्वयमेव वार्तिकार्थं विवृणोति-**अस्येति**।

प्रथमपादं व्याचष्टे-**यस्येति**। **प्रमाणान्तरेणेति**। एतद्वाक्यातिरिक्तेन वैदिकवाक्यान्तरेण प्रत्यक्षादिना वेदातिरिक्तेन प्रमाणेन चेत्यर्थः। **तदर्थत्वेनेति**। अप्राप्तार्थप्रापकत्वेनेत्यर्थः। अत्र च एतद्विध्यप्रवृत्तिदशायामिति विध्यन्तराप्रवृत्तिसहकृतैतद्विध्यप्रवृत्तिदशायामिति चाप्राप्तिविशेषणं बोध्यम्। एवमेव नियमपरिसंख्याविध्योः पाक्षिकाप्राप्तौ समुच्चित्य प्राप्तौ च विशेषणं योजनीयम्। एवञ्च विध्यन्तराप्रवृत्तिसहितायां केवलायां वा तत्तद्विध्यप्रवृत्तौ यस्य अप्राप्तिरात्यन्तिकी तत्प्रापको यो विधिः **सोऽपूर्वविधिः**, तन्मात्रविध्यप्रवृत्तदशायां विध्यन्तराप्रवृत्तिसहकृतैतद्विध्यप्रवृत्तिदशायां वा या अवहन-

र्थत्वं न प्रमाणान्तरेण (१)प्राप्तम्, किन्त्वनेनैव विधिनेति भवत्ययमपूर्वविधिः।

( नियमविधिनिरूपणम् )

पक्षेऽप्राप्तस्य तु यो विधिः स नियमविधिः। यथा 'व्रीहीनवहन्ति' इत्यादिः। अनेन हि विधिना अवघातस्य न वैतुष्यार्थत्वं बोध्यते, अन्वयव्यतिरेकसिद्धत्वात्। किन्तु नियमः, स चाप्राप्तांशपूरणम्; वैतुष्यस्य हि नानोपायसाध्यत्वात् यस्यां दशायामवघातं परिहृत्योपायान्तरं ग्रहीतुमारभते तस्यां दशायामवघातस्या(२)प्राप्तत्वेन तद्विधानात्मकमप्राप्तांशपूरणमेवानेन विधिना क्रियते। अतश्च नियमविधावप्राप्तांशपूरणात्मको नियम एव वाक्यार्थः। पक्षेऽप्राप्ततादशायामवघातविधानमिति यावत्। न त्वपूर्वविधाविवात्यन्ताप्राप्ततया विधानमिति॥

---

नादेः पाक्षिकी अप्राप्तिः, तादृशाप्राप्तांशपूरको यो विधिः स **नियमविधिः**, तन्मात्रविषयप्रवृत्तिदशायां विषयन्तराप्रवृत्तिसहकृतैतद्विषयप्रवृत्तिदशायां वा या उभयोः समुच्चित्य प्राप्तिः तत्रान्यतरव्यावर्तको यो विधिः स **परिसंख्याविधिः** इति फलितम्। एतेषामपि लक्षणानां क्वचिदव्याप्त्यादिदोषदूषितत्वात्—यद्धर्मावच्छिन्नप्रतियोगिताकाभावाभावत्वं यस्य शास्त्रस्य तात्पर्यविषयतावच्छेदकतापर्याप्त्यधिकरणं तस्य तद्धर्मवन्नि**यमविधित्वम्**, यद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वं यस्य शास्त्रस्य तात्पर्यविषयतावच्छेदकतापर्याप्त्यधिकरणं तस्य शास्त्रस्य **तद्धर्मवत्परिसंख्याविधित्वम्**, नियमपरिसंख्यातिरिक्तफलकविधित्वमपूर्व**विधित्व**मिति विधित्रयलक्षणं परिष्कृतं मीमांसाकौस्तुभे मन्त्राधिकरणे। तत्पदप्रयोजनानि च तत्रैवोक्तानि तत एवावगन्तव्यानि विस्तरभयान्नात्र विलिखितानि।

( नियमविधिनिरूपणम् )

**पक्षेऽप्राप्तस्येति**। कदाचित् प्राप्तस्य कदाचिदप्राप्तस्येत्यर्थः। वितुषीभावरूपं प्रयोजनं हि अवहननेन नखविदलनेन अश्मकुट्टनादिना वेत्यनेकैरुपायैः साधयितुं शक्यते। तत्र नखविदलनादिभिः वितुषीभावं यदा सम्पादयितुमारभते, तदा अवहननस्य प्राप्त्यभावात् अस्ति तस्य कादाचित्की प्राप्तिः, तस्याश्च दशायां या अप्राप्तिः तदंशेऽप्यवघातप्रापको यो विधिः स नियमविधिरित्यर्थः। तदुपपादयति—**अनेन हीति**। **अन्वयेति**। साधनान्तराभावसहकृतावघातसत्त्वे वैतुष्यसत्त्वम्; तादृशावघाताभावे वैतुष्याभावः, इत्यन्वयव्यतिरेकेत्यर्थः। **अप्राप्तांशपूरणमिति**। नखविदलनादिदशायां योऽवघातांशोऽप्राप्तः तत्प्राप्तिसम्पादनमित्यर्थः। एवञ्च नापूर्वविधाविव सर्वथा अत्यन्ताप्राप्तप्रापकत्वं विधेः, किन्तु यः पक्षे अप्राप्तोऽशः तन्मात्रपूरकत्वमिति। एतेन सर्वांशे अप्राप्तप्रापकापूर्वविध्यपेक्षया किञ्चिदंशेऽप्राप्तप्रापकनियमविधौ लाघवमपि सूचितं भवति।

---

१. ज्ञायते  २. स्यांशेऽप्रा

( परिसंख्याविधिनिरूपणम् )

**उभयस्य युगपत् प्राप्तौ इतरव्यावृत्तिपरो विधिः परिसङ्ख्याविधिः। यथा 'पञ्च पञ्चनखा भक्ष्याः' इति। इदं हि वाक्यं न भक्षणविधिपरम्, तस्य रागतः प्राप्तत्वात्। नापि नियमपरम्, पञ्चनखापञ्चनखभक्षणस्य युगपत्प्राप्तेः पक्षेऽप्राप्त्यभावात्। अत इदं(१)पञ्चातिरिक्तपञ्चनखभक्षणनिवृत्तिपरमिति भवति परिसङ्ख्याविधिः।**

---

( परिसंख्याविधिनिरूपणम् )

उत्तरार्धं व्याचष्टे-**उभयस्येति**। अत्र च युगपत् प्राप्तिरौत्सर्गिकी, न नियता, अतश्च "नानृतं वदे" दित्यादौ, सत्यानृतयोः एकस्मिन् वदनव्यापारे युगपदप्राप्तावपि न विरोधः। **इतरव्यावृत्तिपर इति**। एवञ्च नियमविधौ अप्राप्तांशपूरणरूपस्य नियमस्य विधेयगतत्वेन सन्निहितत्वात स एव वाक्यार्थः फलं वा, नान्यनिवृत्तिः, तस्याः चरमोपस्थितत्वात, अविधेयगतत्वेन विप्रकृष्टत्वाच्च। परिसंख्यायां तु द्वयोरपि नित्यप्राप्तत्वेन स्वरूपप्राप्तेर्नियमस्य वा फलत्वायोगात् इतरनिवृत्तिरेव वाक्यार्थः फलं वा। अयमेव भेदो नियमविधिपरिसंख्याविध्योरिति सूचितम्। **परिसंख्याविधिरिति**। परिसंख्या वर्जनबुद्धिः, तज्जनको विधिः परिसंख्याविधिरित्यर्थः। उदाहरति-**यथेति**। **पञ्च पञ्चनखा इति**। नखपञ्चकविशिष्टा शल्यकगोधाश्वाविट्कूर्मशशाः पञ्चैवेत्यर्थः। इदं हि वाक्यं श्रीमद्वाल्मीकिरामायणे भगवन्तं श्रीरामचन्द्रं प्रति वालिनोक्तम्। "ब्रह्मक्षत्रेण राघव। शल्यकः श्वाविधो गोधा शशः कूर्मश्च पञ्चमः" इति श्लोकावशिष्टांशः। कुतोऽयमपूर्वविधिर्न भवति? अत आह—**इदं हीति**। शास्त्रप्रवृत्तेः पूर्वमेव भक्षणस्य रागतः प्रवृत्तत्वात, रागतः पूर्वं शास्त्रप्रवृत्त्या विधिविषयत्वाङ्गीकारे पूर्वप्रवृत्तेः फलकल्पनापत्तिरूपगौरवापत्तेरिति भावः। अस्तु तर्हि नियमविधित्वम्, परिसंख्यापेक्षया तत्र लाघवात्, अत आह—**नापीति**। **पक्षेऽप्राप्त्यभावादिति**। पाक्षिके सतीत्यनेन वस्तुनः कदाचित् प्राप्तौ कदाचिच्चाप्राप्तौ सत्यामेवाप्राप्तांशपूरकत्वस्य नियमविधिव्यापारत्वादिति विवक्षितम्। यद्यप्यत्र शशादीनां भक्षणे कदाचित् पक्षेऽपि प्राप्तिः सम्भवतीति नियमविधित्वमपि सम्भाव्यते तथापि नियमविधित्वे शशाद्यभक्षणे दोषप्रसक्तेः भक्षणस्य च फलकल्पनारूपगौरवापत्त्या पूर्वोत्तरपर्यालोचनया चास्य प्रकरणस्याभक्ष्यनिरूपणरूपत्वावगमेन तद्बाधापत्तेश्च नियमविधित्वं परित्यज्य परिसंख्याविधित्वमेवाङ्गीकृतमिति ध्येयम्। अत्रापञ्चनखेत्यस्य पञ्चातिरिक्तपञ्चनखेत्यर्थो बोध्यः। अन्यथा यथाश्रुतार्थस्वीकारे वाक्यस्यास्य अपञ्चनखव्यावृत्तावेव तात्पर्यस्याङ्गीकार्यतया पञ्चपदवैयर्थ्यापत्तिः श्वादिपञ्चनखभक्षणे दोषाप्रसक्त्या तत्र प्रायश्चित्तविधानानुपपत्तिश्च प्रसज्येयाताम्। अत एव च **विधिरसायने** "पूर्वोक्तपप्रकारः प्रभवति" इति श्लोकव्याख्यानाव-

---

१. अत्रापञ्चनखभक्षणनिवृत्तिपरमित्येव पाठः उपलभ्यते मुद्रितपुस्तकेषु प्रायशः तथापि अपञ्चनखेत्यस्य पञ्चातिरिक्तपञ्चनखेत्येव व्याख्यातव्यतया क्लिष्टकल्पनापत्तेः पञ्चातिरिक्तपञ्चनखेत्येव पाठं मैसूरपुरे तैलङ्गाक्षरेषु मुद्रितपुस्तके लिखितपुस्तकेषु चोपलब्धवद्भिरस्माभिः स एव पाठो मूले निवेशितः।

( परिसंख्याभेदाः )

**सा च परिसङ्ख्या द्विविधा-श्रौती लाक्षणिकी चेति । तत्र 'अत्र ह्येवावपन्ति' इत्यत्र श्रौती परिसङ्ख्या । एवकारेण (१)पवमानातिरिक्तस्तोत्र्यावृत्तेरभिधानात् ।**

---

सरे "तत्फलभूतायाः शशादिपञ्चकव्यतिरिक्तपञ्चनखभक्षणनिवृत्तेः" इत्येवोक्तम् । किञ्चास्य वचनस्यापञ्चनखभक्षणमात्रनिवर्तकत्वे वालिनोऽपि पञ्चनखत्वेन तद्भक्षणेऽपि दोषानापत्त्या तेन स्वस्याभक्षणीयत्वकथनं अत एव च कारणात् स्वस्याहन्तव्यत्वबोधकं **"सोऽयं पञ्चनखो हतः"** इत्यादिकं च सर्वथा विरुद्धमापद्येत । अतः पूर्वोक्तविधयैव व्याख्येयम् ॥

( परिसंख्याभेदाः )

परिसंख्यां विभजते-**सा चेति** । यत्र वाचकः शब्दः श्रूयते नञ् एवकारो वा सा श्रौतीपरिसंख्येत्यर्थः । **लाक्षणिकीति** । यत्र शक्तशब्दो नास्ति, निवृत्तिबोधनं तु लक्षणया, सा लाक्षणिकीत्यर्थः । आद्यमुदाहरति-**अत्र ह्येवावपन्तीति** । **अत्रायं विषयः**:-ज्योतिष्टोमनामके सोमयागे सर्वसोमयागप्रकृतिभूते सन्ति चत्वारः स्तोमाः-त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंशः, इति । प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रम् । तद्गता संख्या स्तोमशब्देनोच्यते । ज्योतिष्टोमविकृतिभूतेषु सोमयागेषु मध्ये केचन प्रकृतितो विवृद्धस्तोमकाः,-'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्' 'त्रिणवेनौजस्कामम्' इत्यादयः । केचनाविवृद्धस्तोमकाः 'त्रिवृदग्निष्टुदग्निष्टोम' इत्यादयः । तत्र यत्र क्रतौ स्तोमविवृद्धिराम्नाता, तत्र संख्यासम्पत्त्यर्थं स्थानान्तरादानीतानां साम्नां (२)पवमानस्तोत्रेषु तदितरस्तोत्रेषु च समुच्चयेनावापः प्राप्तः, एवं यत्राविवृद्धस्तोमकेषु प्राकृतसमसंख्याकस्तोमकता, तन्यूनस्तोमकता वा, तत्र विशेषविहितानां साम्नां निवेशार्थं यतः कुतश्चिदनियमेन सामोद्वापः प्राप्तः । तत्रेदमुच्यते-**"त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप्, अत्र ह्येवावपन्ति, अत एवोद्वपन्ति"** इति । **अस्यार्थः**--यज्ञस्य त्रीणि गायत्रीबृहत्यनुष्टुब्रूपाणि छन्दांसि उदरस्थानीयानि । अतः एतत्त्रितयातिरिक्तेषु पवमानस्तोत्रसम्बन्धिषु छन्दस्सु पवमानातिरिक्तेषु स्तोत्रेषु वा न सामावापः कार्यः । एवमुद्वापोऽपि एतेभ्य एव कार्य इति । एवञ्च-"अत्र ह्येवावपन्ति" इति वाक्यं विवृद्धस्तोमकेषु पवमानातिरिक्तस्तोत्रेषु सामावापपरिसंख्यापकम् । "अत एवोद्वपन्ती"ति तु अविवृद्धस्तोमकेषु गायत्र्याद्यधिकरणनियमपरमिति ।

**वस्तुतस्तु** आवापविधिरेव विवृद्धस्तोमकेषु परिसंख्यापरः अविवृद्धस्तोमकेषु नियमपरः । उद्वापस्त्वर्थसिद्धोऽनुवाद एवेत्यन्यत्र विस्तरः । **आवापः** प्रक्षेपः । **उद्वापः** उद्धारः निष्कासनमिति यावत् । अतश्चात्र एवकारेण श्रुत्यैवान्यनिवृत्तेरभिधानादियं श्रौती परिसंख्येति । अत्र यद्यपि पवमानशब्दो न श्रूयते तथापि गायत्र्यादीनां तत्रैव सत्वात्

---

१. गायत्रीबृहत्यनुष्टुबितरव्यावृत्तेः इति कस्मिंश्चित् लिखितपुस्तके पाठः ।

२ ज्योतिष्टोमे सन्ति द्वादशस्तोत्राणि-बहिष्पवमानमेकं स्तोत्रम्, चत्वार्याज्यानि, चत्वारि पृष्ठानि, माध्यन्दिनपवमानमेकम्, यज्ञायज्ञियमेकमिति । तेषां तथैव विकृतावतिदेशेन प्राप्तौ तत्र श्रुताधिकसंख्यासम्पत्त्यर्थं सर्वेष्वपि स्तोत्रेष्वविशेषात् आवापः प्राप्तः इति ।

"पञ्च पञ्चनखा भक्ष्या" इत्यत्र तु लाक्षणिकी । इतरनिवृत्तिवाचकस्य पदस्याभावात् । अत एवैषा त्रिदोषग्रस्ता । दोषत्रयं च श्रुतहानिरश्रुतकल्पना प्राप्तबाधश्चेति । श्रुतस्य पञ्चनखभक्षणस्य हानादश्रुतपञ्चातिरिक्तपञ्चनखभक्षणनिवृत्तिकल्पनात् प्राप्तस्य च पञ्चातिरिक्तपञ्चनखभक्षणस्य बाधादिति । अस्मिंश्च दोषत्रये दोषद्वयं शब्दनिष्ठम्, प्राप्तबाधस्तु दोषोऽर्थनिष्ठ इति दिक् ।

तत्सिद्धं मन्त्रैरेव स्मर्तव्यमिति नियमविध्याश्रयणान्न मन्त्राम्नानमनर्थकम् । अतश्च युक्तं मन्त्राणां प्रयोगसमवेतार्थस्मारकतयार्थवत्त्वम् ।

तत्र ये मन्त्रा यत्र पठितास्तेषां तत्र यद्यर्थप्रकाशनं प्रयोजनं सम्भवति तदा तत्रैव विनियोगः । येषां तु न सम्भवति तेषां यत्र सम्भवति तत्रोत्कर्षः, यथा-पूषाद्यनुमन्त्रणमन्त्राणामित्युक्तम् । येषां क्वापि न सम्भवति तदुच्चारणस्य त्वगत्याऽदृष्टार्थत्वम् । सर्वथापि तु तेषां नानर्थक्यमिति ॥

---

तद्व्यतिरिक्तविषयिण्येवेयं परिसंख्येति विज्ञायते । तत्रापि न बहिष्पवमानस्तोत्रेऽयं सामावापस्सम्भवति, तत्र सामैकत्वस्य प्रत्यक्षतो विहितत्वात् । अतः परिशेषात् माध्यन्दिनपवमानार्भवपवमानविषय एव । तत्रापि साम्नामेवावापः, नर्चाम् । तासां तु प्रकृतितोऽतिदिष्टानामेव अभ्यासेन संख्यासम्पत्तिरित्याद्यूह्यम् । एवं च सति यदत्रार्थसंग्रहव्याख्यातृभिः शिवयोगिभिक्षुभिः "अत्र ह्येवावयन्ति" इति स्वकपोलकल्पितं पाठमवलम्ब्य अवयन्तीति अवजानन्तीत्यर्थः । गायन्तीति यावत् , इति व्याख्यातम् , यदपि कैश्चित् एतद्ग्रन्थव्याख्याने-पवमानसंज्ञकनानास्तोमलक्षणानि सामानि, स्तोमाख्यमन्त्राणाम् , इत्यादिकमुक्तं तत्सर्वं सम्प्रदायागतशास्त्रीयपदार्थाज्ञानमूलकमित्युपेक्षितव्यम् ।

लाक्षणिकीमुदाहरति-**पञ्चेति** । अत एव लाक्षणिकत्वादेव । **प्राप्तस्येति** । रागत इति शेषः ।

प्रसङ्गागतं विधित्रयनिरूपणं परिसमाप्य प्रकृतमुपसंहरति-**तत्सिद्धमिति** । तत्र मन्त्राणां प्रयोजनवत्त्वप्रकारं विविच्य दर्शयति-**तत्रेति** । अर्थवतां मन्त्राणां मध्ये इत्यर्थः । **यत्र** यस्य कर्मणः प्रकरणे । **तत्रैव** तस्मिन्नेव कर्मणि । **इत्युक्तमिति** । लिङ्गनिरूपणावसर इति शेषः । **क्वापि न संभवतीति** । प्रकरणे मुख्यार्थाभावेऽपि गौणार्थे विनियोगसम्भवे तत्र विनियोगः, यथा-"त्वं ह्यग्ने प्रथमो मनोता" इत्यादौ । अत्र हि अग्नीषोमीयपशुप्रकरणे पाठात् तत्र च केवलाग्निदेवताकस्य यागस्याभावात् सामान्यसम्बन्धबोधकप्रमाणाभावेन चोत्कर्षस्याप्यसम्भवात् प्रकृत एव कर्मणि अग्निपदस्याग्नीषोमलक्षणया निवेशः । लक्षणाया अपि च यत्रासम्भवः, नास्त्युत्कर्षेऽपि सामान्यसम्बन्धबोधकं प्रमाणं, प्रकरणे च न मुख्यो न वा लाक्षणिकोऽर्थः, तेषामेव परमदृष्टार्थत्वमङ्गीक्रियते, यथा-जपादिमन्त्राः इत्यर्थः । **अगत्या** इत्यनेन एवमगतिकस्थले क्वचिददृष्टार्थत्वाङ्गीकारेऽपि सत्यां गतौ न युक्तमदृष्टार्थत्वाश्रयणमिति सूचितम् । मन्त्रनिरूपणमुपसंहरति-**सर्वथापीति** । स्वाध्यायविधिपरिगृहीतत्वेनाल्पशोऽप्यानर्थक्योक्तेरयुक्तत्वादिति भावः ॥

( नामधेयनिरूपणम् )

नामधेयानां विधेयार्थपरिच्छेदकतयार्थवत्त्वम् । तथा हि- 'उद्भिदा यजेत पशुकामः' इत्यत्र उद्भिच्छब्दो यागनामधेयम् । तेन च विधेयार्थपरिच्छेदः क्रियते । अनेन हि वाक्येनाप्राप्तत्वात्फलोद्देशेन यागो विधीयते । यागसामान्यस्य चाविधेयत्वाद्यागविशेष एव विधीयते । तत्र कोऽसौ विशेषः ? इत्यपेक्षायां उद्भिच्छब्दादुद्भिद्रूपो याग इति ज्ञायते । उद्भिदा यागेनेति सामानाधिकरण्येन नामधेयान्वयात् ।

तस्य च यजिना सामानाधिकरण्यं न नीलोत्पलादिशब्दवत् । तत्र हि उत्पलशब्दस्यार्थादुत्पलादन्यो नीलशब्दस्य वाच्योऽर्थोऽस्ति नीलगुणः ।

---

( नामधेयनिरूपणम् )

एतावता मन्त्राणां प्रयोजनवत्त्वमुपवर्ण्य इदानीमवसरप्राप्तं कर्मनामधेयानां प्रयोजनवत्त्वमुपपादयितुमारभते-**नामधेयानामिति** । ननु नामधेयानां न धर्मे प्रामाण्यं सम्भवति, तेषां त्र्यंशानन्तःपातित्वात् , तथा हि-न तावदेतेषां फलबोधकत्वम् , कामशब्दाद्यभावेन तृतीयान्तत्वेन च फलप्रतिपादकत्वासम्भवात् । नापि साधनबोधकत्वम् , समानपदोपात्तेन धात्वर्थेनावरूद्धायां भावनायां पदान्तरोपात्तानां तथात्वासम्भवात् । नापि गुणविधायकत्वेनार्थभावनेतिकर्तव्यतान्तर्भावः, उद्भिदादिपदवाच्यस्य कस्यचित् गुणस्याप्रसिद्धेः । नापि विधेयार्थस्तावकत्वेन प्रामाण्यम् , उद्भिदादिपदमात्रेण कस्या अपि स्तुतिबुद्धेरनुदयात् । नापि मन्त्रान्तर्भावः, उद्भिदादिपदेषु मन्त्रप्रसिद्धेरभावात् । अतोऽन्यस्य कस्यापि धर्मप्रामाण्यप्रकारस्याभावात् न नामधेयानां धर्मप्रामाण्यसम्भव इत्यत आह-**विधेयार्थपरिच्छेदकतयेति** । विधेयो यो धात्वर्थो यागादिः क्रियारूपः तत्परिच्छेदकतया इतरेभ्यो व्यवच्छेदकतयेत्यर्थः । विधिविषयीभूतधात्वर्थनिष्ठवैजात्यबोधकत्वेनेति यावत् । तेन व्रीह्यादिपदेषु नातिव्याप्तिः । उदाहरति-**तथा हीति** । परिच्छेदनस्वरूपमेवाह-**अनेन हीति** । **यागसामान्यस्य चाविधेयत्वादिति** । विधेयत्वं चाप्रवृत्तप्रवृत्तिविषयत्वरूपम् , तत्र च यावन्न विशेषोऽवगम्यते, तावत् क्वचिदपि पुरुषस्य प्रवृत्त्यनुदयात् विधेः प्रवर्त्तकत्वरूपं विधायकत्वमेव भज्येतेति भावः । अतश्च यजेतेत्यनेन यागविशेषस्य विहितत्वात् विशेषस्वरूपजिज्ञासायां उद्भित्पदं तादृशविशेषस्वरूपबोधकमित्याह-**कोऽसाविति** । ननु अत्रोद्भित्पदं यागवाचकमेवेत्यत्र किं प्रमाणम् ? अत आह-**सामानाधिकरण्येनेति** । एवञ्च उद्भिद्यजिपदयोः सामानाधिकरण्येनैकार्थवाचित्वावगमात् तदन्यथानुपपत्त्या उद्भित्पदस्य यागवाचित्वमङ्गीकर्तव्यमेवेति भावः ।

नन्वत्र सामानाधिकरण्याङ्गीकारे उभयत्रापि भिन्नेन प्रवृत्तिनिमित्तेन भाव्यम् । भिन्नप्रवृत्तिनिमित्तयोरेकार्थबोधकत्वस्यैव सामानाधिकरण्यात् , प्रकृते च उद्भिच्छब्दवाच्यस्यार्थान्तरस्य कस्यचित् प्रसिद्धस्याभावात् प्रवृत्तिनिमित्तस्यैवाभावेन तद्भेदस्य दूरापास्तत्वात् । अतः कथमत्र सामानाधिकरण्यम् ? इत्यत आह-**तस्य चेति** । उद्भिच्छब्दस्येत्यर्थः । **नीलगुण इति** ।

लक्षणया तु नीलशब्दस्य द्रव्यपरत्वेन सामानाधिकरण्यम्। उद्भिच्छब्दस्य तु यज्यवगतयागविशेषान्नान्यो वाच्योऽर्थोऽस्ति, विशेषवाचित्वात्तस्य। अतश्चार्थान्तरवाचित्वाभावेन न नामधेयस्य नीलशब्दवत् सामानाधिकरण्यम्, किं तर्हि? 'वैश्वदेव्यामिक्षे'त्यत्रामिक्षाशब्दवत्। वैश्वदेवीशब्दस्य हि देवतातद्धितान्तत्वात्तद्धितस्य च 'सास्य देवता' इति सर्वनामार्थे स्मरणात्, सर्वनाम्नां चोपस्थितविशेषवाचित्वेन विशेषपरत्वम्। तत्र कोऽसौ वैश्वदेवीशब्दोपात्तो विशेषः? इत्यपेक्षायां आमिक्षापदसान्निध्यादामिक्षारूपो विशेष इत्यवगम्यते। यथाहुः—

आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः।

---

"अन्वयव्यतिरेकाभ्यां यो यमर्थं न मुञ्चति।
स एव तस्य वाच्योऽर्थो गुणं चैष न मुञ्चति"॥

इत्यरुणाधिकरणवार्त्तिकोक्तरीत्या नीलशब्दस्य गुण एव शक्तिः। न तु तद्विशिष्टद्रव्ये, विशिष्टे शक्तिकल्पनायां गौरवादिति भावः। यद्येवमुभयोर्भिन्नार्थकत्वात् कथं सामानाधिकरण्यमित्यत आह—लक्षणया त्विति। यत्र द्रव्यप्रतीतिरप्यावश्यकी तत्र सा लक्षणयापि भवितुमर्हतीति न तदर्थं शक्तिकल्पनमिति भावः। प्रकृते तद्वैपरीत्यमाह—उद्भिदिति। वैश्वदेव्यामिक्षेति। तप्ते पयसि दध्न्यासिक्ते सति तत्पयो द्विधा परिणमति–घनीभूतत्वेन द्रवीभूतत्वेन च। तत्र यत् घनीभूतं तदामिक्षापदवाच्यम्। यत् द्रवीभूतं तत् वाजिनम्। अत्र प्रथमा तृतीयान्ततया विपरिणम्यते, यजेतेत्यध्याह्रियते, विश्वदेवदेवताकेनामिक्षाद्रव्यकेण यागेनेष्टं भावयेदिति वाक्यार्थः। आमिक्षाशब्दवदिति। यथा वैश्वदेवीशब्दोपात्तविशेषसमर्पकत्वेनामिक्षाशब्दस्य तेन सह सामानाधिकरण्यं तद्वदित्यर्थः। वैश्वदेवीशब्दस्य च कथं विशेषवाचित्वम्? अत आह-देवतातद्धितान्तत्वादिति। सामान्यस्य त्यागविषयत्वासम्भवेन प्रवृत्तिविशेषाजनकत्वेनाकिञ्चित्करत्वात्।

"नैव हि द्रव्यमात्रस्य तद्धितैर्देवतोच्यते।
अस्य शब्दाभिधेयस्य विशेषस्यैव देवता"॥

इति वार्तिकोक्तरीत्या तद्धितघटकसर्वनाम्ना द्रव्यविशेषस्यैवोक्तत्वात् युक्तं वैश्वदेवीशब्दस्य विशेषपरत्वमिति भावः। ननु तद्धितान्तपदेनैव द्रव्यविशेषस्याप्युक्तत्वात् आमिक्षापदवैयर्थ्यापत्तिरित्यत आह—तत्रेति। एवञ्च तद्धितान्तपदेन देवतोपसर्जनकद्रव्यविशेषप्रत्यये सञ्जाते कः पुनरसौ द्रव्यविशेष इत्याकाङ्क्षोपजायते। उत्पन्नायां चाकाङ्क्षायां स्ववाक्योपात्तमामिक्षापदमामिक्षारूपविशेषसमर्पकम्। अतश्च नात्र सामान्यविशेषभूतयोरर्थयोर्विशेषणविशेष्यभावः, किन्तु शब्दयोरेव स इत्याद्याशयः।

तत्र वार्तिकं प्रमाणयति—आमिक्षामिति। अत्रैवकारो भिन्नक्रमः। एषः "सास्य देवता" इत्यधिकारे विहितः अण्प्रत्ययरूपः तद्धित एव देवतायुक्तमामिक्षारूपं

आमिक्षापदसान्निध्यात्तस्यैव विषयार्पणम् ॥ इति ।

तथा—

श्रुत्यैवोपपदस्यार्थः सर्वनाम्ना(१)भिधीयते ।
तदर्थस्तद्धितेनैवं त्रयाणामेकवाच्य(२)ता ॥ इति ।

तस्मात् यथा वैश्वदेवीशब्दोपात्तविशेषसमर्पकत्वेनामिक्षापदस्य वैश्वदेवीशब्देन सामानाधिकरण्यम्, एवं सामान्यस्याविधेयत्वाद्यज्यवगतयागविशेषसमर्पकत्वेन नामधेयस्य यजिना सामानाधिकरण्यम् । तत्सिद्धं नामधेयानां विधेयार्थपरिच्छेदकतयाऽर्थवत्त्वम् । यथाहुः—

'तदधीनत्वाद्यागविशेषसिद्धेः' इति ।

नामधेयत्वं च निमित्तचतुष्टयात्—मत्वर्थलक्षणाभयात्, वाक्यभेदभयात्, तत्प्रख्यशास्त्रात्, तद्व्यपदेशाच्चेति ।

---

द्रव्यविशेषमभिधत्त इत्यर्थः । नन्वेवं तद्धितेनैवामिक्षोक्तौ आमिक्षापदवैयर्थ्यमित्याशङ्क्याह—आमिक्षापदेति । सन्निहितार्थविशेषवाचित्वेन विहितस्य तद्धितस्य तत्समर्पकपदापेक्षायां आमिक्षापदेन तत्समर्पणं क्रियत इत्यर्थः । तस्य तद्धितस्य विषयार्पणमेवेत्यन्वयः । तद्धितोपपदसर्वनाम्नामेकार्थत्वे वार्तिकोदाहृतां वृद्धसम्मतिं स्वयमुदाहरति—श्रुत्यैवेति । उपपदस्य आमिक्षारूपस्य योऽर्थः सः वृत्तिघटकेन 'अस्यै' ति सर्वनाम्ना श्रुत्यैवाभिधीयते, तदर्थ एव च तद्धितेनेति त्रयाणां तद्धितोपपदसर्वनाम्नामेकमेव वाच्यमित्यर्थः ।

दृष्टान्तं प्रकृते सङ्गमयति—तस्मादिति । सामानाधिकरण्यमिति । एवञ्च यत्रार्थद्वारको विशेषणविशेष्यभावः तत्रैव प्रवृत्तिनिमित्तैकार्थवृत्तित्वरूपसामानाधिकरण्यापेक्षा; संज्ञायास्तु संज्ञान्तरविशेषात् स्वविषयव्यावर्तकत्वमिति नैवंविधसामानाधिकरण्यापेक्षा, किन्तु तुल्यविभक्तिकनिर्देशमात्रमत्र सामानाधिकरण्यमिति भावः ।

इदानीं नामधेयानां प्रयोजनवत्त्वनिरूपणमुपसंहरति—तत्सिद्धमिति । अर्थवत्त्वम् प्रयोजनवत्त्वम् । अर्थवत्त्वे वार्तिकं प्रमाणयति—तदधीनेति । वार्तिके नामधेयस्य सार्थक्यप्रतिपादनप्रकरणस्थमिदं वाक्यम् । ननु विहितविधानासम्भवेन एतद्विधिविहितस्य यागस्य विध्यन्तरविहितेभ्यो यागेभ्यो भेदस्य प्रतीतत्वात् धातुत एव चानुष्ठानयोग्ययागविशेषसिद्धेः नामधेयवैयर्थ्यमित्याशङ्कायामाह—तदधीनत्वादिति । नामधेयाधीनत्वादित्यर्थः । अयमाशयः—यद्यपि अप्रवृत्तप्रवर्तनात्मकविधिविषयत्वान्यथानुपपत्तिपर्यालोचनया यागविशेषसिद्धिः, तथापि कोऽसौ विशेषः इति जिज्ञासायां तन्निर्धारणस्य नामधेयाधीनसिद्धित्वात् तादृशार्थनिर्धारकत्वेन नामधेयानामर्थवत्त्वमिति ।

एवं नामधेयानामर्थवत्त्वं निरूप्येदानीं नामधेयत्वापादकं हेतुं निरूपयति—नामधेयत्वं चेति । निमित्तचतुष्टयादिति । अनेन यत् कैश्चित् पञ्चमं नामधेयत्वे निमित्तमुक्तमुत्पत्तिशिष्टगुणबलीयस्त्वरूपं तत् न सङ्गतमिति वक्ष्यमाणमिह स्फोरितम् ।

---

१. सर्वनाम्नः. प्रतीयते . २ वाक्यता.

( मत्वर्थलक्षणाभयात् कर्मनामधेयत्वनिरूपणम् )

**तत्र "उद्भिदा यजेत पशुकाम" इत्यत्र उद्भिच्छब्दस्य यागनामधेयत्वं मत्वर्थलक्षणाभयात्। तथा हि—**

**उद्भिच्छब्दस्य गुणसमर्पकत्वे यागानुवादेन तावन्न (१)गुणविधानं युज्यते, फलपदानर्थक्यापत्तेः। न चानेन वाक्येन फलं प्रति यागविधानं (२)तस्मिंश्च गुणविधानं युज्यते, वाक्यभेदापत्तेः।**

**नापि गुणफलसम्बन्धविधानं सम्भवति, परपदार्थविधानेन विप्रकृष्टा-**

---

( मत्वर्थलक्षणाभयात् कर्मनामधेयत्वनिरूपणम् )

तत्र तावत् प्रथमं निमित्तमुदाहरति-**उद्भिदेति**। उद्भित्संज्ञकेन यागेन पशुरूपं फलं भावयेदिति वाक्यार्थः। नन्वत्र उद्भिच्छब्दस्य गुणसमर्पकत्वे सम्भवति किमर्थमप्रवृत्तिविशेषकरनामधेयत्वाङ्गीकरणमित्यत आह-**मत्वर्थलक्षणाभयादिति**। गुणविधित्वस्वीकारे मत्वर्थलक्षणाङ्गीकरणरूपो यो दोषः तद्भयादित्यर्थः। गुणसमर्पकत्वे मत्वर्थलक्षणारूपदोषापत्तिमेवोपपादयति-**तथा हीति**।

उद्भिद्यते उर्ध्वं विदार्यते भूमिरनेनेति व्युत्पत्त्या भूमेरूर्ध्वविदारणसाधनं खनित्रादिः पूर्वपक्षेऽर्थो वेदितव्यः। **यागानुवादेनेति**। सोमेन यजेतेत्यनेन यो विहितो ज्योतिष्टोमः तदुद्देशेनेत्यर्थः। यद्यपि ताण्डके षष्ठेऽध्याये अग्निष्टोमविधानात् एकोनविंशे चोद्भिद्वलभिदादीनां द्वन्द्वानां क्रतूनां विधानात् मध्ये च साद्यस्क्रादीनां बहूनां क्रतूनां विधानेन तैः व्यवधानात् अत्र प्रकरणशङ्कैव नोदेतीत्यप्रकृतस्य यागस्योद्देश्यत्वकथनं न युक्तम्, तथापि षष्ठे विहितस्याप्यग्निष्टोमस्य दक्षिणादिविधानार्थं षोडशेऽध्याये पुनरुपादानात् तदुत्तरपठितानामेकाहादीनामप्युदाहरणत्वादुपस्थितिरस्तीत्यभिप्रायेदमुक्तं वार्त्तिकादौ; तदेवात्रापि ग्रन्थकृतानूदितमिति वेदितव्यम्। **फलपदानर्थक्यापत्तेरिति**। यागानुवादेन गुणविधाने यागस्यैवोद्देश्यत्वेन फलस्य तदनापत्त्या तस्याप्युद्देश्यत्वाङ्गीकारे वा अनेकोद्देश्यत्वनिबन्धनवाक्यभेदापत्त्या परिशेषात् फलपदस्यानर्थक्यमेवापाद्येतेति भावः। नन्वेवं तर्हि वाक्यस्यास्य गुणसमर्पकत्वं फलसमर्पकत्वं चेत्युभयमङ्गीक्रियते, फलोद्देशेन यागविधानात् न फलपदानर्थक्यम्, यागोद्देशेन गुणविधानाच्च न गुणपदानर्थक्यमपीत्याशङ्कायामाह-**न चेति**। **वाक्यभेदापत्तेरिति**। तथात्वे यागस्य तन्त्रेण युगपदुभयत्र सम्बन्धोऽङ्गीकर्तव्यः, स च न सम्भवतीत्युपपादितमधस्तात्। अतो विधेरावृत्तिमङ्गीकृत्य यागेन फलं भावयेत्, सोमेन यागं भावयेत् इत्येव वाक्यार्थोऽङ्गीकार्यः, ततश्च विध्यावृत्तिलक्षणो वाक्यभेद इत्यर्थः।

ननु "दध्नेन्द्रियकामस्य जुहुया"दित्यादौ यथा प्रकृतं अग्निहोत्रहोममाश्रित्य इन्द्रियप्राप्तिरूपफलोद्देशेन दधिरूपगुणविधानमङ्गीक्रियते तद्वदत्रापि प्रकृतं ज्योतिष्टोममाश्रित्य पशुरूपफलोद्देशेनोद्भिद्रूपगुणविधिरङ्गीक्रियताम्, न भविष्यति वाक्यभेदः इत्यत आह-**नापीति**। **परेति**। धात्वर्थादतिरिक्तः यः उद्भिद्गुणरूपः पदार्थः तद्विधानेने-

---

१. गुणो विधीयते. क. २. तस्मिंश्च गुणविधानमिति नास्ति. क.

र्थविधानापत्तेः; धात्वर्थस्य स्वरूपेणाविधानात्तदुद्देशेन चान्यस्य कस्यचिदविधानाद्धातोरत्यन्तपाराथ्र्यापत्तेश्च, यज्यानर्थक्यापत्तेश्च; न हि तदानेन करणं समर्प्यते, गुणस्य करणत्वेनान्वयात्। नापि फलम्, पशोर्भाव्यत्वेनान्वयात्।

अथ गुणफलसम्बन्धविधाने यागस्याश्रयत्वेन सम्बन्ध इति चेत्-न; यजेतेत्यत्र आश्रयत्ववाचकपदाभावात्। अथ सिद्धान्ते करणत्वमिवाश्रयत्वमपि लक्ष्यमिति चेत्-न; आश्रयत्वापेक्षया करणत्वस्य लघुत्वेन तल्लक्षणाया एव युक्तत्वात्। फलाय विधीयमानो गुणो यत्र(१)कारकतामा-

त्यर्थः। ननु "दध्ना जुहोति" इत्यादौ होमोद्देशेन गुणविधानात् विप्रकृष्टार्थविधानमेवाङ्गीक्रियत इति तद्वदत्रापि भवतु, अत आह-धात्वर्थस्येति। अयं भावः—सर्वत्र हि तावत् यद्यपि विधिर्भावनामेव विषयीकरोति तथापि निरवच्छिन्नायास्तस्याः विधिविषयत्वासम्भवात् धात्वर्थमपि तादृशभावनाविशेषणतया स विधत्ते। यत्र तु स प्रमाणान्तरेण प्राप्तः तत्र तदुद्देशेनान्यत् विधत्ते। एवञ्च धात्वर्थस्य विधौ विधेयत्वेन सम्बन्धो मुख्यः कल्पः, उद्देश्यत्वेन सम्बन्धस्ततो जघन्यः कल्पः, उभयथाप्यसम्बन्धोऽत्यन्तजघन्यः; प्रकृते च विधेयत्वस्य गुणसंक्रान्तत्वात् उद्देश्यत्वस्य च फलनिष्ठत्वात् धात्वर्थस्योभयथापि सम्बन्धाभावेनात्यन्तजघन्यता आपद्येतेति। अत्यन्तपाराथ्र्यापत्तेरिति। धातोः स्वार्थमुच्चारणाभावात् पश्वद्भिःसम्बन्धविधानार्थं विधिप्रत्ययस्यावश्यकत्वेन केवलस्य तस्य प्रयोगानर्हत्वात् तदर्थमेव धातोरुच्चारणमित्यत्यन्तपाराथ्र्यमित्यर्थः। पाराथ्र्यापत्तेः फलमाह-यजीति। आनर्थक्यापत्तिमेवोपपादयति-न हीति। तदा गुणफलसम्बन्धविध्यङ्गीकारे। अनेन यजिधातुना। फलमिति। समर्प्यत इति शेषः। अत्र फलशब्द उद्देश्यत्वापरपर्यायः। एवंच धात्वर्थस्य भावनायामुद्देश्यत्वेनाप्यन्वयो न भवतीत्यर्थः। पशोरिति। भाव्यस्योद्देश्यानन्यत्वादिति भावः।

ननु गुणफलसम्बन्धविधिस्थले गुणनिष्ठकरणत्वस्यैव फलोद्देशेन विधानात् तस्य निरूपकापेक्षायां धात्वर्थस्यैव तन्निरूपकत्वरूपाश्रयत्वेनान्वयाङ्गीकारात् कथं यज्यानर्थक्यमित्याशङ्कते—अथेति। यागाश्रितेनोद्भिन्निष्ठकरणत्वेन पशून् भावयेदिति वाक्यार्थोऽभिप्रेतः। तथा च धातोरत्यन्तपाराथ्र्यादिको दोषः परिहृियेतेति भावः। समाधत्ते-नेति। यजेतेत्यत्रेति। 'उद्भिदा यजेते'त्यत्र यजिधातोः प्रत्ययस्य च श्रवणात् धातोः यागमात्रवाचित्वात् प्रत्ययेन च विधिभावनयोरभिधानात् तदतिरिक्तस्य च कस्यचिदाश्रयत्ववाचकस्य पदस्याश्रवणादित्यर्थः। यद्येवं तर्हि उत्पत्तिविधिमङ्गीकुर्वतो भवतो मते धात्वर्थस्य कथमन्वयः? करणत्वेनेति चेत्, कथमेतत्? तद्वाचकतृतीयाभावात्। यदि च "प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः" इत्यनुशासनबलात् धातोरेव करणत्वलक्षकत्वमित्युच्येत, तर्हि समाप्याश्रयत्वमेव धातुना लक्ष्यतामित्याशङ्कते-अथेति। तल्लक्षणायाः करणत्वलक्षणायाः। कथं करणत्वस्य लघुभूतत्वम्? अत आह-फलायेति।

१. प्रकारताम्, क.

पद्यते स आश्रयः, तत्त्वं चाश्रयत्वम्। करणत्वं च निष्कृष्टा शक्तिरिति लाघवम्।

किञ्च गुणफलसम्बन्धविधाने करणीभूतो गुणः तन्निष्ठं वा करणत्वं फलोद्देशेन विधेयम्। तत्राद्ये पक्षे करणत्वस्य गुणोपसर्जनत्वेन प्रतीतिर्लक्षणयैव वाच्या। तस्य तृतीयाप्रत्ययार्थत्वात् प्राधान्येनोपस्थितेः।

यदापि गुणनिष्ठं करणत्वं फलोद्देशेन विधेयं तदापि फलभावनायां करणत्वेनान्वययोग्यगुणनिष्ठकरणत्वोपस्थितिर्लक्षणयैव वाच्या। तृती-

---

निरूपितपूर्वमिदम्। निष्कृष्टेति। "विभक्तयो हि कारकशक्तिं निष्कृष्याभिधाय क्रियां विशिंषन्ति" "कारकं चाभिदधत् प्रत्ययः शक्तिमात्ररूपेणाभिदध्यात्, न द्रव्यरूपेण; तस्याकारकत्वात्। यस्यापि द्रव्यं कारकं तेनापि शक्तिर्विशेषणत्वेनावश्यमभ्युपगन्तव्या। तद्रहितद्रव्यव्यापारासम्भवात्। ततश्चाकृत्यधिकरणात् शक्तेरेवाभिधानम्" इति "तस्मात् शक्तिमद्द्रव्यकारकपक्षेऽपि अवश्यं निष्कृष्य शक्तिमात्रं सुप्तिङ्भ्यामभिधेयम्" इति च वार्तिकोक्त्या तृतीयादिविभक्त्यभिहितानां करणत्वादिरूपकारकाणां निष्कृष्टाखण्डशक्तिरूपत्वावगमात् तस्याश्च फलोद्देश्यकगुणनिष्ठकरणतानिरूपकत्वरूपनिर्वचनसापेक्षाश्रयत्वापेक्षया अत्यन्तलघुभूतत्वादित्यर्थः।

करणीभूत इति। दध्नेति तृतीयान्तं दधिपदमत्र श्रूयते। तत्र प्रकृत्यर्थो दधिरूपो गुणः, प्रत्ययार्थः करणत्वम्, तत्र प्रत्ययार्थस्य प्रकृत्यर्थगुणोपसर्जनत्वेनान्वयमङ्गीकृत्य करणत्वविशिष्टस्य दध्नः फलभावनाकरणत्वेनान्वयः, अथ वा प्रकृत्यर्थस्य दध्नः प्रत्ययार्थकरणत्वेऽन्वयमङ्गीकृत्य दधिनिष्ठकरणत्वस्य फलभावनाकरणत्वेनान्वय इति द्वेधाप्यन्वयो भवताङ्गीकर्तुं शक्यः इत्यर्थः। तन्निष्ठं गुणनिष्ठम्। तत्र द्वयोरन्वययोर्मध्ये। आद्यं पक्षं दूषयति-आद्य इति। गुणोपसर्जनत्वेन प्रकृत्यर्थरूपद्रव्यादिविशेषणत्वेन। तस्य करणत्वस्य। प्राधान्येनेति। "प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः तयोस्तु प्रत्ययः प्राधान्येन" इति स्मृत्या प्रत्ययार्थस्य प्राधान्यस्मरणादिति भावः। एवञ्च प्राधान्येनोपस्थितियोग्यस्य करणत्वस्यान्योपसर्जनत्वेनोपस्थितिर्लक्षणामन्तरा न सम्भवतीत्यवश्यमङ्गीकार्या लक्षणेति भावः।

यद्येवं तर्ह्यस्तु द्वितीयः पक्षः, तत्र करणत्वस्य गुणोपसर्जनत्वाभावेन प्राधान्येनैवोपस्थितेः लक्षणाया अभावात् इत्यत आह-यदापीति। सत्यं करणत्वस्य गुणोपसर्जनत्वं नास्ति, तथापि तृतीयाभिहितकरणत्वस्य कारकत्वात्, कारकस्य च साक्षात् क्रिययैवान्वयस्य व्युत्पन्नत्वेन करणत्वेनान्वययोग्यकरणत्वस्य तृतीयातः उपस्थितिर्लक्षणामन्तरा न सम्भवतीत्यस्मिन्नपि पक्षे लक्षणा दुर्वारेत्याह—तदापीत्यादि। ननु तृतीयया शक्त्याभिहितस्यैव करणत्वस्य करणत्वेनान्वयो भवतु, किमर्थं लक्षणेत्यत आह-तृतीयेति। "कारके" इत्यधिकृत्य "साधकतमं करणम्" इति करणसंज्ञाविधानात्, तत्र च "कर्तृकरणयोस्तृतीया" इति तृतीयाविधानात् तादृशतृतीयाभिहितस्य

याभिहितस्य करणकारकस्य क्रियान्वययोग्यस्य करणत्वेनान्वयायोग्यत्वात्। करणशब्देनाभिहितं हि करणकारकं तत्त्वेनान्वययोग्यं न तृतीयाभिहितम्। करणशब्दादिव तृतीयातस्तृतीयोत्पत्तिप्रसङ्गात्। अतश्च करणत्वेनान्वययोग्यगुणनिष्ठकरणत्वोपस्थितिलक्षणयैव वाच्या।

लक्षणया चोपस्थितकरणत्वस्य करणीभूतस्य वा गुणस्य फलभावनायां यत्करणत्वं तदपि लक्षणयैव वाच्यम्, श्रूयमाणया तृतीयया गुणमात्रस्य यागं प्रति करणत्वाभिधानात्।

अत एव (१)तन्त्ररत्ने चतुर्थे करणीभूतगोदोहनादेः पश्वर्थत्वं समभिव्याहा-

---

करणत्वस्य कारकत्वावश्यंभावात् कारकस्य च तस्य क्रियाभिन्नेन करणत्वेनान्वयो न सम्भवतीति भावः। करणकारकस्येति। करणत्वरूपं यत् कारकं तस्येत्यर्थः। ननु नायं नियमस्सम्भवति, बाणेन करणेन हतः, दध्ना करणेन होमः सम्पाद्यते, इत्यादौ करणकारकस्यापि क्रियाभिन्नेन करणत्वेनान्वयस्य शतशस्स्वीकारात्, अत आह—करणशब्देनेति। सत्यमङ्गीक्रियते, परन्तु तन्न तृतीयाभिहितम्, किन्तु करणशब्दाभिहितम्। करणशब्देन हि कृदन्तेन द्रव्योपसर्जनीभूतस्यैव करणकारकस्याभिधानात् युक्तः तस्य पदार्थान्तरेणाप्यन्वयः। तृतीयया तु अन्यानुपसर्जनीभूतस्यैव तस्याभिधानात् न तस्य क्रियातिरिक्तेनान्वयस्सम्भवतीत्यर्थः। तथात्वे अनिष्टमापादयति—करणशब्दादिति। अतोऽपरिहार्या लक्षणेत्युपसंहरति—अतश्चेति।

एवं गुणनिष्ठकरणत्वस्य प्रतीतिर्लक्षणयैव भवितुमर्हतीति निरूप्य तादृशकरणत्वस्यान्वययोग्यं यत् करणत्वं तस्याप्युपस्थितिर्लक्षणयैव वक्तव्येत्याह—लक्षणयेति। ननु गुणफलसम्बन्धविधिस्थले तृतीयावगतकरणत्वस्य धात्वर्थनिरूपितत्वे गुणस्य तत्करणत्वस्य वा यत्फलभावनाकरणत्वं तद्बोधकस्य शब्दस्याभावात् तत्प्रतीतिरेव न स्यात्, न हि तृतीया तल्लक्षिका, तया गुणनिष्ठकरणत्वस्य लक्षितत्वेन लक्षणाद्वयासम्भवात्, इत्यत आह—अत एवेति। एतादृशदोषभियैवेत्यर्थः। गोदोहनादेरिति। "गोदोहनेन पशुकामस्य प्रणयेत्" इत्यादिना विहितानां गोदोहनादीनां गुणानामित्यर्थः। दर्शपूर्णमासप्रकरणे—'चमसेनापः प्रणयेत्' इति अप्प्रणयनाङ्गत्वेन चमसाख्यः पात्रविशेषो दारुनिर्मितो विहितः। यदि पशुरूपफलेच्छा, तदा तदेव प्रणयनं गोदोहनेन कर्तव्यमिति, यस्मिन् पात्रे गौर्दुह्यते तत्पात्रं गोदोहनशब्दार्थः। पश्वर्थत्वं पशुरूपफलार्थत्वम्। समभिव्याहारादिति। अयं हि तत्रत्यो ग्रन्थः—"यद्यपि पशुकामपदसमभिव्याहारात् पुरुषार्थत्वं तस्य, तथापि क्रत्वर्थप्रणयनाश्रयणात् तन्मुखेन क्रतूपकारकत्वं तावदवश्याङ्गीकर्तव्यम्" इति। एवञ्च लक्षणातो बिभ्यद्भिरेव तन्त्ररत्नकारैः गुणफलसम्बन्धविधिस्थले गुणस्य फलाङ्गता समभिव्याहारेणोक्तमिति भावः। अतश्चोद्भिच्छब्दस्य गुणसमर्पकत्वे तद्वाक्यस्य गुणफलसम्बन्धविधायकत्वाङ्गीकारापातात् तत्र च धातुपारार्थ्यादिदोषबहुत्वात् तदपेक्षया वरं गुणविशिष्टधात्वर्थविधिस्वीकरणमि-

---

१. *तन्त्ररत्नम्* श्रीपार्थसारथिमिश्रकृतो व्याख्यानविशेषः श्रीकुमारिलस्वामिकृतायाः टुप्टीकायाः।

यादित्युक्तम् । ततश्च गुणफलसम्बन्धविधाने धातोरत्यन्तपारार्थ्यादिबहुदोषवत्त्वादुद्भिच्छब्दस्य गुणसमर्पकत्वे गुणविशिष्टकर्मविधानमेव स्वीकार्यम्। तथा सति हि यजिना लघुभूतं करणत्वमात्रं लक्ष्यम्। उद्भिच्छब्देन च प्रकृत्यंशेन मत्वर्थमात्रं लक्ष्यमिति गुणफलसम्बन्धविधानाल्लाघवं भवति। धातोरत्यन्तपारार्थ्यादिकं तु न भवत्येव। धात्वर्थस्यैव फलोद्देशेन विधानात्। अतश्चोद्भिच्छब्दस्य गुणसमर्पकत्वे तेन मत्वर्थं लक्षयित्वा गुणविशिष्टकर्मविधानं स्वीकार्यम्—उद्भिद्वता यागेन पशून् भावयेदिति।

कर्मनामधेयत्वे तु उद्भिच्छब्दस्य न मत्वर्थलक्षणा। मुख्ययैव वृत्त्या यजिसामानाधिकरण्येन तस्यान्वयसम्भवात्—उद्भिदा यागेन पशून् भावयेदिति। संभवति च मुख्येऽर्थे न लक्षणा आश्रयितुं युक्ता। सन्निकृष्टविधानं तु समानमेव।

न चैवं 'सोमेन यजेत' इत्यत्रापि सोमपदस्य यागनामधेयत्वापातः, गुणविधित्वे मत्वर्थलक्षणापत्तेरिति वाच्यम्। सोमपदस्य

---

त्याह—ततश्चेति। अस्मिन् पक्षे लाघवमुपपादयति—तथा सतीति। गुणविशिष्टकर्मविधिस्वीकार इत्यर्थः। यजिना यजिधातुना। लघुभूतमिति। आश्रयत्वापेक्षयेति शेषः। एवञ्च गुणफलसम्बन्धविधिपक्षे यजिधातुना गुरुभूतमाश्रयत्वं, उद्भिदेति तृतीयया करणत्वेनान्वययोग्यं करणत्वं धातुना च तदन्वययोग्यं करणत्वं च लक्षणीयम्, धातुपारार्थ्यादिरूपाश्च दोषाः इत्यत्यन्तगौरवम्, गुणविशिष्टकर्मविधिपक्षे यजिधातुना लघुभूतं करणत्वं उद्भिच्छब्देन च मत्वर्थः इत्युभयमेव लक्षणीयम्। धातुपारार्थ्यादिकं तु नास्तीत्यादि बोध्यम्।

तर्हि गुणविशिष्टकर्मविधिरेवाङ्गीक्रियताम्, किमप्रवृत्तिविशेषकरनामधेयत्वाङ्गीकारेण, अत आह—कर्मेति। सत्यमनेकदोषापादकगुणफलसम्बन्धविधानापेक्षया लक्षणाद्वयापादकविशिष्टविध्यङ्गीकरणमेव युक्तम्, तथापि कर्मनामधेयत्वाङ्गीकारे तदपि लक्षणाद्वयं न भवतीत्यस्ति ततोऽपि लाघवमित्याशयः। उद्भिच्छब्दस्येति। अनेनाप्राप्तिस्थले धात्वर्थस्य करणत्वेनैवान्वयात् तादृशकरणत्वस्य धातुनैव लक्षणीयत्वात् सा लक्षणा परमवर्जनीयेति सूचितम्। मुख्ययैवेति। शक्त्यैवेत्यर्थः। तस्य उद्भित्पदार्थस्य। उद्भिदा यागेनेति। उद्भिदभिन्नयागेनेत्यर्थः। यद्यपि मीमांसकमते प्राथमिकबोधवेलायां नामार्थयोः परस्परान्वयो न व्युत्पन्नः, तथापि उद्भित्पदार्थस्य साक्षादेव प्रथमतो भावनान्वये पश्चात् नामधेयस्य परिच्छेद्यापेक्षायां धात्वर्थस्यापरिच्छिन्नस्यानुष्ठानायोगात् परिच्छेदकापेक्षायां पश्चादरुणैकहायनीन्यायेन पाष्ठिकोऽभेदेन परस्परं सम्बन्धः इति ध्येयम्। समानमेवेति। विशिष्टविधिनामधेयत्वपक्षयोरिति शेषः। एवञ्च विशिष्टविधिपक्षे लक्षणादोष एव आपद्यते, नामधेयत्वपक्षे तु सोऽपि नास्तीति सूचितम्।

नन्वेवं गुणविधौ सम्भवत्यपि मत्वर्थलक्षणाभयादेव यदि कर्मनामधेयत्वाङ्गीकरणं, तर्हि "सोमेन यजेत" इत्यत्रापि गुणविधित्वे मत्वर्थलक्षणापत्त्या तदनापादकं सोमप-

लतायां रूढत्वेन यागनामधेयत्वानुपपत्तेरगत्या लक्षणाश्रयणात्। उद्भिच्छब्दस्य तु नैवं वाच्योऽर्थः कश्चित्प्रसिद्धः। उद्भिद्यतेऽनेनेति योगस्य तु गुण इव यागेऽपि फलोद्भेदनकारित्वोपपत्तेः। तत्सिद्धमुद्भिच्छब्दस्य मत्वर्थलक्षणाभयाद्यागनामधेयत्वम्॥

(वाक्यभेदभयात् कर्मनामधेयत्वनिरूपणम्)

'चित्रया यजेत पशुकामः' इत्यत्र चित्राशब्दस्य वाक्यभेदभयात् कर्मनामधेयत्वम्। तथा हि—

---

दस्य कर्मनामधेयत्वमेवाङ्गीक्रियतामित्याशङ्कते-न चैवमिति। लतायां रूढत्वेनेति। उक्तं हि भाष्यकृता-'सोमशब्दः क्षीरिण्यां लतायां प्रसिद्धः' इति,

"श्यामलाऽम्ला च निष्पत्रा क्षीरिणी त्वचि मांसला।
श्लेष्मला वमनी वल्ली सोमाख्या छागभोजनम्"॥

इति चान्यत्र। अयं भावः—अप्रसिद्धस्यैव पदस्य प्रसिद्धपदसमभिव्याहारेणार्थनिर्णयः क्रियते। न तु प्रसिद्धमपि पदं समभिव्याहारमात्रेण लाघवादिना वा स्वार्थादपकृष्यते।

"पदमज्ञातसन्दिग्धं प्रसिद्धैरपृथक्श्रुति।
निर्णीयते निरूढं तु न स्वार्थादपनीयते"

इति न्यायात्। अतश्च दधिसोमादीनामर्थविशेषेऽत्यन्तरूढत्वेन यजिसामानाधिकरण्यस्यैवाभावेन नामधेयत्वाङ्गीकरणं सुदुष्करमिति गत्यन्तराभावात् लक्षणैवाश्रितेति। अगत्येति। नामधेयत्वाङ्गीकरणरूपगतेरभावादित्यर्थः। नन्वेवं उद्भिच्छब्दस्याप्यवयवशक्त्या खनित्रादौ रूढत्वात् यजिसामानाधिकरण्याभावेन यागनामधेयत्वं न स्यात् इत्यत आह—उद्भिद्यत इति। 'भिदिर् विदारणे' इत्यनेन उत्पूर्वकभिद्धातोः ऊर्ध्वविदारणरूपार्थकत्वावगमेऽपि धातूनामनेकार्थत्वात् "वैडूर्यभूमेर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेव" इति प्रयोगात् उत्पादनार्थकत्वस्याप्यवगतेः येनैव रूपेण फलोत्पादकत्वरूपेण गुणे वृत्तित्वं, तेनैव योगेन कर्मण्यपि प्रवृत्तिसम्भवात् दध्यादिपदवत् अर्थविशेषे रूढ्यभावात् अप्रसिद्धार्थकस्य तस्य यजिसामानाधिकरण्येन लाघवानुगृहीतेन कर्मनामधेयत्वाङ्गीकरणमेव युक्तमिति भावः। यथोक्तम्—

विशिष्टविधिपक्षे तु भवेन्मत्वर्थलक्षणा।
सोमादौ गत्यभावात् सा न त्वत्र गतिसम्भवात्॥ इति।

एवञ्च विशिष्टविध्यङ्गीकारे मत्वर्थलक्षणारूपदोषापत्त्या तत्परिहारार्थमेवोद्भित्पदस्य कर्मनामधेयत्वाङ्गीकरणमित्युपसंहरति— तत्सिद्धमिति॥

(वाक्यभेदभयात् कर्मनामधेयत्वनिरूपणम्)

इदानीं यत्र वाक्यभेदभयात् कर्मनामत्वं तदुपपादयति—चित्रयेति। विचित्रद्रव्यकत्वात् चित्रासंज्ञकयेष्टया पशुरूपं फलं भावयेत् इति वाक्यार्थः। ननु चित्राशब्दस्य चित्रगुणवाचकत्वेन लोके प्रसिद्धत्वात् तादृशगुणविशिष्टकर्मान्तरमेव विधीयताम्। अथ वा यत्र कर्मणि द्रव्यमपि प्राप्तं तत्र तदनुवादेन चित्रत्वरूपो गुणो विधीयताम्। प्राप्तकर्मानुवादेन गुणमात्रविधाने वाक्यभेदोऽपि न भवतीति किमर्थं प्रवृत्तिविशेषानापादक-

न तावदत्र गुणविशिष्टयागविधानं संभवति, 'दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यम्' इत्यनेन विहितत्वाद्यागस्य विशिष्टविधानानुपपत्तेः। (१)प्राप्तस्य च यागस्य फलसम्बन्धे गुणसंबन्धे च विधीयमाने वाक्यभेदः।

अथ चित्राशब्दात् चित्रत्वस्त्रीत्वयोः प्रतिपत्तेः स्त्रीत्वस्य च स्वभावतः प्राणिधर्मत्वात् प्रकृते दध्यादिद्रव्यके कर्मणि निवेशायोगान्नानेन वाक्येन

नामधेयत्वाङ्गीकरणमित्याशङ्कां अनूद्य परिहर्तुमारभते-न तावदित्यादिना। अत्र चित्रावाक्ये। गुणविशिष्टयागविधानमिति। चित्रत्वस्त्रीत्वावच्छिन्नद्रव्यविशिष्टस्य यागस्य विधानमित्यर्थः। ननु गुणविशिष्टयागविधानाङ्गीकारेऽपि चित्रापदे मत्वर्थलक्षणाङ्गीकारापत्त्या ततो नामधेयत्वाङ्गीकरणस्यैव युक्तत्वात् पूर्वोक्तविषयत्वमेवास्यापतितमिति कथं ततः पृथगुक्तिरिति चेत्—न; ये शब्दाः क्वचिदप्यर्थविशेषे न रूढाः उभयत्र तुल्यवद्वृत्तिकाः त एव पूर्वोदाहरणविषयाः, न त्वर्थविशेषे रूढाश्चित्रादिशब्दाः, अत एव सोमादिशब्दानामर्थविशेषे रूढत्वादेवागत्या मत्वर्थलक्षणामप्यङ्गीकृत्य विशिष्टविधिरेवाश्रितः, अतश्च युक्तैव पृथगुक्तिः। मधु माक्षिकम्, धानाः भ्रष्टाः यवतण्डुलाः। तदिति दध्यादिद्रव्यसप्तकपरामर्शि, मिश्रितदध्यादिसमुदायः प्रजापतिदेवताक इत्यर्थः। विहितत्वात् यागस्येत्येकवचनं प्रयुक्तवतः ग्रन्थकारस्यात्र न्यायसुधाकृदभिमतः दध्याद्यनेकद्रव्यकैकयागपक्ष एवाभिप्रेत इत्यवगम्यते। नवीनास्तु-"सप्तदश प्राजापत्या" नित्यादिवत् अत्राप्यनेकयागपक्षमेवाङ्गीकुर्वन्ति। अत्र चैकयागपक्षनिराकरणपूर्वकमनेकयागपक्षस्थिरीकरणं कौस्तुभे चित्राधिकरणे द्रष्टव्यम्। विस्तरभयान्नेह प्रपञ्च्यते। ननु अनुमत्यादिवाक्यैः पृथक् पृथक् स्वरूपतः प्राप्तानामपि कर्मणां "राजा राजसूयेन स्वाराज्यकामो यजेत" इत्यनेन राजकर्तृविशिष्टत्वेन यथा फले विधानम् तद्वदत्रापि प्राप्तस्यापि कर्मणः पुनर्गुणविशिष्टत्वेन फलोद्देशेन विधानमस्त्वित्यत आह-प्राप्तस्येति। वाक्यभेद इति। अयं भावः—एकादशे हि द्रव्यदेवतादीनां उत्पत्तिविध्यन्वयित्वम्, देशकालकर्त्रादीनां च प्रयोगान्वयित्वम्। तद्यत्रोत्पत्त्यन्वयिगुणः श्रूयते तत्र कर्मणामुत्पत्तिविधिः, यत्र च प्रयोगान्वयिगुणः श्रूयते तत्र प्रयोगविधिश्चाङ्गीक्रियते। अत एव च यत्र वाक्यद्वये प्रयोगान्वयिगुणश्रवणं तत्र विनिगमनाविरहादुभयत्र प्रयोगविधिः, तत्राविरोधे समुच्चयः, विरोधे विकल्प इत्यादि स्पष्टमुपपादितम्। अत एव च राज्ञः प्रयोगान्वयिगुणत्वात् युज्यते तत्रोत्पन्नस्यापि कर्मणः पुनः प्रयोगविधिः, प्रकृते तु चित्रत्वस्य प्रयोगान्वयित्वासम्भवात् न तद्विशिष्टप्रयोगविधिस्सम्भवतीत्युभयोर्विधाने वाक्यभेदो दुष्परिहर इति।

पूर्वपक्षी प्रकारान्तरेण गुणविधित्वं साधयितुमुपक्रमते-अथेति। चित्रत्वस्त्रीत्वयोरिति। प्रकृत्यंशेन चित्रत्वस्य टाबंशेन स्त्रीत्वस्य च प्रतिपत्तेरित्यर्थः। अत्र च नीलादिव्यक्तेरेकत्वं नित्यत्वं च, अयं शुक्लोऽयमपि शुक्लः इत्यादिभेदप्रतीतिस्तु विभिन्नगुणाश्रयभेदाधीनः, एवमेवातिनीलः ईषन्नीलः इत्यादिप्रतीतिरप्याश्रयभेदकृत एव। एवञ्च

१. 'प्राप्तस्य' नास्ति. क.

**प्रकृते कर्मणि गुणविधानम्, किन्तु प्राणिद्रव्यके कर्मणि; तत्रास्य वाक्यस्यानारभ्याधीतत्वात्, अनारभ्याधीतानां च 'प्रकृतौ वाऽद्विरुक्तत्वात्' इति न्यायेन प्रकृतिगामित्वात् प्राणिद्रव्यकाणां च(१) यागानां 'दैक्षस्य चेतरेषु' इति न्यायेनाग्नीषोमीयप्रकृतिकत्वात्तदनुवादेनानेन वाक्येन गुणो विधीयते। दैक्षस्य च ज्योतिष्टोमाङ्गत्वेन स्वतन्त्रफलाकाङ्क्षाया अभावात् पशुकामपदं न फलसमर्पकम्; किंतु अग्नीषोमीयपश्वर्जनाङ्गतया प्राप्तकामनानुवादः। तथाच न वाक्यभेद इति चेत्—**

**तथापि दैक्षानुवादेन चित्रत्वस्त्रीत्वविधाने वाक्यभेदः। विशिष्टकारकविधानेऽपि गौरवलक्षणो वाक्यभेद एव। कारकस्यापि प्राप्तत्वेन विशिष्टविधाना-**

---

नीलादेरेवानुगतप्रतीतिविषयत्वसम्भवात् न रूपत्वातिरिक्ता नीलत्वादिजातिरङ्गीकर्तव्या इत्येकं मतम्। अत एव वार्तिककृता शब्दनित्यत्वाधिकरणे—

"एतयैव दिशा वाच्या शुक्लादेरपि नित्यता।
संसर्गमात्रभेदेन स्यात्तु तत्रापि हि भेदधीः।
स्वरूपं तु तदेवेति को जातिं कल्पयिष्यति" ॥

इत्युक्तम्। अस्मिन् पक्षे चित्रत्वमित्यस्य चित्रगुणविशिष्टत्वमित्यर्थः। तच्च चित्रगुण एव पर्यवस्यति। यदि तु नीलादिगुणानां भिन्नत्वमनित्यत्वं चेति नैयायिकमत एवाग्रहः तर्हि चित्रत्वेत्यस्य रूपत्वव्याप्यचित्रत्वजातिरेवार्थः इति बोध्यम्। **अस्य वाक्यस्य** चित्रावाक्यस्य। ननु प्राणिद्रव्यकस्यापि प्रकृतिविकृत्युभयात्मकस्य कर्मणो बहुत्वात् कुत्रास्य निवेश इत्याशङ्कायामाह-**अनारभ्याधीतत्वादिति**। अनारभ्याधीतानां प्रकृतिगामित्वं दैक्षस्य सर्वपशुयागप्रकृतित्वं च पूर्वमेव निरूपितम्। ननु अग्नीषोमीयपश्वनुवादेन चित्रगुणसम्बन्धः पशुरूपफलसम्बन्धश्च विधेय इति पूर्वोक्तदोषतादवस्थ्यमित्यत आह—**दैक्षस्येति**। **'इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्या'** दिति प्रपूर्वसूत्रात् प्रवृत्तिरित्यनुषज्यते। **इतरेषु** सवनीयादिषु पशुयागेषु, **दैक्षस्याग्नीषोमीयस्य** पशोः अङ्गानां **प्रवृत्तिः** स्यादिति सूत्रार्थः। **स्वतन्त्रफलाकाङ्क्षाया अभावादिति**। प्रधानफलेनैवास्यापि फलवत्वलाभादिति भावः। एवं तर्हि पशुकामपदस्य वैयर्थ्यापत्तिरित्यत आह- **प्राप्तकामनेति**। **अर्जनाङ्गतयेति**। नात्र **'उद्भिदा यजेत पशुकामः'** इत्यादिवत् पशुकामपदं फलत्वेन साध्यतापन्नपशुबोधकम्। किन्तु, यागाङ्गत्वेन विहितपशुसम्पादनाय या पशुविषयिणीच्छातद्बोधकम्। तस्याश्च पूर्वमेव प्राप्तत्वात् तदनुवादः परमत्र क्रियत इति नानेकविधानकृतदोष इति भावः।

यद्यप्यस्मिन् पक्षे न वाक्यभेदः, तथापि प्रकारान्तरेणापतन् वाक्यभेदो दुरुद्धर एवेत्याह—**तथापीति**। ननु नास्माभिः पृथक् पृथक् चित्रत्वस्त्रीत्वयोर्विधिरङ्गीक्रियते, यतो वाक्यभेद आशङ्क्येत, किन्तु **"धेनुर्दक्षिणे"** तिवत् प्राप्तकर्मानुवादेन चित्रत्वविशिष्टैककरणकारकस्यैव तृतीयोपात्तस्य विधानमङ्गीक्रियते, तदा न भविष्यति वाक्यभेदः इत्याशङ्क्याह-**विशिष्टकारकविधानेऽपीति**। अस्तु गौरवलक्षणो वाक्यभेदः,

---

१. 'यागानां' नास्ति. क.

नुपपत्तिश्च । (१)पशुकामपदस्यापि स्वरसतः फलपरस्य कामनानुवादत्वे आनर्थक्यापत्तेश्च । नच नियमतः पश्वर्जनकामना भवति, कामनातः प्रागेव केनचित् दत्ते पशौ तदभावात् । तथा च पशुकामपदस्य नित्यवच्छ्रवणबाधः। दैत्तस्योत्पत्तिशिष्टपुंस्त्वावरुद्धत्वेन तत्र स्त्रीत्वविधानानुपपत्तेश्च; आमिक्षायागानुवादेन वाजिनविधानवत् । 'कृष्णसारङ्गोऽग्नीषोमीयः' इति विशेषविहितेन स्वसन्निधिपठितेन च कृष्णसारङ्गवर्णेनावरुद्धे चित्रत्वस्यानारभ्या-

---

स चानेकविधानकृतवाक्यभेदापेक्षया लघुभूत एव, विध्यावृत्तिरूपस्य दोषस्यात्राभावादित्यत आह–कारकस्यापीति । "धेनुर्दक्षिणे"त्यादौ हि करणकारकस्याप्राप्तत्वात् युक्तं तत्रानेकगुणविशिष्टैककारकविधानम् । प्रकृते तूत्पत्तिवाक्यादेव करणकारकस्यापि प्राप्तत्वात् विहितस्य पुनर्विधानं न सम्भवतीति भावः । पशुकामपदमप्यस्मिन् पक्षेऽनर्थप्रायमेवेत्याह—पशुकामेति । यत्र यत्र कामशब्दः तत्र सर्वत्रापि फलपरत्वमेव तस्य दृष्टं स्वर्गकामः, स्वाराज्यकाम इत्यादौ, प्रकृते च तत् बाधित्वा अर्जनकामनानुवादकत्वे स एवैको दोषः, कामनायाः प्राप्तत्वेन चाप्रवृत्तिविशेषकरोऽनुवादोऽप्यपरो दोष इत्यर्थः । सापि च कामना न नियमेन सम्भवति, यतस्सानूद्येत, किन्तु कदाचित् भवति कदाचिन्नेति कथमनुवादोऽपि घटत इत्याह—नचेति । तदभावात् कामनाया अभावात् । अस्तु पक्षप्राप्ताया एवानुवादः ? तत्राह—नित्यवदिति । नित्येन तुल्यं नित्यवत् तथा श्रवणम् । तस्य बाधः अपाक्षिकस्थले यथा श्रवणं तद्वदेवात्रापि श्रूयते, तद्बाध्येतेत्यर्थः । ननु 'व्रीहिभिर्यजेते'त्यादौ व्रीहीणां इतरनैरपेक्ष्येण श्रुतस्यापि यागकरणत्वस्य "यवैर्यजेते"ति वाक्यान्तरपर्यालोचनया यथा पाक्षिकत्वमङ्गीक्रियते एवमत्रापि पाक्षिक्या एव कामनाया भवत्वनुवादः इत्यत आह-दैत्तस्येति । आमिक्षेति । "वैश्वदेव्यामिक्षा" इत्यत्रोत्पत्तिवाक्यविहितेनामिक्षाद्रव्येणावरुद्धे यागे यथा नोत्पन्नशिष्टस्य वाजिनस्य निवेशो घटते, तथोत्पत्तिवाक्यविहितपुंस्त्वावरुद्धे यागे स्त्रीत्वविधानं न घटत इत्यर्थः । ननु उत्पत्तिवाक्ये पशुपदस्यैव श्रवणात् तस्य च स्त्रियामपि प्रयोगसम्भवात् 'छागस्य वपाया मेदसः' इति मन्त्रवर्णे छागपदोत्तरं श्रूयमाणस्यापि पुंस्त्वस्यानारभ्याधीतेनापि प्रत्यक्षेण विधिना विहितस्त्रीत्वबाधकत्वासम्भवात् भवत्येव स्त्रीत्वविधानमित्यत आह-कृष्णसारङ्ग इति । एवं च स्त्रीत्वमात्रविधिसम्भवेऽपि प्रातिपदिकार्थस्य चित्रत्वस्याप्राप्तत्वात् नानुवादो घटते, प्राकरणिकगुणावरुद्धत्वाच्च न विधिस्सम्भवति । वस्तुतस्तु उत्पत्तिवाक्यगतपशुशब्दस्य स्त्रीपुमुभयसाधारण्येऽपि 'अजोऽग्नीषोमीय' इति प्राकरणिकवाक्येन पुंस्त्वस्य विहितत्वात् नानेन स्त्रीत्वविधानं सम्भवति । न च तस्याजत्वरूपगुणविधायकत्वमेव कुतो न स्यादिति वाच्यम् , तस्य मन्त्रवर्णादेव प्राप्तत्वात् । 'अप्राप्ते शास्त्रमर्थव'दिति न्यायात् । अतश्चानर्थक्यमेवापद्येतेति भावः । सामान्यशास्त्रेणेति । सामान्यशास्त्रस्य विशेषव्यतिरिक्तविषयत्वस्य दशमाष्टमे निर्णी-

---

१ कामप०

धीतेन सामान्यशास्त्रेण विधानानुपपत्तेश्च; पाञ्चदश्यावरुद्ध इव साप्तदश्यविधानम्।

अथ मा भूदग्नीषोमीयपश्वनुवादेन चित्रत्वस्त्रीत्वविधानम्। 'सारस्वती मेषी' इति वाक्यविहितयागाङ्गमेष्यनुवादेन तु गुणविधानं स्यात्, चित्रयेति स्त्रीकारकानुवादेन चित्रत्वमात्रविधानात्। न च प्राकृतेन कृष्णसारङ्गवर्णेन नैराकाङ्क्ष्यान्न चित्रत्वविधानं युक्तमिति वाच्यम्। उपदिष्टेन चित्रत्वेनातिदिष्टस्य वर्णान्तरस्य बाधोपपत्तेरिति चेत्—

नैवम्; न हि चित्रयेत्येकेन(१) पदेन स्त्रीकारकस्योद्देशः चित्रत्वस्य च विधानं संभवति, एकप्रसरताभङ्गलक्षणवाक्यभेदापत्तेः। उद्देश्यविधेयभावस्यानेकपदसाध्यत्वात्। अत एव 'वषट्कर्तुः प्रथमभक्ष' इत्यत्र विशिष्टभक्ष-

---

त्वादिति भावः। एतच्चोपरिष्टात् निरूपयिष्यते। तत्र दृष्टान्तमाह-साप्तदश्येति। यथा पाञ्चदश्यावरुद्धायां दर्शपूर्णमासरूपप्रकृतौ नानारभ्याधीतस्य साप्तदश्यस्य निवेशस्सम्भवति, तद्वदित्यर्थः। इदञ्च साप्तदश्यं पाञ्चदश्यं च इष्ट्यङ्गभूतसामिधेन्याख्याग्निसमिन्धनार्थऋग्गतसंख्याविशेष इति पूर्वमेव स्पष्टम्।

एवं सर्वपशुयागप्रकृतिभूतेऽग्नीषोमीये पशौ चित्रत्वस्त्रीत्वयोरुभयोर्विधाने वाक्यभेदापत्त्या तत्र निवेशाभावे उपपादिते इदानीं यत्र स्त्रीत्वं प्राप्तं चित्रत्वं चाप्राप्तं तादृशे विकृतिविशेषे मेषीद्रव्यके यागे निवेशमाशङ्कते-अथेति। अस्मिंश्च पक्षे वाक्यभेदाभावमुपपादयति-चित्रयेति। न चास्मिन् पक्षे टाबंशस्यैवोद्देश्यसमर्पकत्वावश्यकत्वात् एकस्मिन् पदे एकांशस्योद्देश्यत्वमपरांशस्य विधेयत्वमित्येकप्रसरताभङ्गापत्तिरिति वाच्यम्। टाबंशस्य तत्र तात्पर्यग्राहकत्वमात्रमङ्गीकृत्य यजिधातोरेव स्त्रीत्वविशिष्टपशुद्रव्यकयागरूपोद्देश्यसमर्पकत्वाङ्गीकारे बाधकाभावात्। अन्यथा मेष्युद्देशेन चित्रत्वविधाने विहितस्य तस्य मेषीमात्राङ्गत्वापत्त्या यागाङ्गत्वाभावेन पश्वेकत्वाधिकरणपूर्वपक्षन्यायेन तस्या ऽविवक्षा आपद्येतेति भावः। उपदिष्टेनेति। न च साप्तदश्यवदस्याप्यनारभ्याधीतत्वात् कथमतिदेशप्राप्तप्राकृतवर्णबाधकत्वम्। यदि चैवमिष्यते तर्हि तत्रापि विकृतिमात्रे उपदिष्टेन साप्तदश्येनातिदिष्टस्य पाञ्चदश्यस्य बाधः कुतो न स्यात् इति वाच्यम्। साप्तदश्यस्य विकृतिसामान्योद्देशेन विहितस्य पाञ्चदश्यप्रवृत्तिरहितासु मित्रविन्दादिष्वपि प्राप्तिसम्भवेन अन्यत्र चरितार्थस्य तस्यातिदिष्टपाञ्चदश्यबाधकत्वायोगात्। प्रकृते तु अनारभ्याधीतस्यापि स्त्रीत्वस्य एतद्यागोद्देशेनैव विधानात् अत्र निवेशाभावे वैयर्थ्यापत्त्या निरवकाशेन तेन प्राकृतवर्णबाधो युक्त एवेति भावः।

अनेकपदसाध्यत्वादिति। प्रमाणान्तरप्राप्तपदार्थनिष्ठत्वादुद्देश्यत्वस्य विधेयत्वस्य च तद्विपरीतत्वात् उभयोरपि तयोः युगपदेकेन पदेन बोधयितुमशक्यत्वादिति भावः। न च यजधातोरेव लक्षणया स्त्रीद्रव्यकयागवाचकत्वमङ्गीक्रियताम्। तस्यैवोद्देश्यसमर्पकत्वमस्तु। तत्र च स्त्रीप्रत्ययस्य तात्पर्यग्राहकत्वमात्राङ्गीकारान्न दोष इति पूर्वमेवोक्तमिति

---

१. येत्यनेन चित्रत्वकारकोद्देशः इति क.

विधिः, न तु भक्षानुवादेन प्राथम्यविधिरित्युक्तं तृतीये ।

मेष्यनुवादेन चित्रत्वविधाने फलपदानर्थक्यापत्तेश्च । उभयविधाने (१)वाक्यभेदः स्यात् । प्रकृतस्य च यागस्य फलाकाङ्क्षाया अनिवृत्तेः । विश्वजिन्न्यायेन फलकल्पने गौरवम् । 'दधिमध्विव' त्याद्युत्पत्तिवाक्येनैतस्याधिकारवाक्यस्य (२)प्रतिपन्नैकवाक्यताबाधेन वाक्यभेदप्रसङ्गाच्च । चित्राशब्दस्य तु कर्मनामधेयत्वे प्रकृतस्य कर्मणः फलाकाङ्क्षस्य फलसंबन्धमात्रकरणान्न वाक्यभेदः । प्रकृताया इष्टेरनेकद्रव्यकत्वेन चित्राशब्दस्य तत्रोपपत्तेः । तत्सिद्धं वाक्यभेदभयाच्चित्राशब्दः कर्मनामधेयमिति ॥

---

वाच्यम् । तात्पर्यग्राहकत्वाङ्गीकारेऽपि उद्देश्यबोधकसामग्र्यन्तर्गतत्वेन एकप्रसरताभङ्गदोषस्य दुर्वारत्वात् । भक्षानुवादेनेति । "प्रैतु होतुश्चमसः" "ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति" "यथाचमसमन्यांश्चमसांश्चमसिनो भक्षयन्ति, अथैतस्य हारियोजनस्य सर्व एव लिप्सन्त" इत्यादिभिर्यो विहितस्सोमभक्षः तदनुवादेनेत्यर्थः । तृतीय इति । तृतीयाध्याय इत्यर्थः । पञ्चमपाद इति शेषः । वषट्कर्ता होता । येन याज्याया अन्ते 'वौषट्' इति वषट्कार उच्चार्यते ।

कथञ्चित् तदङ्गीकारेऽपि वा फलपदानर्थक्यं तदवस्थमेवेत्याह—मेषीति । ननु मेषीयागे फलस्याप्राप्तत्वात् तस्य चित्रत्वस्य चेत्युभयोर्विधानमस्तु, अत आह—उभयेति । 'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः' इति पूर्वमेवोक्तत्वादिति भावः । प्रकृतस्येति । दधि मध्विति वाक्यविहितस्येत्यर्थः । फलाकाङ्क्षाया अनिवृत्तेरिति । उत्पत्तिवाक्ये फलाश्रवणात् यस्य कस्यचित् यागस्य च प्रकरणे पाठाभावाच्च उत्पन्नाया आकाङ्क्षायाश्शान्तौ कारणाभावादिति भावः । ननु एतादृशस्थलेषु सति विश्वजिन्न्याये जाग्रति किमर्थं परिश्राम्यते ? अत आह—विश्वजिदिति । न्यायोऽयं पूर्वं मूलकृतैव निरूपितः । नन्वेतादृशं गौरवं नामधेयत्वाङ्गीकरणापेक्षया नातीव दोषमावहतीत्यत आह—दधीति । एवञ्च वाक्यभेदपरिहारार्थमेव नामधेयत्वाङ्गीकरणमिति भावः । नामधेयप्रयोजनञ्च निरूपितमधस्तात् । नामधेयत्वाङ्गीकरणे कथं वाक्यभेदपरिहारः ? अत आह—चित्राशब्दस्येति । तर्हि चित्रत्वस्त्रीत्वयोः कथमुपपत्तिः ? अत आह—प्रकृताया इति । इष्टेरित्यनेन इष्टिशब्दस्य स्त्रीप्रत्ययान्तत्वात् तदादायैव चित्राशब्दगतस्त्रीप्रत्ययस्याप्युपपत्तिरिति ध्वनितम् । द्वितीयं नामधेयत्वकारणं यन्निरूपितं तदुपसंहरति—तत्सिद्धमिति । अनेनैव न्यायेन "त्रिवृत् बहिष्पवमानम्" "पञ्चदशान्याज्यानि" "सप्तदशानि पृष्ठानि" इत्यादौ आज्यपृष्ठबहिष्पवमानशब्दाः कर्मनामधेयानि । तत्र बहिष्पवमानशब्दः सोमयागे प्रातस्सवने क्रियमाणस्तोत्रविशेषवाची । आज्यपृष्ठशब्दौ तु क्रमेण प्रातर्माध्यन्दिनसवनयोः क्रियमाणयोः स्तोत्रविशेषयोर्वाचकाविति ध्येयम् । स्तोत्राणाममीषामेतत्पदवाच्यत्वे प्रवृत्तिनिमित्तं मीमांसाकौस्तुभे विस्तरेणोपपादितं तत एवावगन्तव्यम् ।

---

१. वाक्यभेदात् इति ख, ग, घ. । २. प्रतीयमाने ।

( तत्प्रख्यशास्त्रात्कर्मनामधेयत्वनिरूपणम् )

"अग्निहोत्रं जुहोती" त्यत्राग्निहोत्रशब्दस्य कर्मनामधेयत्वं तत्प्रख्यशास्त्रात्। तस्य गुणस्य प्रख्यापकस्य प्रापकस्य शास्त्रस्य विद्यमानत्वेनाग्निहोत्रशब्दः कर्मनामधेयमिति यावत्। तथा हि-विधिना तावत्तदेव विधेयं यत्र कारान्तरेणाप्राप्तम्। "अप्राप्ते शास्त्रमर्थवदि" ति न्यायात्। अग्निहोत्रशब्दस्य च गुणविधित्वे यो गुणस्तेन विधेयः स शास्त्रान्तरेण प्राप्तः। कथमिति चेत्—

शृणु-यदि तावदग्नौ होत्रमस्मिन्निति (१)सप्तमीसमासमाश्रित्य होमा(२)धारत्वेनाग्निर्विधेय इत्युच्येत तदा "यदाहवनीये जुहोती" त्यनेनैव प्राप्तत्वाद्विध्यानर्थक्यम्।

अथ अग्नये होत्रमस्मिन्निति(३) चतुर्थीसमासमाश्रित्याग्निरूपा देवता विधीयते(४) इति चेत्-न;शास्त्रान्तरेण प्राप्तत्वात्। किं तच्छास्त्रान्तरमिति चेत्-

---

( तत्प्रख्यशास्त्रात्कर्मनामधेयत्वनिरूपणम् )

तृतीयं नामधेयत्वहेतुं निरूपयितुमारभते-अग्निहोत्रमिति। गुणस्येति। अग्निहोत्रशब्देन यो गुणो विधित्सितः पूर्वपक्षे तस्येत्यर्थः। अप्राप्ते प्रमाणान्तरेणाज्ञाते विषये शास्त्रम् अर्थवत् प्रयोजनवदित्यर्थः। ननु अग्निहोत्रपदे गुणविधिमङ्गीकुर्वता भवता सप्तमीबहुव्रीहिमाश्रित्य होमोद्देशेनाधिकरणभूतोऽग्निर्विधीयत इत्युच्यते? उत चतुर्थीबहुव्रीहिमाश्रित्य देवतारूपोऽग्निर्विधीयत इत्युच्यते? न तावदाद्यः पक्षः इत्याह-यदि तावदिति। सप्तमीसमासमिति। "सप्तमी विशेषणे बहुव्रीहौ" इति ज्ञापकबलेन कण्ठेकाल इतिवत् कथञ्चित् सप्तमीबहुव्रीहिमाश्रित्यापि "यदाहवनीये जुहोति" इति वाक्येन होमत्वावच्छिन्नोद्देशेनाहवनीयरूपाधिकरणस्य विहितत्वेन तेनैव प्राप्तत्वादित्यर्थः। होमाधारत्वेनेति। देवतोद्देश्यकद्रव्यप्रक्षेपोऽत्र होमपदार्थः। तदाधारत्वेनेत्यर्थः। त्यागीयद्रव्यपतनप्रतिबन्धकत्वेनेति यावत्।

द्वितीयं पक्षं निरस्यति-अथेति। यद्यपि सप्तमीबहुव्रीहिवत् नात्र शास्त्रानुगतत्वं सम्भवति, तथापि "दृष्टानुविधिश्छन्दसी"ति स आश्रीयत इति भावः। चतुर्थ्या देवतात्वबोधकत्वमनुपदमेव वक्ष्यति ग्रन्थकारः।

---

१. अत्राग्निहोत्रपदे सप्तमीबहुव्रीहिं चतुर्थीबहुव्रीहिं वाऽऽश्रित्य होत्रशब्दस्य च कर्मव्युत्पत्त्या द्रव्यवाचकत्वमङ्गीकृत्य च अधिकरणभूतस्य देवताया अग्नेः प्राप्तिः प्राचीनैरुपपादिता। तदनुसृत्य व्याख्यातोऽत्रत्यो ग्रन्थः पूज्यपादैः। वस्तुतस्तु होत्रशब्दस्य भावव्युत्पत्त्या क्रियापरत्वम्, तत्पुरुषसमास एव चेष्टस्तेषाम्। अत एव तैः तन्त्रसिद्धान्तरत्नावल्यां तत्प्रख्यन्यायनिरूपणावसरे अग्निहोत्रपदस्य तत्पुरुषसमासो व्युदपादि। उपपादि च स्वाशयः-अत्र यद्यपि प्राचीनैः कर्मव्युत्पत्तिमाश्रित्य दध्यादिद्रव्यपरत्वमङ्गीकृत्य, अग्नये होत्रम् अग्न्युद्देश्यकहोमसाधनद्रव्यं यस्मिन्निति बहुव्रीह्याश्रयणेनाग्निहोत्रशब्दः प्रसाधितः, तथापि भावसाधनत्वाङ्गीकारेणैव निर्वाहे कर्मसाधनत्वाङ्गीकरणे फलाभावाद्वेदे प्रायशः सर्वत्र "अग्निहोत्रं जुहोति" "अग्निहोत्रं यज्ञानां" "तस्मादग्निहोत्रमुच्यते" इत्यादावग्निहोत्रशब्दस्याऽन्तोदात्तत्वस्यैव श्रवणात्तस्य च स्वरस्य तत्पुरुषसमास एव संगतेस्तत्पुरुषस्वीकारे च धात्वर्थसामानाधिकरण्यसिध्यर्थं भावसाधनत्वस्यैवाऽङ्गीकर्तव्यत्वादध्वरमीमांसाकुतूहलवृत्तिमीमांसाकौस्तुभाद्युक्तरीत्या अस्माभिर्भावसाधनत्वमेवाऽङ्गीकृतम्-इति।

२. होमार्थत्वेन इति क.  ३. 'अस्मिन्' इति नास्ति क.  ४. अनेन समर्थ्यते इति ख.

अत्र केचित्-'यदग्नये च प्रजापतये च सायं जुहोति' इति शाखान्तरेण होमानुवादेनाग्निप्रजापत्योर्विधानान्नाग्निहोत्रपदं देवतासमर्पकम् । न चोभयविधाने वाक्यभेदः । परस्परनिरपेक्षविधाने हि वाक्यभेदः स्यात् 'अग्नये जुहोति' 'प्रजापतये जुहोती'ति प्रत्येकं विधिव्यापारात् । चशब्दश्रवणात्तु परस्परसापेक्षस्यैव पदद्वयस्याख्यातान्वयान्न वाक्यभेदः ।

अत एव "ऋत्विग्भ्यो दक्षिणां ददाती"ति वाक्यविहितदक्षिणानुवादेन "गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च

---

अस्मिन्नपि पक्षे विधित्सितस्याग्निदेवतारूपस्य गुणस्य प्रमाणान्तरेण प्राप्तिमुपपादयिष्यन् तत्र प्रापकप्रमाणविषये न्यायसुधाकृतः तदनुयायिनाञ्च मतमुपपादयति-**अत्र केचिदिति** । न्यायसुधाकृत्प्रभृतय इत्यर्थः । **शाखान्तरेणेति** । 'अग्निहोत्रं जुहोति' इति वाक्यापेक्षया भिन्नेनेत्यर्थः । **ननु** अत्र यच्छब्दश्रवणात् यच्छब्दस्य च विधिशक्तिप्रतिबन्धकत्वस्य द्वितीये साधितत्वात् कथमस्य वाक्यस्य देवताविधायकत्वमिति चेत्-एवम् ; यच्छब्दादेः मण्यादेर्दाहादिप्रतिबन्धकत्वमिव न स्वरूपसमवधानमात्रेण विधिशक्तिप्रतिबन्धकत्वम्, किन्तु प्रमाणान्तरतः प्राप्तिद्योतनद्वारा । यच्छब्दादयो हि स्वसमभिव्याहृतपदार्थस्य पूर्वप्रसिद्धिं द्योतयन्तः प्राप्तिमवगमयन्ति, तद्यत्र विधित्सितस्य प्रमाणान्तरेण प्राप्तिः तत्र प्राप्तस्य पुनर्विधानायोगात् विधिशक्तिप्रतिबन्धकत्वेऽपि यत्राप्राप्तिः न तत्र विधिशक्तिः प्रतिबध्यते । अत एव **"यो दीक्षितो यदग्नीषोमीयं" "योऽदाभ्यं गृहीत्वा सोमाय जुहोति"** इत्यादौ सत्यपि यच्छब्दसमभिव्याहारे विधिरङ्गीक्रियत एव । एवं प्रकृतेऽप्यप्राप्तत्वात् विधिरङ्गीकर्तव्य एवेति ।

प्राप्तकर्मोद्देशेनाग्निप्रजापतिरूपदेवताद्वयविधाने वाक्यभेदमाशङ्कते-**न चेति** । समाधत्ते-**परस्परेति** । **अयं भावः**—समासादिस्थले यत्र सुबन्तयोः परस्परान्वयो व्युत्पन्नः तत्र भवत्येव विशिष्टविधानम्, यथा-**'अश्वाभिधानीम्'**, **'यत्किञ्चित् सोमलिप्त'**मित्यादौ । यत्र तु असमस्तस्थले तयोस्स न व्युत्पन्नः तत्र परस्परं वैशिष्ट्यासम्भवेन पृथक् पृथगेव क्रियान्वयात् प्रत्येकं विधिव्यापाराङ्गीकारापत्त्या विध्यावृत्तिलक्षणो वाक्यभेदः स्यात्, प्रकृते च चशब्दश्रवणात् तस्य च निपातत्वात् सुबन्तार्थस्य निपातार्थान्वयव्युत्पत्तेः वाक्यभेदाभावात् नानेकविधानं दोषायेति ।

दोषाभावमेव स्थलान्तरदृष्टान्तेन द्रढयति—**अत एवेति** । वाक्यभेदाभावादेवेत्यर्थः । **ऋत्विग्भ्य इति** । अत्र च ददात्यन्तेन प्रथमवाक्येन कर्मकररूपर्त्विगुद्देशेनदक्षिणादानं विधीयते । द्वितीयेन च पूर्ववाक्यविहितदक्षिणोद्देशेन गवादिद्रव्यविधानमिति स्थितिः । **द्वादशशतम्** । द्वादशोत्तरं शतम् । **दक्षिणा** आनतिसाधनीभूतं द्रव्यम् । तत्र गवादीनामनेकेषां प्राप्तदक्षिणानुवादेन पृथक् विधानाङ्गीकारे वाक्यभेदापत्त्या चशब्दसमभिव्याहारबलेन परस्परसहितानामेव गवादीनां विधानमङ्गीक्रियते । चादीनां हि निपातोपसर्गाणां पृथक् पदत्वेऽपि केवलानां तेषां प्रयोगाभावेन स्वातन्त्र्येण तदर्थस्य भावनायामन्वयासम्भवात् नित्यं समभिव्याहृतपदार्थविशेषणत्वप्रतीतेः चशब्दसमभिव्या-

तस्य द्वादशशतं दक्षिणा' इति वाक्येन गवादीनां विधानं दशमोक्तं सङ्गच्छते। परस्परसापेक्षाणां गवादीनां विधानेन वाक्यभेदाभावात्। अन्यथा दक्षिणानुवादेनानेकेषां गवादीनां विधानं नैव सङ्गच्छेतेति।

अग्निप्रजापत्योश्च देवतयोः सतोः समुच्चयः, न तु समुच्चितयोर्देवतात्वम्; पृथक्कारकविभक्तिश्रवणात्। चकारार्थस्य (१)विभक्त्यर्थेनान्वयात्तस्याप्राधान्यात्। अतश्च (२)नाग्नीषोमादिवदग्निप्रजापत्योर्देवतात्वमिति।

अन्ये त्वाचार्या आहुः-"यदग्नये च प्रजापतये च सायं जुहोती' ति वाक्यं नाग्नेः (३)प्रापकम्, होमानुवादेन प्रजापतिविधानात्। न च विनिगमनाविरहादुभयविधानं युक्तमिति वाच्यम्। विधिना हि तदेव विधीयते यत् प्रकारान्तरेणाप्राप्तम्। तत्र यथानेन वाक्येन सायंकालो न विधीयते

---

द्वारात् गवादिपदार्थान्तरस्यापि च चकारार्थान्वयं विना पदान्तरोपात्तभावनान्वयायोगात् परस्परसहितानामेव तेषां भावनान्वयप्रतीतेः न वाक्यभेदः इत्युक्तं दशमाध्यायतृतीयपादे त्रयोदशाधिकरणे, तदेतत् सर्वं मनसि निधायाह-**दशमोक्तमिति**। **अन्यथा** परस्परसहितानामेव गवादीनां विधानमित्यनङ्गीकारे।

नन्वेवं परस्परसहितयोरेवाग्निप्रजापत्योर्भावनान्वयाङ्गीकारे अग्नीषोमादिवत् तयोर्व्यासज्यवृत्तिदेवतात्वापत्तिः। इष्टापत्तौ वा अग्नेः पृथक् देवतात्वस्यैवाभावेन तत्प्राप्तिफलकस्याग्निहोत्रपदस्य गुणविधायकत्वापत्तौ तत्प्रख्यन्यायेन नामधेयत्वकथनस्यासाङ्गत्यापत्तिरित्यत आह-**अग्निप्रजापत्योरिति**। **देवतयोस्सतोरिति**। **अयमभिसन्धिः**- तद्धितचतुर्थ्यादीनां देवतात्वबोधकत्वं वक्ष्यति ग्रन्थकारः। तद्यत्र पृथक् तद्धितश्रवणं चतुर्थीश्रवणं वा तत्रेतरनिरपेक्ष एव प्रत्ययार्थे देवतात्वे प्रकृत्यर्थस्याधेयतासम्बन्धेनान्वयात् इतरनिरपेक्षस्यैव पृथक् पृथक् देवतात्वम्, यथा-"**त्वाष्ट्रं पात्नीवतम्**" "**अग्नये कृत्तिकाभ्य**" इत्यादौ। यत्र तु एक एव प्रत्ययः श्रूयते तत्र प्रकृत्यर्थयोः समुच्चितयोरेव प्रत्ययार्थेऽन्वयात् समुच्चितयोरेव देवतात्वम्, यथा—'**अग्नीषोमीयम्**' '**इन्द्राग्निभ्याम्**' इत्यादौ। एवं पृथक् विभक्तिश्रवणेऽपि यत्र प्रकृत्यर्थयोः प्रमाणान्तरेण विशेषणविशेष्यभावप्रतीतिः, यथा-'**अग्नये पावकाये**'त्यादौ न तत्र देवताद्वयप्रतीतिः, यत्र तु तत् नास्ति तत्र पृथगेव देवतात्वम्, तयोरेव च पदार्थान्तरेणान्वयः, एवञ्च प्रकृते पृथक् विभक्तिश्रवणात् विशेषणविशेष्यभावे प्रमाणाभावाच्च पृथगेवाग्निप्रजापत्योर्देवतात्वम्, तयोरेव च चशब्दार्थे समुच्चयेऽन्वयः इति पृथगेवाग्नेः देवतात्वसिद्धेः तदादाय तत्प्रख्यन्यायेनाग्निहोत्रपदस्य कर्मनामधेयत्वे न काचित् क्षतिरिति।

एवं न्यायसुधाकृदादिमतेन देवताप्राप्तिं निरूप्य इदानीं पार्थसारथिमिश्रप्रभृतीनां मतेन तत्प्राप्तिं निरूपयति-**अन्ये त्विति**। **अग्नेः प्रापकम्**, अग्निविषयकाज्ञातज्ञानजनकम्। **प्रकारान्तरेणाप्राप्तमिति**। अप्राप्ते शास्त्रमर्थवदिति न्यायस्य पूर्वमेवोक्त-

---

१. कारकार्थेनान्वयात् तस्य प्राधान्यात् इति क
२. क पुस्तके नञ् नास्ति।
३. नाग्निप्रापकम् इति क

"सायं जुहोती"ति वचनान्तरेण प्राप्तत्वात्, तथा अग्निरपि न विधीयते, "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहे"ति मन्त्रवर्णादेव प्राप्तत्वात्। मन्त्रवर्णस्यापि देवतासमर्पकत्व(१)मस्त्येव। अत एवोपांशुयाजे विष्णवादीनां मान्त्रवर्णिकं देवतात्वमित्युक्तम्।

नन्वेवं प्रजापतिदेवतया अग्नेर्बाधः स्यात्। चतुर्थ्या हि प्रजापतेर्देवतात्वमवगम्यते, अग्नेस्तु मान्त्रवर्णिकम्। (२)तत्र 'साऽस्य देवता' इति देवतात्वे तद्धितस्मरणवत् यद्यपि देवतात्वे चतुर्थीस्मरणं नास्ति, (३)'संप्रदाने चतुर्थी'ति संप्रदाने तस्याः स्मरणात्, तथापि त्यज्यमानद्रव्योद्देश्यत्वं

---

त्वादिति भावः। मन्त्रवर्णादेवेति। केवललिङ्गकमन्त्रवर्णादेवेत्यर्थः। प्रधानकर्मे पठितस्य 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोती'ति सायंकालीनहोमे विनियुक्तस्य मन्त्रस्य प्रधानाङ्गत्वेऽवगते तत्प्रतिपाद्याया अपि देवतायाः तदङ्गत्वस्य तादृशमन्त्रलिङ्गादेव सिद्धत्वादिति भावः। ननु तद्धितस्य देवतात्वे स्मरणात् चतुर्थ्याश्च तत्र स्मरणाभावेऽपि सम्प्रदानत्वे स्मरणात् देवतात्वस्य च सम्प्रदानैकदेशत्वादस्तु तयोर्देवतासमर्पकत्वम्, मन्त्रवर्णस्य तु तथा स्मरणस्य कुत्राप्यदृष्टचरत्वात् कथं तस्य देवतासमर्पकत्वमित्यत आह—मन्त्रवर्णस्यापीति। यद्यपि मन्त्रवर्णस्य न देवतात्वबोधकत्वं स्मृतम्, तथापि सिद्धेन मन्त्रवर्णकल्प्येन वा मन्त्रविनियोगविधिना मन्त्राणां प्रधानाङ्गत्वेऽवगते तदन्यथानुपपत्त्या तत्प्रतिपाद्यस्याप्यग्न्यादेः देवतात्वं कल्प्यते इति युक्तमेव मन्त्रवर्णस्यापि देवतासमर्पकत्वमिति भावः। अत एव मन्त्रवर्णस्य देवतासमर्पकत्वसत्त्वादेव। विष्णवादीनाम् विष्णुप्रजापत्यग्नीषोमाणाम्। तैत्तिरीयब्राह्मणे तृतीयाष्टके पञ्चमप्रपाठके दशमानुवाके आग्नेयाग्नीषोमीययाज्यानुवाक्यायुगलयोर्मध्ये "प्रजापते न त्वदेतानि" "स वेद पुत्रः पितर"मिति प्रजापतिदेवताकं याज्यानुवाक्याद्वयमाम्नातम्। ऐतरेयके च आग्नेयैन्द्राग्नयाज्यानुवाक्यायुगलयोर्मध्ये "इदं विष्णुर्विचक्रमे" "प्र तद्विष्णुस्तवते" इति वैष्णव्यौ याज्यानुवाक्ये आम्नाते। तथैवैतरेयके तन्मध्य एव "आन्यं दिवो मातरिश्वा" "अग्नीषोमा यो अद्य वाम्" इत्यग्नीषोमीययाज्यानुवाक्ये आम्नाते। एवं शाखाभेदेनाम्नातैः वैष्णवप्राजापत्याग्नीषोमीययाज्यानुवाक्यायुगलैः विष्ण्वादयो देवतात्वेन समर्प्यन्त इत्युक्तं द्वितीये उपांशुयाजाधिकरणे, तदेतदाह—विष्णवादीनामित्यादिना।

नन्वेवं मन्त्रवर्णस्याग्निप्रापकत्वाङ्गीकारे 'यदग्नये चे'ति वाक्यगतचतुर्थ्यैव प्रजापतिविधानात् प्रबलप्रमाणबोधितेन तेन दुर्बलप्रमाणबोधितस्याग्नेः बाधः स्यादित्याशङ्कते—नन्विति। एवम् अग्नेर्मन्त्रवर्णात् प्राप्तिस्वीकारे। अग्नेरिति। देवताभूतस्येति यावत्।

---

१. कत्वात्।

२. यद्यपि 'सास्य देवता' इति देवतात्वे तद्धितस्मरणवत् तत्र चतुर्थीस्मरणं नास्तिइति क।

३. यद्यपीदं सूत्रं "चतुर्थी सम्प्रदाने" इत्येवोपलभ्यतेऽष्टाध्याय्याम्। तथाप्यत्र सर्वेष्वप्यादर्शपुस्तकेषु "सम्प्रदाने चतुर्थी" इत्येव पाठस्योपलम्भात् तदन्यथाकरणभीतेन मया स एव पाठो मूले निवेशितः।

तावद्देवतात्वम्। तच्च संप्रदानस्वरूपान्तर्गतम्, त्यज्यमानद्रव्योद्देश्यत्वे सति प्रतिग्रहीतृत्वस्य संप्रदानत्वात्। अतश्चतुर्थीतः संप्रदानैकदेशतया देवतात्वप्रतीतिरस्त्येव। मन्त्रवर्णात्तु न देवतात्वं प्रतीयते, किन्त्वधिष्ठानमात्रम्। अतश्च मन्त्रवर्णश्चतुर्थीतो दुर्बलः। यथाहुः—

तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः।
देवताया विधिस्तत्र दुर्बलं तु परं परम्॥ इति॥

अतश्च प्रबलप्रमाणबोधितप्रजापतिदेवतया दुर्बलप्रमाणबोधिताग्नेर्बाधः स्यादिति चेत्—

सत्यम्; स्याद्बाधो यदि "प्रजापतये जुहोती"ति केवलप्रजापतिविधानं स्यात्। विधीयमानस्तु प्रजापतिर्मन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितो होमोद्देशेन विधीयते। समुच्चितोभयविधानापेक्षया अन्यतः प्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतिमात्रविधाने लाघवात्। अतश्च न बाधकत्वम्, निरपेक्षविधानाभावात्। यथा च त्वन्मतेऽग्निप्रजापत्योरेकहोमोद्देशेन विधानात्तुल्यार्थत्वेन विकल्पे प्रसक्ते प्रजापतेर्न पाक्षिकमग्निबाधकत्वम्, समुच्चय-

---

मान्त्रवर्णिकमिति। देवतात्वमित्यनुषङ्गः। सास्येति। अस्य हविषः चरुपुरोडाशादेः, सूक्तस्य वा मन्त्रसमुदायरूपस्य सा इन्द्रादिः देवता इत्यस्मिन्नर्थे प्रत्यया अणादयो भवन्तीति सूत्रार्थः। सम्प्रदानैकदेशतयेति। सम्प्रदाने शक्ताया अपि चतुर्थीविभक्तेः तदेकदेशभूतदेवतात्वे एकदेशलक्षणया प्रवृत्तिसम्भवादिति भावः। तद्धितेनेति। कारिका गतार्था। देवताया विधिः विधेयदेवतासमर्पणमित्यर्थः।

सत्यं मन्त्रवर्णापेक्षया चतुर्थी प्रबला, तथापि नात्राग्नेः प्रजापतिना बाध इति समाधत्ते–सत्यमित्यादिना। यद्यस्मिन्नपि पक्षे विधेयप्रजापतिविशेषणतया अग्निसमुच्चयस्यापि विधेयत्वावश्यंभावः तदा को विशेषः पूर्वस्मात् पक्षात्? इत्यत आह–समुच्चितोभयेति। एवञ्च न समुच्चयमात्रविधाने गौरवमापाद्यतेऽस्माभिः, किन्तु तद्विशेषणतयाग्नेरपि विधाने उभयविधानकृतो वाक्यभेद आपादितः, स च नास्माकं मते, इत्याशयवानाह–लाघवादिति। अतश्च मन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतेर्विधाने अग्न्यंशे विधिव्यापाराभावात् लाघवम्, तत्समुच्चितप्रजापतेर्विधानाच्च नाग्नेर्बाध इत्याह–अतश्चेति। निरपेक्षविधानाभावादिति। इतरनैरपेक्ष्येण विधाने हि प्रबलेन दुर्बलस्य बाधः स्यात्, तुल्यबलत्वे वा पाक्षिको बाधः, न चैतदस्ति, अग्निसापेक्षस्यैव प्रजापतेर्विधानात्, यथैव ह्यन्यतः प्राप्तहोमाभिषवसमानकर्तृकत्वविधिना "ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति" इत्यनेन होमाभिषवयोर्भक्षणाङ्गत्वं बोध्यते, तद्वत् अत्रापि मन्त्रवर्णतोऽङ्गत्वेनावधृताग्निसमुच्चितप्रजापतिविधाने बाधकाभावात्। भवतामपीदमवश्यमभ्युपगन्तव्यमेव, अन्यथा अग्निप्रजापत्योर्विकल्पः स्यात्, तदेतदाह–यथा चेत्यादिना।

ननु यद्यग्नेर्मान्त्रवर्णिकत्वमङ्गीक्रियेत तर्हि केवललिङ्गकमन्त्रवर्णवत् मिश्रलिङ्ग-

विधानात्; एवं मन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतिविधानेऽपि न बाधकत्वमिति तुल्यम्।

यत्तु-अग्नेर्मान्त्रवर्णिकत्वे "अग्निर्ज्योतिर्ज्योतिस्सूर्यस्स्वाहे" ति मिश्रलिङ्गमन्त्रवर्णबलात् सायं होमस्य द्विदैव(१)त्यत्वापत्तिरिति—

तन्न; अग्निसमुच्चितप्रजापतिविधानवत् सूर्यसमुच्चितस्याविधानात्; प्रबलप्रमाणबाधितेन प्रजापतिना मन्त्रवर्णप्राप्तस्य सूर्यस्य बाधितत्वात्।

यत्तु-अग्नेर्मान्त्रवर्णिकत्वे प्रजापतिविधेरेकेनैव वाक्येन सिद्धेः 'यदग्नये च प्रजापतये च सायं जुहोति, "यत्सूर्याय च प्रजापतये च प्रातः" इति वाक्यद्वयं व्यर्थमिति—

तन्न; भवेद्व्यर्थं यदि प्रजापतिमात्रविधानं विवक्षितं स्यात्, सायंहोमेऽग्निसमुच्चितप्रजापतिविधानम्, प्रातर्होमे 'सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहे'ति मन्त्रवर्णप्राप्तसूर्यसमुच्चितप्रजापतिविधानं च विवक्षितम्। न चैतदेकन

---

कमन्त्रवर्णस्यापि देवताप्रापकत्वाङ्गीकारापत्त्या तद्बोधितस्याग्नेरिव सूर्यस्यापि सायंकाले प्राप्त्यापत्त्या सायंहोमस्य द्विदैवत्यत्वापत्तिरित्याशङ्कामनुवदति—यत्त्विति। तां निराकरोति—तन्नेति। अग्निसमुच्चितेति। 'यदग्नये चे' ति वाक्येन सायंहोमोद्देशेनाग्निसमुच्चितप्रजापतिरेव विधीयते, न तु सूर्यसमुच्चितप्रजापतिः। अतश्च मन्त्रवर्णप्राप्तत्वेऽपि सूर्यस्य ब्राह्मणवाक्येन तत्समुच्चितप्रजापतेरविधानात् प्रबलप्रमाणबोधितेन प्रजापतिना सूर्यस्य बाधावश्यम्भावात् न सायंहोमस्य द्विदैवत्यत्वापत्तिरिति भावः। एवं प्रातर्होमेऽप्यग्नेर्बाधो वेदितव्यः। नचैवं सति प्रातर्होमेऽग्नेः प्राप्त्यभावेनाग्निहोत्रपदस्य कथं तत्प्रख्यन्यायेन नामधेयत्वमिति वाच्यम्। सायंहोमे प्राप्तिमादायैव तदुपपत्तेः; इष्यत एव ह्येकदेशप्रवृत्तिनिमित्तमादायापि नामधेयत्वं वैश्वदेवादिपदेषु, यथोक्तं वासुदेवदीक्षितैः कुतूहलवृत्तौ-अतः 'अग्निहोत्रं जुहोति' इत्यग्निहोत्रपदं पूर्वाहुतेरेव नामधेयम्, एकस्यैवाग्निहोत्रस्य 'सायं जुहोति' 'प्रातर्जुहोति' इत्यभ्यासविधिः, अतः प्रातर्होमस्य सूर्यदेवत्यत्वेऽपि सायं होमस्याग्निदेवत्यत्वमात्रेणाग्निहोत्रशब्दस्योपपत्तिः कदाचिदग्निदेवत्यत्वयोगेन समाख्यानोपपत्तेरिति। अतो न दोषः।

ननु होमोद्देशेन प्रजापतिमात्रविधाने तस्य कालद्वयेऽप्यावृत्त्या प्रजापतेरपि दध्यादिवदावृत्तिसिद्धेः व्यर्थं वाक्यद्वयमिति पूर्वपद्युक्तं दूषणमनुवदति—यत्त्विति। यदि 'यदग्नये चेति' प्रजापतिमात्रविधानं भवतोऽभिप्रेतं तर्हि प्रजापतये जुहोतीत्येतावतैवालम्, तस्यावृत्त्यैवोभयत्र सम्बन्धसिद्धेः। अतस्तद्वाक्यस्थं 'अग्नये' 'साय'मिति पदद्वयं वाक्यान्तरञ्च व्यर्थमित्यर्थः।

समाधत्ते-तन्नेति। सायंहोमेऽग्निसमुच्चितप्रजापतेरेव विधातुमिष्टत्वेन तस्य चाग्निपदमन्तरा असम्भवेनाग्निपदस्यावश्यकत्वात्, सायंहोम एव च तत्प्राप्तेरिष्टतया तदर्थं सायंशब्दस्याप्यावश्यकत्वेन, प्रातःकालीनहोमे सूर्यसमुच्चितप्रजापतेरप्राप्ततया तत्र तद्वि-

---

१. द्विदैवतत्वापत्तिः इति क।

वाक्येन सिध्यति; अतोऽर्थवद्वाक्यद्वयम् ।

यत्तु-अग्नेर्मान्त्रवर्णिकत्वे मन्त्रवर्णस्य "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोती" ति वाक्येन सायंहोमे विनियुक्तत्वात् तत्प्रकाश्यस्याग्नेरपि प्रजापतिसमुच्चितस्य तत्रैव देवतात्वावगतेः 'यदग्नये चे' ति वाक्ये सायंशब्दो व्यर्थ इति, एवं 'यत्सूर्याय चे'ति वाक्ये प्रातःशब्दो व्यर्थ इति । किञ्च मन्त्रवर्णेन (१)ज्योतिष्ट्वगुणविशिष्टस्याग्नेः प्रकाशनात् विशिष्टस्यैव देवतात्वापात इति ।

तदपि न; होमानुवादेन देवताद्वयविधानेऽपि मन्त्रवर्णयोर्लिङ्गादेव प्राप्तिसंभवात्तद्विध्यानर्थक्यात् । मिश्रलिङ्गमन्त्रविधिपर्युद(२)स्तयोः प्रतिप्रसवार्थं वाक्यान्तरस्याप्यावश्यकत्वादित्यर्थः ।

---

इतोऽन्यदपि दोषद्वयमापादितमनुवदति **यत्त्विति** । न च पूर्वोक्तरीत्या समाधानम्, तस्य मन्त्रविनियोगविधिनैव प्राप्तत्वात् । **तत्प्रकाश्यस्य** मन्त्रवर्णप्रकाश्यस्य । **तत्रैव** सायंहोम एव । **देवतात्वावगतेरिति** । यागीयद्रव्यदेवतादिप्रकाशनस्यैव मन्त्रकार्यत्वेन स यस्मिन् कर्मणि विनियुक्तः तत्र स्वप्रतिपाद्याया देवताया अङ्गत्वावश्यम्भावादिति भावः। **व्यर्थ इति** । प्राप्तस्य पुनर्विधाने प्रयोजनाभावादिति भावः । **प्रातश्शब्द इति** । तत्रापि सूर्यस्य मान्त्रवर्णिकस्य प्रातःकाले देवतात्वेन प्राप्तत्वादित्यर्थः । **ज्योतिष्ट्वगुणविशिष्टस्येति** । मन्त्रे 'अग्निर्ज्योति'रिति ज्योतिःपदसामानाधिकरण्यात् 'विष्णवे शिपिविष्टाय' इत्यादौ शिपिविष्टगुणस्य विष्णुविशेषणत्वमिव ज्योतिष्ट्वरूपगुणस्याग्निविशेषणत्वप्रतीतेरिति भावः । **विशिष्टस्य** ज्योतिष्ट्वगुणविशिष्टस्य । अस्मन्मते तु केवलाग्नेरेव समुच्चयविशेषणतया विधानात् न तदापत्तिरिति भावः ।

प्रतिबन्द्या उत्तरयति-**होमानुवादेनेति** । 'यदग्नये चे'ति वाक्येन होमोद्देशेनाग्निप्रजापत्योरुभयोरपि विधानमङ्गीकुर्वतो भवतः पक्षेऽपि होमीयदेवताप्रकाशकयोः मन्त्रयोः लिङ्गादेव व्यवस्थया तत्तद्धोमाङ्गत्वावगमे पुनस्तद्विनियोजकयोः **"अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति" "सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः"** इति वाक्ययोर्वैयर्थ्यमापद्यत इत्यर्थः । अस्मन्मते केवलं सायंप्रातश्शब्दयोरेव वैयर्थ्यमापाद्यते भवता, भवन्मते तु वाक्यद्वयस्यापि वैयर्थ्यमापद्यत इति किमिदं वृश्चिकदंशाद्भीतस्य सर्पमुखे पतनमिति भावः । **तद्विध्यानर्थक्यात्** मन्त्रविध्यानर्थक्यात् । यदि तु एतद्विध्यभावे **"अग्निर्ज्योतिर्ज्योतिस्सूर्यस्स्वाहेति सायं जुहोति" "सूर्यो ज्योतिर्ज्योतिरग्निस्स्वाहेति प्रातः"** इति वाक्याभ्यां मिश्रलिङ्गकमन्त्रवर्णयोः विनियोगात् विनियुक्ताभ्यां ताभ्यां पाठमात्रेण प्रकरणादिना वा सम्भवत्प्राप्तिकयोः शुद्धलिङ्गकमन्त्रयोः बाधे प्रसक्ते पुनः तत्प्रतिप्रसवार्थं विधिरित्याशङ्क्येत तदापि लिङ्गादेव व्यवस्थासिद्धेः तद्वाक्यगतसायंप्रातःपदयोः वैयर्थ्यं नैवापवदितुं शक्यमित्याह-**मिश्रलिङ्गेत्यादिना** । **प्रतिप्रसवार्थमिति** । प्रसक्तप्राप्तिकस्य कारणान्तरेण निवृत्तिप्रसक्तौ तत्प्राप्त्यर्थं

---

१. ज्योतिर्गुण इति क । २. दस्तयोः ।

थार्थे विधानेऽपि तद्विधिगतयोः सायंप्रातःशब्दयोरानर्थक्यम्, विधीयमानयोर्मन्त्रयोर्व्यवस्थयैव प्राप्तिसंभवात्तत्प्रकाश्ययोर्देवतयोर्व्यवस्थितत्वात्। अनुवादत्वोक्तिस्तूभयत्र तुल्येति ।

मान्त्रवर्णिकत्वेऽपि अग्नेः केवलस्यैव देवतात्वं न गुणविशिष्टस्य। "यदग्नये चे"ति वाक्ये "अग्नेः पूर्वाहुति"रित्यत्र च केवलस्यैवाग्नेः संकीर्तनात केवलस्यैव देवतात्वावगतेः। यथा ह्युपांशुयाजे विष्ण्वादेर्मान्त्रवर्णिकत्वेऽपि न गुणविशिष्टस्य देवतात्वं "विष्णुरुपांशु यष्टव्य" इत्यर्थवादे केवलस्यैव संकीर्तनात्तद्वदिति ।

अतश्च मान्त्रवर्णिकत्वे दोषाभावाद्देवताद्वयविधाने च गौरवापत्तेरन्यतः

---

पुनर्विधिः प्रतिप्रसवविधिः। एवञ्च केवललिङ्गकमन्त्रवर्णयोः पाठतः प्रसक्तप्राप्तिकयोः मिश्रलिङ्गकमन्त्रविधिबलात् निवृत्तौ अनेन विधिना तत्प्राप्तिः प्रतिप्रसूयत इत्यङ्गीकारेऽपीत्यर्थः। व्यवस्थयैवेति। 'अग्निर्ज्योति'रिति सायं होम एव, 'सूर्यो ज्योति'रिति प्रातर्होम एवेति व्यवस्थाकरणेनेत्यर्थः। यदि तु अनुवादत्वमेव तयोरङ्गीक्रियेत तर्हि मत्पक्षेऽपि तत् तुल्यमेवेति कुतोऽहमेव पर्यनुयोज्यः इत्याह-अनुवादत्वोक्तिरिति। 'यदग्नये' 'यत्सूर्याय' इति वाक्ययोर्देवताद्वयविधिपक्षे तद्वाक्यगतसायंप्रातः पदे व्यवस्थां प्राप्तकालानुवादके एव इति यद्युच्येत तदस्मत्पक्षेऽपि तुल्यमित्यर्थः।

द्वितीयं दूषणमुद्धरति—मान्त्रवर्णिकत्वेऽपीति। केवलस्यैवेति। न हि मन्त्रप्रतिपाद्यगुणानां द्रव्यत्यागकालीनोच्चारणकर्मत्वरूपदेवतात्वान्तर्भावः, विधिगतशब्दस्यैव तत्त्वावश्यम्भावस्य दशमे साधितत्वात्। विधिश्च केवलस्यैवाग्नेर्देवतात्वमनुवदति, न तु गुणविशिष्टस्य। एवं क्रमबोधकवाक्येऽपि संकीर्तनात् तस्यैव देवतात्वमिति। विष्ण्वादेः इत्यादिपदेन प्रजापत्यग्नीषोमाः परिगृह्यन्ते।

एवञ्चाग्नेर्मान्त्रवर्णिकत्वाङ्गीकारेऽपि भवदुक्तानां दोषाणामप्रसक्तेः भवन्मत एव चोभयविधानकृतगौरवप्रसङ्गात् मत्पक्ष एव श्रेयानित्याह-अतश्चेति। देवताद्वयविधाने अग्नेः प्रजापतेश्च विधौ। ननु निपातोपसर्गाणां द्योतकत्वपक्षस्यैवाश्रयणात् तदा च तत्समभिव्याहृतस्यैकस्यैव पदस्य विशिष्टार्थवाचकत्वं इतरेषाञ्च तत्समभिव्याहृतानां तात्पर्यग्राहकत्वमित्यङ्गीकारात् प्रकृते चैकस्यैव प्रजापतिपदस्य अग्निसमुच्चितप्रजापतिविधायकत्वमङ्गीकृत्येतरयोस्तात्पर्यग्राहकत्वाङ्गीकारे न तयोर्वैयर्थ्यं न वानेकविधानकृतो वाक्यभेद इत्यत आह—गौरवापत्तेरिति। यद्यप्यस्मिन् पक्षे नानेकविधानकृतो वाक्यभेदः, तथापि श्रुतस्य प्रजापतिपदस्य विशिष्टार्थबोधकत्वकल्पने इतरयोश्च तत्तात्पर्यग्राहकत्वकल्पनेऽस्त्येव गौरवमिति भावः। तदेव द्योतयति-अन्यतः प्राप्तेत्यादिना। एतावता द्योतकत्वपक्षाङ्गीकारेऽपि दोषोऽपरिहार्य इत्युक्तम्। वस्तुतस्तु तत्तन्निपातोपसर्गसमभिव्याहारे तत्तत्पदेषु विशिष्टार्थबोधकत्वरूपशक्तिकल्पनं निपातादीनां च द्योतकत्वशक्तिकल्पनमित्यनेकशक्तिकल्पनाप्रयुक्तगौरवापत्त्या वाचकत्वपक्ष एव श्रेयानभ्युपगन्तव्यः, अतश्चाग्निसूर्ययोः भिन्नपदोपात्तत्वात् कारकत्वाच्च परस्परवैशिष्ट्यानुपपत्त्या पृथक् पृथगेव

**प्राप्तमग्निमनूद्य तत्समुच्चितः प्रजापतिरेवात्र विधीयते। होमानुवादेनोभयविधाने वाक्यभेदप्रसङ्गाच्च।**

**न च चकारश्रवणान्न वाक्यभेद इति वाच्यम्। चकारार्थो हि समुच्चयः। तं च समुच्चयं यदि चकारः प्राधान्येन ब्रूयात् तदा प्रधानस्यानेकविशेषणसंग्राहकत्वादारुण्यादिविशिष्टक्रयविधान इव कारकद्वयसमुच्चयविधाने वाक्यभेदो न भवेत्। न च चकारः समुच्चयं प्राधान्येन ब्रूते, परोपसर्जनत्वेनैवाभिधानात्।**

**अत एव दशमे भाष्यकारैश्चकारस्य समुच्चयशब्दाद्वैलक्षण्यं प्रतिपादितम्-समुच्चयशब्दो हि तं प्राधान्येन ब्रूते, न चकारः। यदि हि प्राधान्येन**

---

विध्यन्वयावश्यम्भावेनानेकविधानकृतो वाक्यभेदो दुष्परिहर एवेत्याह—**उभयेति**।

स्यादयं दोषो यद्यग्निप्रजापत्योरुभयोरपि स्वातन्त्र्येण विधावन्वयः स्वीक्रियेत नत्वेतदस्ति, किन्तु चकारार्थे समुच्चय एव, तस्य च निपातार्थत्वेन परस्परान्वयस्य व्युत्पन्नत्वात् कुतो वाक्यभेद इति पूर्वोक्तं पक्षमनुवदति-**नचेति**। **चकारश्रवणात्** 'अग्नये च' 'प्रजापतये च' इति चकारद्वयश्रवणात्। **आरुण्यादिविशिष्टेति**। यथा "**अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति**" इत्यत्र आरुण्यपिङ्गाक्ष्येकहायनीनां गुणभूतानां प्रधानया क्रयभावनया वशीकारात् तद्विशिष्टाया एव च तस्या विधानात् न वाक्यभेदः, तद्वदत्रापि यदि चकारार्थस्य समुच्चयस्य प्राधान्यं स्यात् तदा तेन कारकयोः वशीकारसम्भवात् तद्विशिष्टसमुच्चयविधानं युक्तं स्यात्, न त्वेतदस्तीत्यर्थः। तत्र हेतुमाह-**परोपसर्जनत्वेनेति**। निपातोपसर्गाणां नित्यमन्योपसर्जनीभूतार्थप्रतिपादकत्वस्यैव स्वभावसिद्धत्वादिति भावः।

चकारस्यान्योपसर्जनीभूतसमुच्चयप्रतिपादकत्वे भाष्यकारोक्तिं प्रमाणयति—**अत एवेति**। दशमे हि "**तस्य धेनुरिति गवां प्रकृतौ**" इत्यधिकरणे "**अथैष भूर्वैश्वदेवः**" इति वाक्यविहिते भूसंज्ञके एकाहे "**धेनुर्दक्षिणा**" इति विहितायाः धेनुरूपायाः दक्षिणायाः प्रकृतिप्राप्तगवादिसर्वद्रव्यबाधकत्वम्? उत गोमात्रबाधकत्वम्? इति सन्दिह्य प्रकृतौ ज्योतिष्टोमे "**गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा**" इति वाक्यगतो दक्षिणाशब्दः गवादिभिः प्रत्येकं सम्बध्यते। न च चशब्दश्रवणात् तेषां समुदायः प्रतीयत इति वाच्यम्। चशब्दस्य प्राधान्येन समुच्चयावाचकत्वात्। अतश्च प्रत्येकमेव दक्षिणात्वात् धेनुः साहश्यात् गवामेव निवर्तिकेति पूर्वपक्षप्रस्तावे भाष्यकारेणोक्तम्-**चशब्दः समुच्चयार्थो भवति न तु समुच्चयस्य निर्देशकः, परपदविशेषणार्थं तु समुच्चयमुपादत्ते, यदि हि निर्दिशेत् क्रियागुणैः समुच्चयः सम्बध्येत, समुच्चयः शोभनः समुच्चयो द्रष्टव्यः इति यथा भवति तथा च शोभनः च द्रष्टव्यः इति वा भविष्यति यथेह समुच्चेययोः षष्ठी भवति धवखदिरयोस्समुच्चय इति, एवं धवः खदिरश्चेत्यत्राभविष्यत्, न तु भवति, तस्मात् न चशब्दः समुच्चयं निर्दिशति**" इति। इदं च भाष्यवाक्यमर्थतोऽनुवदति-**समुच्चयशब्द**

ब्रूयात् तदा तत्प्रतिपन्नः समुच्चयः क्रियागुणैः सम्बध्येत । समुच्चयः शोभनः समुच्चयो द्रष्टव्य इतिवत् च शोभनः च द्रष्टव्य इति प्रयोगः स्यात् । समुच्चयशब्दवच्चकारस्य प्राधान्येन समुच्चयवाचित्वे धवखदिरयोः समुच्चय इतिवत् धवखदिरयोश्चेत्यपि प्रयोगः स्यात् । अतश्चकारः समुच्चयं प्राधान्येन न ब्रूते, येन प्रधानस्यैकस्य विधानान्न वाक्यभेदो भवेत् । किंतु कारकद्वयोपसर्जनत्वेनैव स तं ब्रूते-समुच्चितौ अग्निप्रजापती-इति । प्रधानद्वयविधाने च वाक्यभेदः स्यादेव, यथा ग्रहोद्देशेन संमार्गैकत्वविधाने ।

यद्यपि चकारः समुच्चयं प्राधान्येन ब्रूयात्, तथापि तस्य कारकद्वयं प्रति प्राधान्यमनुपपन्नम्, विभक्त्यभिहितस्य कारकद्वयस्य क्रियोपसर्जनत्वेन समुच्चयोपसर्जनत्वाभावात् । कृदन्तादिशब्दैरुपस्थितं हि कारकं क्रि-

---

इति । यथा धवखदिरयोस्समुच्चयः इत्यादौ धवखदिराद्यपेक्षया प्रधानतया समुच्चयं ब्रूते समुच्चयशब्दः तद्वदित्यर्थः । तत्प्रतिपन्नः चकारावबोधितः । क्रियागुणैरिति । क्रियाभिः गुणैश्च सम्बन्धं प्राप्नुयात्, न तु तदस्तीत्यर्थः । तथात्वे दोषमाह-समुच्चय इति । समुच्चयशब्दात् प्राधान्येन प्रतीतस्य यथा समुच्चयस्य शोभनरूपगुणयोगात् समुच्चयः शोभनः इति प्रयोगो भवति, एवं चशब्दादपि समुच्चयस्य प्राधान्येन प्रतीतौ च शोभनः इति प्रयोगः स्यादित्यर्थः । एवं गुणसम्बन्धे उदाहृत्य क्रियासम्बन्धे उदाहरति-समुच्चयो द्रष्टव्य इति । एवं चशब्दार्थसमुच्चयस्य प्राधान्ये तत्र विशेषणतयान्वययोग्यपदोत्तरं यथा षष्ठी भवति तद्वदत्रापि भवेदित्याह—समुच्चयशब्दवदिति ।

एतावता किमायातम् ? अत आह-अत इति । ग्रहोद्देशेनेति । यथा "ग्रहं सम्मार्ष्टि" इत्यत्र प्राप्तग्रहोद्देशेन सम्मार्गस्य ग्रहगतैकत्वस्य च विधाने वाक्यभेदः तद्वदित्यर्थः । अयमत्र विषयः ज्योतिष्टोमप्रकरणे "दशापवित्रेण ग्रहं सम्मार्ष्टि" इति श्रुतम् । अभिषुतानां सोमानां पवित्रीकरणाय गृहीतो वस्त्रखण्डो दशाविशिष्टो दशापवित्रम् । तेन ग्रहं प्रोञ्छेदिति वाक्यार्थः । ग्रहशब्देन सोमरसाधारभूतः पात्रविशेषः पात्रगतो वा रस उच्यत इति पूर्वमुक्तम् । तत्र च सन्ति दश ग्रहाः । तेषां सर्वेषां प्रोञ्छनं, उतैकस्यैव ? इति संशयः । 'ग्रहैर्जुहोति' इत्यनेन प्राप्ताः ग्रहाः, तदुद्देशेन 'ग्रहं' इति विभक्त्युपात्तस्यैकत्वस्य धातूपात्तस्य च सम्मार्गस्य विधाने ग्रहं सम्मृज्यात्, यं सम्मृज्यात स एकः इति तदा प्राप्तग्रहोद्देशेन सम्मार्गस्य, एकत्वस्य च विधानं भवति, तदा च वाक्यभेदः प्रसज्यते । स चायुक्तः । 'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः' इत्युक्तेः । अतस्तत्परिहाराय तत्र ग्रहगतमेकत्वमविवक्षितम्, एवं च सर्वेषां ग्रहाणां सम्मार्गः फलति इति । तद्वदत्रापि वाक्यभेदः प्रसज्येतेति ।

चकारस्य प्राधान्येन समुच्चयबोधकत्वेऽङ्गीकृतेऽपि न भवदिष्टं सेत्स्यतीत्याह-यद्यपीति । कारकद्वयं प्रतीति । अग्नये प्रजापतय इति चतुर्थीकारकद्वयापेक्षयेत्यर्थः । कुत एतत् ? अत आह-विभक्तीति । क्रियान्वयित्वस्यैव कारकत्वादित्यर्थः । ननु क्रियातोऽन्येनापि क्वचित् कारकं सम्बध्नातीति कथमत्रापि न तथा ? इत्यत आह-कृदन्ता-

यातोऽन्येन संबध्यते-कारकसमुच्चयः करणसमुच्चय इति। विभक्त्यभिहितं तु क्रिययैव, कारकाणां तयैवान्वयात्। अतश्चकारेणोच्यमानः स कारकोपसर्जनत्वेनैवोच्यते। कारकद्वयं च प्रधानम्। एकोद्देशेन च प्रधानद्वयविधाने वाक्यभेद एव। यथाहुः—

अनेकपदसंबद्धं यद्येकमपि कारकम्।
तथापि तदनावृत्तैः प्रत्ययैर्न विधीयते॥ इति॥

यच्च-यथा दक्षिणानुवादेन गवादीनामनेकेषां विधाने न वाक्भेदः तथा कारकद्वयविधानेऽपीति। तन्न; नहि 'गौश्चाश्वश्च' त्यस्मिन् वाक्ये दक्षिणा-

---

दिति। कारकादिशब्दैरभिहितस्यापि कारकस्य नामार्थत्वेन तस्य च समस्तस्थले स्वोत्तरपदार्थान्वयस्यैवौचित्येन तत्र तथाङ्गीकारेऽपि विभक्त्यभिहितस्य तस्य क्रियातोऽन्येनान्वयस्याव्युत्पन्नत्वादिति भावः। कुत्र क्रियातोऽन्येनापि सम्बन्धः कारकस्याङ्गीक्रियते? तदुदाहरति-कारकसमुच्चय इति। उक्तमर्थं प्रकृते सङ्गमयति-अत इति। एवञ्च गुणभूतेन चकारार्थसमुच्चयेन प्रधानभूतयोरग्निप्रजापत्योः वशीकारासम्भवात् परस्परनिरपेक्षयोरेव तयोः विध्यन्वयेन तदर्थं विध्यावृत्तेरवश्यंभावे वाक्यभेदो दुष्परिहर एवेत्याह-एकोद्देशेनेति। न च विभिन्नविभक्तिश्रवणेऽपि कारकस्य सम्प्रदानरूपस्यैकत्वात् कथमनेकविधानमिति वाच्यम्। यत्र विभक्तिद्वयश्रवणं तत्र द्वयोरपि कारकयोः परस्परनैरपेक्ष्येणैव प्रथमतो भावनान्वये जाते अनन्तरं विशेषणविशेष्यभावादिना परस्परसम्बन्धयोग्यत्वे सति अरुणैकहायनीन्यायेन तथा सम्बन्धः। यत्र तु न तादृशी योग्यता तत्र प्रत्येकमेव विधिव्यापार इति तत्र विध्यावृत्तेरवश्यंभावात्।

अत्राघाराग्निहोत्राधिकरणवार्तिकं प्रमाणयति-अनेकेति। विभिन्नार्थबोधकविभिन्नप्रातिपदिकसम्बद्धं यद्यप्येकं कारकं भवेत् तथापि अनावृत्तैरावृत्तिरहितैः प्रत्ययैः तत् कारकं न विधातुं शक्यते। वस्तुतस्तु अत्र कारकमप्येनेकमेवेति विधायकप्रत्ययावृत्तिरवश्यंभाविन्येवेत्यर्थः। अयं भावः-यद्यपि प्रजापतिशब्दस्य प्रजानां पतिरिति व्युत्पत्त्या अग्निविशेषणत्वाङ्गीकारेण प्रजापतित्वगुणविशिष्टस्याग्नेः 'अग्नये दात्रे' इत्यादिवत् एकमेव देवतात्वमुच्येत तथापि क्रियान्वयात् पूर्वं विशेषणविशेष्यभावाप्रतीतेः प्रत्येकं विधिव्यापारात् विधिप्रत्ययावृत्तिरवश्यंभाविनी किमुत यदा प्रजापतिशब्दस्यान्यत्र रूढत्वेनाग्निविशेषणत्वासम्भवेन प्रत्येकं विभक्तिश्रवणाच्च पृथगेव कारकत्वमिति।

यदुक्तं पूर्वं गवादीनामनेकेषां विधानवत् वाक्यभेदो न भविष्यतीति तदनूद्य खण्डयति-यच्चेति। भवेदेवं यदि दक्षिणानुवादेन गवादयो विधीयेरन्, न त्वेतदस्ति, तथात्वे वाक्यभेदस्य पूर्वमेवोक्तत्वात्। किन्तु द्रव्यसंख्योभयविशिष्टा दक्षिणैव विधीयत इत्याह-नहीति। ननु चशब्दबलात् साहित्यप्रतीतेः परस्परसहितानामेव गवादीनां विधेयत्वमभ्युपगन्तव्यम्। अत एव भूनाम्न्येकाहे दक्षिणात्वेन विधीयमानायाः धेन्वाः प्राकृतगवादिसर्वद्रव्यनिवर्तकत्वं दशमोक्तं सङ्गच्छते। अन्यथा पृथक् पृथक् गवादीनां विधेयत्वे पृथगेवानतिसाधनत्वापत्त्या धेन्वा गोमात्रनिवृत्तिः स्यादिति दाशमिकाधिकरणविरोध आपद्येत। अतश्च चशब्दबलात् इतरेतरसहितानामेव विधेयत्वप्रतीतेः कथं वाक्य-

**नुवादेन गवादयो विधीयन्ते, उक्तरीत्या वाक्यभेदापत्तेः। चकारश्रवणेन(१) कथञ्चित्परिहारेऽपि गवादीनामनेकेषां द्वादशशतसङ्ख्यायाश्च विधाने वाक्यभेद एव ! आध्वर्यवशाखायां 'गौश्चे' त्यादेः 'तस्य द्वादशशत' मित्य·**

---

मेद इत्यत आह–**चकारणेति**। यद्यपि चकारश्रवणेऽपि कारकाणां क्रियान्वयस्यैव युक्तत्वेन चकारार्थसमुच्चयान्वयो न युक्तः, तथापि अत्र गवादीनां प्रथमान्तपदोपात्तत्वेन कारकविभक्त्यन्तपदोपात्तत्वाभावात् क्रियान्वयात् पूर्वमपि चशब्दार्थान्वये नातीव किञ्चित् बाधकमित्यभिप्रायेण **कथञ्चिदि**त्युक्तम्। चकारः गवादिद्रव्याणां परं समुच्चयं ब्रूयात्। न द्रव्यसंख्योभयगतं समुच्चयम्। अतश्च दक्षिणोद्देशेन गवादीनां विधाने संख्याया अप्यप्राप्तायाः विधेयत्वापत्त्या प्राप्तोद्देशेनानेकविधानरूपो वाक्यभेदो दुष्परिहर एवेत्याह-**गवादीनामनेकेषामित्यादिना**। ननु ताण्ड्यके (२) **"तस्य नवतिशतं स्तोत्रीयाः"**इति ज्योतिष्टोमगतस्तोत्रीयासंङ्ख्यामभिधाय तदनन्तरं **"तासां या अशीतिशतं ताष्षट्त्रिंशिन्यो विराजः, षडृतवः, ऋतुष्वेव विराजा प्रतितिष्ठति"** इति विराट्सम्पत्तिरूपेण तां स्तुत्वा, अनन्तरं **"अथ या दश, एषा वा आत्मन्या विराट्, एतस्यां वा इदं पुरुषः प्रतिष्ठित"** इति पुरुषस्य विराट्प्रतिष्ठायामुपक्रमात् अन्ते च "एतस्यामेव विराजि प्रतितिष्ठती" ति तत्रै· वोपसंहारात् उपक्रमोपसंहाराभ्यामेकवाक्यत्वावगमात् तन्मध्यपतितस्य **'गौश्चाश्वश्चे'**ति वाक्यस्य तदर्थवादत्वस्यैवावगमेन पृथक् द्रव्यविधित्वासम्भवात् **"तस्य द्वादशशतं दक्षिणा"** इत्यस्य च वाक्यान्तरत्वात् तत्र च गवादीनामश्रवणात् गवादिवाक्ये द्रव्य· विधानस्यैव दूरापेतत्वेन कथमनेकविधानं, कथं वा वाक्यभेददोषः ? इत्यत आह–

---

१. चकारेण इति ख।

२. ताण्ड्यके "तस्य नवतिशतं स्तोत्रीयाः, तासां या अशीतिशतं ताः षट्त्रिंशिन्यो विराजः, षडृतवः ऋतुष्वेव विराजा प्रतितिष्ठति। अथ याः दश, एषा वा आत्मन्या विराट्, एतस्यां वा इदं पुरुषः प्रतिष्ठितः। गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्चैतस्यामेव विराजि प्रतितिष्ठति। तस्य द्वादशशतं दक्षिणाः" इति श्रूयते। अस्यार्थः—तस्य ज्योतिष्टोमस्य पूर्व· विहितस्तोमानुसारेण नवत्युत्तरशतसङ्ख्याकाः (१९०) स्तोत्रीयास्सम्पद्यन्ते। संख्यासम्पत्तिश्चेत्थम्— प्रातस्सवने तावत् बहिष्पवमानस्तोत्रे नव (९) ऋचः। चतुर्ष्वाज्यस्तोत्रेषु प्रत्येकं पञ्चदशस्तोमकेषु मिलित्वा षष्टिः (६०) आहत्य नवषष्टिः (६९) स्तोत्रीयाः। माध्यन्दिनसवने—चतुर्षु पृष्ठस्तोत्रेषु प्रत्येकं सप्तदशस्तोमकेषु मिलित्वा अष्टषष्ठिः (६८) माध्यन्दिपवमाने पञ्चदशस्तोमके पञ्चदश (१५) आहत्य त्र्युत्तराशीतिः (८३) स्तोत्रीयाः। तृतीयसवने–आर्भवपवमानस्तोत्रस्य सप्तदशस्तोमकस्य सप्तदश (१७) अग्निष्टोमस्तोत्रस्य एकविंशतिस्तोमकस्य एकविंशतिः (२१) मिलित्वाष्टत्रिंशत्। एवं रीत्या सवनत्रयेऽपि स्तोत्रीयाणामृचां संख्या नवत्युत्तरशतम् (१९०) तासां स्तोत्रीयाणां मध्ये याः अशीत्युत्तरशतसं· ख्याकाः स्तोत्रीयाः ताः त्रिंशत्संख्यया विभज्यमानाः षट् विराजो भवन्ति "त्रिंशदक्षरा विराडि" त्युक्तत्वात्। तस्मादेकैकया विराजा ऋतुष्वेव यजमानः प्रतिष्ठितो भवति। अथाशीतिशतानन्तरं अव· शिष्टाः याः दश स्तोत्रीयाः, एषैवात्मसम्बन्धिनी विराट्, तस्यां विराजि इदं वक्ष्यमाणगवादिद्रव्यदशकं तदात्मकः पुरुषः तत्रैव प्रतिष्ठितः। एतासु दशसु स्तोत्रीयासु विराडात्मिकासु गवादिदशद्रव्यात्मकः पुरुषः प्रतिष्ठितो भवतीत्यर्थः। इदं पुरुष इति द्रव्यपुरुषयोरभेदात् सामानाधिकरण्यम्। तस्य द्वादशशतमिति भिन्नं वाक्यम्।

**न्तस्य सहश्रुतत्वेन चास्यैकवाक्यत्वमित्युक्तं दशमे। अतोऽनेन वाक्येनोभयविशिष्टा दक्षिणैव विधीयते विशिष्टविधानाच्च न वाक्यभेदः। अत एव पार्थसारथिमिश्रैर्दशमे तत्र तत्र-'सोभयविशिष्टा विधीयते' इति, 'अनेकगवाद्यात्मिकैका दक्षिणा विधीयत'-इति चोक्तम्।**

**न चैवं "ऋत्विग्भ्यो दक्षिणां ददाती" त्यस्यानर्थक्यम्, तस्यानुवादत्वात्, ऋत्विक्संबन्धपरत्वाद्वा। दक्षिणाशब्दसामर्थ्याद्धि ऋत्विजां चमसाध्वर्यवशाखयामिति।**

नात्र ताण्ड्यश्रुतिगतस्य वाक्यस्योदाहरणता। तस्य भवदुक्तदोषग्रस्तत्वात्। किन्तु आध्वर्यवशाखायां गौश्चेत्यादिकं "तस्य द्वादशशत" मित्यन्तमेकं वाक्यमस्तीति भाष्योदाहरणादवगतेः तदादायैवैवमुक्तमिति भावः। यद्यपीदानीमुपलभ्यमानास्वाध्वर्यवशखासु कुत्रापि नोपलभ्यते वाक्यमिदम्, तथाऽपि भाष्यकारवचनप्रामाण्यात् क्वचित् प्रलीनशाखायां भवेदिति सन्तोष्टव्यम्। किमायातमेतावता? अत आह-**अत इति**। प्राप्तदक्षिणानुवादेन द्रव्यसङ्ख्योभयविधाने वाक्यभेदापत्त्या द्रव्यसंख्योभयविशिष्टा दक्षिणैवात्र विधीयते इत्यर्थः। एवञ्च **"ऋत्विग्भ्यो दक्षिणां ददाती"** ति वाक्यस्य न दक्षिणाविधायकत्वम्, किन्तु **"गौश्चे"** त्यस्यैव, अप्राप्तायाश्च तस्याः द्रव्यादिविशिष्टत्वेन विधानाच्च न वाक्यभेदः इत्याह-**विशिष्टेति**। विशिष्टविधिरक्ष एव पार्थसारथिमिश्रसम्मतिमावहतीत्याह—**अत एवेति**। **तत्र तत्रेति**। शास्त्रदीपिकायां दशमतृतीये दक्षिणाधिकरणे तत्रैव धेन्वधिकरणे चेत्यर्थः। तत्र प्रथमवाक्यं दक्षिणाधिकरणस्थं द्वितीयवाक्यं धेन्वधिकरणस्थमिति विवेक्तव्यम्। **सा** दक्षिणा गवादिद्रव्यसंख्यो**भयविशिष्टा विधीयते** अस्मिन्नेव वाक्ये अप्राप्ततया विधिविषयीक्रियते इति, अनेकं यत् गवादिद्रव्यं तदात्मिका दक्षिणा एकैवाप्राप्ततया विधीयते इति च तदर्थः। एवञ्चात्र विशिष्टविधेरवश्याभ्युपगन्तव्यतया गवादीनां परस्परवैशिष्ट्यमन्तरा साक्षात् दक्षिणान्वयेऽपि वाक्यभेदाप्रसक्तेः न तद्दृष्टान्तेनात्र वाक्यभेदोद्धारः कर्तुं शक्य इति भावः।

नन्वेवं अनेनैव वाक्येन दक्षिणायाः प्राप्तत्वात् तस्याः अदृष्टार्थत्वपरिहारार्थं कर्मकरर्त्विगर्थत्वस्यापि वक्तव्यतया तेनैवर्त्विक्सम्बन्धस्यापि प्राप्तत्वेन **'ऋत्विग्भ्यो दक्षिणां ददाती'** ति वाक्ये विधेयस्य कस्याप्यभावात् तस्य वैयर्थ्यमेवापद्येतेति शङ्कते-**नचैवमिति**। **अनुवादत्वादिति**। गौश्चेतिवाक्ये अनेकगुणश्रवणान्यथानुपपत्त्या विशिष्टविधावङ्गीकृते **'ऋत्विग्भ्य'** इति वाक्यस्य वर्तमानापदिष्टस्यानुवादत्वेऽपि नातीव काचित् क्षतिरिति भावः। सम्भवति योजनान्तरेऽनुवादत्वकल्पनमनुचितमिति प्रयोजनान्तरं कथयति-**ऋत्विगिति**। **सम्बन्धपरत्वादिति**। ऋत्विक्सम्बन्धबोधनद्वारा तद्भिन्नचमसाध्वर्युव्यावृत्तिफलकत्वादित्यर्थः। यथाश्रुते उत्तरग्रन्थासङ्गतेः। व्यावृत्तिमेवोपपादयति-**दक्षिणेति**। अत्र च **'एतद्विध्यभावे'** इति पूरणीयम्। दक्षतेरुत्साहकर्मणः निष्पन्नो दक्षिणाशब्दः उत्साहसम्पादकभृत्यर्थकः, भृतिश्च कर्मकरेभ्य एव दीयते, कर्मकराश्च यथा अध्वर्य्वादयः एवं (१) चमसाध्वर्यवोऽपीति एतद्वाक्याभावे तेषामपि दक्षिणासम्बन्धः

१. ज्योतिष्टोमे—ब्रह्म, होतृ, यजमानोद्गातृ, सदस्या मध्यतः कारिण उच्यन्ते। मैत्रावरुण, ब्राह्म-

ध्वर्य्वादीनां च तत्संबन्धः स्यात्'। एतद्वाक्यसत्त्वे च न भवति, ऋत्विक्शब्दस्य ब्रह्मादिगतक्रतुयजननिमित्तत्वेन चमसाध्वर्यूणामृत्विक्त्वाभावस्य तृतीये उक्तत्वात्।

अतश्च 'गौश्चाश्वश्चे' त्यस्मिन् वाक्ये विशिष्टविधानान्न वाक्यभेदः। 'यदग्नये च प्रजापतये च सायं जुहोति' इति तु न विशिष्टविधानम्, होमस्या'ग्निहोत्रं जुहोती'त्यनेन प्राप्तत्वात्। अतश्च होमानुवादेन समुच्चितोभयविधाने वाक्यभेदात् गौरवापत्तेश्च नानेन वाक्येन देवताद्वयं विधीयते। किंतु मन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितः प्रजापतिर्होमोद्देशेन विधीयते।

अतश्च नेदमग्नेः प्रापकम्, किंतु मन्त्रवर्ण एव। अतश्च तेनाग्नेः प्राप्तत्वान्नाग्निहोत्रपदं देवतासमर्पकम्। किं तर्हि? नामधेयमेव। तत्सिद्धमेतत्—तत्प्रख्यशास्त्रादग्निहोत्रशब्दस्य कर्मनामधेयत्वमिति।

एवं प्रयाजादिषु समिदादिदेवतानां "समिधः समिधोऽग्न आज्यस्य

---

प्राप्नुयादित्यर्थः। एतद्वाक्यसत्त्वे वा कथं तेषां व्यावृत्तिः? अत आह—ऋत्विगिति। "ऋत्विग्दधृक्" इति सूत्रेण ऋतावुपपदे यजेः क्विन्नन्तत्वेन निपातितस्य ऋत्विक्शब्दस्य ऋतुयजनविशेषरूपं निमित्तमादायैव ब्रह्मादिषु प्रवर्तमानत्वात् सप्तदशसंख्याश्रवणाच्च यजमानसहितानां ब्रह्मादीनां सप्तदशानामेव ऋत्विक्त्वस्य, चमसाध्वर्युषु तदभावस्य, अतएव तेषां ऋत्विक्पदव्यपदेशाभावस्य च तृतीये साधितत्वेन "ऋत्विग्भ्यो दक्षिणां ददाती" ति वाक्येन ऋत्विङ्मात्रे नियम्यमाना दक्षिणा न तदितरेषु चमसाध्वर्युषु कर्मकरत्वाविशेषेऽपि निवेशमर्हतीति भावः। होतृब्रह्मोद्गातृयजमानसदस्यानां, मैत्रावरुणब्राह्मणाच्छंसि,पोतृ, नेष्ट्राग्नीध्राणां दशानां सम्बन्धिनः तत्तन्नाम्ना व्यवहृताः दश चमसाः सोमरसाधारभूताः पात्रविशेषा ज्योतिष्टोमे सन्ति। तत्रत्यस्य होमार्थं ये विद्यन्ते ते चमसाध्वर्यव इत्युच्यन्ते। तृतीय इति। सप्तमपादे षोडशाधिकरण इति शेषः।

एवञ्च गौश्चेति वाक्ये विशिष्टविधिसम्भवेऽपि यदग्नयेचेति वाक्ये तदनुपपत्त्या प्राप्तहोमोद्देशेन चोभयविधाने वाक्यभेदापत्त्या अन्यतः प्राप्ताग्निसमुच्चितप्रजापतेरेव विधिरभ्युपगन्तव्य इत्याह—अतश्चेत्यादिना। प्राप्तत्वादिति। अनन्यगतिकस्य तस्यैवोत्पत्तिविधित्वस्य पूर्वमुक्तत्वादिति भावः। समुच्चितोभयविधाने समुच्चयविशिष्टयोरग्निप्रजापत्योर्विधाने। मन्त्रवर्ण एवेति। अग्निप्रापक इति शेषः। तेन मन्त्रवर्णेन। अतश्चाग्निरूपदेवतायाः प्रकारान्तरेण प्राप्तत्वात् एतद्विधेयस्य चान्यस्य कस्यचिदभावात् परिशेषादग्निहोत्रपदं नामधेयत्वे पर्यवस्यतीत्याह—नामधेयमेवेति।

एवमग्निहोत्रपदस्य कर्मनामत्वमुपवर्ण्य तत्तुल्यकक्षयाणां समिदादिपदानामपि तेनैव

---

णाच्छंसि, नेष्टृच्छावाकाग्नीध्राख्याहोत्रकाः। तेषां दशानामृत्विजां सम्बन्धिनस्सन्ति दश चमसाः। चमसो नाम सोमरसाधारभूतः पात्रविशेषः। तेषां चमसानां होमोऽध्वर्युणा कर्तव्यः। यद्यन्यत्र व्यापृतः स्यादध्वर्युः तदा केवलं तद्धोमार्थं ये नियन्ते पुरुषाः तेषां चमसाध्वर्यव इति समाख्या।

ध्यान्तव"त्यादिमन्त्रवर्णेभ्यः प्राप्तत्वात् 'समिधो यजती'त्यादिषु समिदादिश-ब्दास्तत्प्रख्यशास्त्रात् कर्मनामधेयानि । यथाहुः—

विधित्सितगुणप्राप्ति शास्त्रमन्यद्यतस्त्विह ।
तस्मात्तत्प्रापणं व्यर्थमिति नामत्वमिष्यते ॥ इति दिक् ॥

( तद्व्यपदेशात् नामधेयत्वनिरूपणम् )

"श्येनेनाभिचरन् यजेते"त्यत्र श्येनशब्दस्य कर्मनामधेयत्वं तद्व्यपदेशात्; तेन व्यपदेशः उपमानम्, तदन्यथानुपपत्त्येति यावत् । तथा हि—यद्विधेयं तस्य स्तुतिर्भवति । तत् यद्यत्र श्येनो विधेयः स्यात् तदार्थवादैस्तस्यैव स्तुतिः कार्या । न च "यथा वै श्येनो निपत्यादत्त एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते" इत्यनेनात्रत्येनार्थवादेन श्येनः स्तोतुं शक्यः । श्येनोपमानेनार्थान्तरस्तुतेः क्रियमाणत्वात् । न च श्येनोपमानेन स एव स्तोतुं शक्यते ।

---

न्यायेन नामधेयत्वमुपपादयति—**एवमिति** । **समिदादी**त्यादिपदेन तनूनपादिडादयो गृह्यन्ते । एवमुत्तरत्रापि **"तनूनपादग्न आज्यस्य वेतु" "इडो अग्न आज्यस्य व्यन्तु"** इत्यादीनां मन्त्रवर्णानां परिग्रहः ।

अग्निहोत्रादिपदानां कर्मनामधेयत्वे सूत्रोक्तहेतुसंग्राहकं वार्तिकं प्रमाणयति—**विधित्सितेति** । अग्निहोत्रादिपदानां गुणविधायकत्वे यो गुणः तैर्विधित्सितः तादृशगुणप्रापकस्य शास्त्रस्यात्र विद्यमानत्वात् तत्प्रापितस्य नरत्नेनापि प्रापणे प्राप्तप्रापणस्य वैयर्थ्यापत्त्या तेषामग्निहोत्रादिपदानां कर्मनामधेयत्वमङ्गीक्रियत इति वार्तिकार्थः ॥

( तद्व्यपदेशान्नामधेयनिरूपणम् )

चतुर्थं नामधेयत्वनिमित्तं निरूपयितुमारभते-**श्येनेति** । अभिपूर्वकचरधातोः वैरिमरणानुकूलो व्यापारोऽर्थः, तदुत्तरं श्रूयमाणः **"लक्षणहेत्वोः क्रियायाः"** इति सूत्रेण विहितः शतृप्रत्ययो हेत्वर्थकः, हेतुरत्र फलरूपो विवक्षितः, एवञ्च-श्येनसंज्ञकेन यागेन अभिचाररूपं फलं भावयेत्–इति विषयवाक्यार्थः । तद्व्यपदेशपदार्थमाह–**तेनेति** । तेन विधित्सितगुणेन सह । **व्यपदेश इति** । विशब्दो भिन्नार्थकः, अपदेशः कथनं, विभिन्नार्थतया कथनमित्यर्थः । फलितार्थमाह-**उपमानमिति** । शेषपूरणं करोति–**तदन्यथानुपपत्त्येति** । उपमानत्वेन कथनान्यथानुपपत्त्येत्यर्थः । अर्थवादे विधित्सितगुणेन सह उपमानत्वेन कथनान्यथानुपपत्त्या श्येनशब्दस्य कर्मनामधेयत्वमिति फलितम् । तदेवोपपादयति-**तथा हीति** । **यत् विधेयं तस्येति** । यदि अन्यस्य विधिः अन्यस्य च स्तुतिः स्यात् तदा विभिन्नविषयकत्वेनार्थवादविध्योरेकार्थत्वाभावादेकवाक्यता न स्यादिति भावः । **श्येनः** श्येनपक्षिरूपो गुणः । **तस्यैव** गुणस्यैव । **यथेति** । श्येनरूपः पक्षी आकाशे डयमानः भूमिष्ठं किञ्चन खाद्यं वस्तु अवलोक्य यथा सहसा निपत्य गृह्णाति एवमेवायमपि यागः शत्रुं सहसा निपत्य गृह्णातीति वाक्यार्थः । अत्र चेदंशब्दार्थो विधेयः, तस्यैव श्येनेन साकमुपमेयभाव उच्यते । स च सादृश्यघटितः भेदमन्तरा न सम्भवतीति श्येनापेक्षया अर्थान्तरमेव किञ्चित् स्तूयत इत्यवश्यं वक्तव्यमित्याशयेनाह— **अर्थान्तरस्तुते-**

उपमानोपमेयभावस्य भिन्ननिष्ठत्वात्। यदा तु श्येनसंज्ञको यागो विधीयते तदा अर्थवादेन श्येनोपमानेन तस्य स्तुतिः कर्तुं शक्यत इति श्येनशब्दस्य तद्व्यपदेशाद्यागनामधेयत्वम्।

तत्सिद्धं निमित्तचतुष्टयात्(१)कर्मनामधेयत्वम्।

( नामधेयत्वे पञ्चमप्रकारनिरूपणम् )

उत्पत्तिशिष्टगुणबलीयस्त्वमपि पञ्चमं केचिन्नामधेयत्वे निमित्तमाहुः। "वैश्वदेवेन यजेत" इत्यत्र वैश्वदेवशब्दस्य कर्मनामधेयत्वमुत्पत्तिशिष्टगुणबलीयस्त्वात्। उक्तमत्वर्थलक्षणादिप्रकारचतुष्टयासम्भवात्।

तथा हि—न तावन्मत्वर्थलक्षणाभयान्नामधेयत्वं(२) वक्तुं युक्तम्,

---

त्विति। भिन्ननिष्ठत्वादिति। प्रसिद्धस्यैव पदार्थस्योपमानत्वयोग्यतया अप्रसिद्धस्योपमेयतया, प्रसिद्धत्वाप्रसिद्धयोः परस्परविरुद्धयोरेकनिष्ठत्वाभावेन भिन्ननिष्ठत्वावश्यम्भावादित्यर्थः। नात्रानन्वयालङ्कारः रामरावणयोर्युद्धमित्यादाविव शङ्क्यः, तत्रोपमानान्तराभावलक्षणया अनन्याचरितत्वख्यापनार्थत्वात्, प्रकृतेऽपि तथात्वे अनेकेषामर्थवादपदानामुपमानान्तराभावलक्षकत्वाङ्गीकारे गौरवापत्तेः। न च व्यञ्जनयैव तदुपस्थितिरस्त्विति वाच्यम्। तस्याः वृत्त्यन्तरत्वानङ्गीकारात्। एवञ्च श्येनपदेन यागोक्तावेवार्थवादिकी स्तुतिराञ्जस्येनोपपद्यत इत्याह—यदा त्विति। ननु अस्य उद्भिदादिन्यायविषयत्वं कुतो न स्यात्, येन न्यायान्तरमाश्रीयत इत्यत आह—तद्व्यपदेशादिति। नात्रोद्भिन्न्यायोऽवतरति, तस्य यौगिकशब्दमात्रप्रवृत्तिकतया रूढेष्वप्रवृत्तेः। नापि चित्रान्यायः, वाक्यभेदाभावात्। न चापि तत्प्रख्यन्यायः, तत्प्रापकशास्त्राभावात्। अतः तद्व्यपदेशादेवात्र नामत्वं वक्तव्यमिति भावः।

एवमुद्भिदादिपदानां नामत्वे निमित्तचतुष्टयमुपवर्ण्य उत्पत्तिशिष्टगुणबलीयस्त्वस्यापि नामधेयत्वे निमित्तत्वं ब्रुवतां न्यायसुधाकाराणां मतमग्रे निरूपयिष्यमाणं स्वानभिमतं सूचयन् उपसंहरति—तत्सिद्धमिति।

( नामधेयत्वे पञ्चमप्रकारः )

एवं स्वाभिमतं निमित्तचतुष्टयमुपवर्ण्य पञ्चमं न्यायसुधाकृदभिप्रेतं प्रकारमुपवर्णयति—उत्पत्तीति। उत्पत्तिपदेनोत्पत्तिवाक्यं लक्ष्यते। कर्मोत्पत्तिवाक्य एव कर्मणा सह शिष्टः विहितो यो गुणः तस्य बलीयस्त्वमित्यर्थः। तदुदाहरति—वैश्वदेवेनेति। चातुर्मास्यसंज्ञके कर्मणि चत्वारि पर्वाणि—वैश्वदेवः, वरुणप्रघासः, साकमेधः, शुनासीरीयश्चेति। तत्र वैश्वदेवाख्ये प्रथमे पर्वणि "आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुँ सावित्रं द्वादशकपालँ, सारस्वतं चरुं, पौष्णं चरुं, मारुतँ सप्तकपालं, वैश्वदेवीमामिक्षां, द्यावापृथिव्यमेककपालम्" इत्यष्टौ यागान् विधाय तत्सन्निधौ श्रुतं—वैश्वदेवेन यजेतेति। तत्र वैश्वदेवशब्दोऽष्टानामपि पूर्वोक्तानां कर्मणां नामधेयमित्येतत् उत्पत्तिशिष्टगुणबलीयस्त्वरूपात् पञ्चमप्रमाणादित्यर्थः।

कथं पूर्वोक्तनिमित्तचतुष्टयान्यतमेन नात्र नामत्वसिद्धिः? अत आह—तथा हीति।

---

१. नामधेयत्वम् २. युक्तमिति वक्तुं शक्यम्।

'वैश्वदेवेने'ति तद्धितेनैव मत्वर्थस्य यागस्योक्तत्वात्। 'सास्य देवते'त्यस्मिन्नर्थे हि तद्धितस्मरणम्। तत्राऽस्यशब्दस्य तद्धितान्तर्गतस्य यद्यपि 'सूक्तहविषो'रिति स्मृतेः सूक्ते हविषि वा मुख्यत्वमवगतम्, तथापि सर्वनाम्नामुपस्थितवाचित्वात् सूक्तहविषोश्चात्रानुपस्थितत्वात् 'यजेते'त्युपस्थितं यागमेवास्यशब्दोऽभिधत्त इति न यागे मत्वर्थलक्षणा। विश्वदेवरूपैकदेवताविधानाच्च न वाक्यभेदः।

नापि तत्प्रख्यशास्त्रान्नामत्वम्। यत्र हि विधित्सितो गुणोऽन्यतः प्राप्तः, तत्र तत्प्रख्यशास्त्रान्नामधेयत्वम्, यथा-अग्निहोत्रशब्दे। अत्र चाऽऽग्नेयादयोऽष्टौ यागाः प्रकृताः। तत्राऽऽमिक्षायागे यद्यपि विश्वेदेवाः प्राप्ताः-वैश्वदेव्यामिक्षेति, तथापि सप्तसु तेषामप्राप्तत्वात् 'वैश्वदेवेन यजेते'त्यनेन तत्र तद्विधाने न तत्प्रख्यशास्त्रमन्यत् येन तद्धशान्नामत्वं स्यात्।

न चाऽऽमिक्षायागस्यैवैतन्नामेति वाच्यम्। "वैश्वदेवेन यजेते"ति वाक्य-

---

ननु देवतातद्धितस्य "सास्य देवता" इति विहितस्य "सूक्तहविषो"रिति वार्तिकेन सूक्तहविषोरेव नियमितत्वात् कथं तद्धितस्य यागवाचकत्वमित्याशङ्कामनूद्य परिहरति-तत्रेति। अस्य शब्दस्य 'साऽस्य देवता' इति सूत्रघटकस्य 'अस्य' इति शब्दस्य। स्मृतेरिति। स्मृतिरत्र व्याकरणमुच्यते। सूक्तम् ऋचां समूहः। हविः देवतोद्देश्येन त्यज्यमानः चरुपुरोडाशादिः। सर्वनामार्थे विहितस्य तद्धितस्य सर्वनामवदुपस्थितपरामर्शकत्वस्यापि सम्भवात् स्ववाक्योपात्तयजिनैव यागस्योपस्थितत्वेन उपस्थिततत्परामर्शस्यैव युक्तत्वात् "आग्नेयो वै ब्राह्मणो देवतया" "बुध्नन्वानाग्नेयः कायः पावकवान् सौम्यः" इत्यादौ यागादावपि सूक्तहविर्भिन्नेऽर्थे देवतातद्धितदर्शनात्, तत्र सम्बन्धसामान्ये तद्धितमङ्गीकृत्य तस्य विशेषापेक्षायां देवतात्वादिरूपो विशेषलाभः इत्यङ्गीकारे वा प्रकृतेऽपि तस्य समानत्वात् वैश्वदेवशब्देन यागप्रतीतेर्जायमानत्वात् न तदर्थं मत्वर्थलक्षणेत्यर्थः। नापि चित्रान्यायात् नामत्वमित्याह-विश्वदेवेति। विश्वेषां देवानामनेकव्यक्तित्वेऽपि तद्गतदेवतात्वस्यैव विधेयत्वात् तस्य चैकत्वान्नानेकविधानमिति मनसि निदधान आह-एकदेवतेति।

अत्र वैश्यदेवे पर्वणि। तत्र अष्टानां यागानां मध्ये। प्राप्ता इति। "वैश्वदेव्यामिक्षे"ति वाक्येन द्रव्यदेवताविशिष्टयागविधानादिति भावः। सप्तसु आमिक्षायागव्यतिरिक्तेषु आग्नेयादिषु सप्तसु। तेषां विश्वेषां देवानाम्। अन्यतः प्राप्त्यभावेऽपि अनेनैव विधिरङ्गीक्रियताम्; को दोषः? इत्याशङ्क्य यद्येवं तर्हि तत्प्रख्यशास्त्राभावात् न नामत्वं सिध्येत् इत्याह—वैश्वदेवेनेति।

ननु मास्तु क्वचिदप्यनेन देवताविधानम्, आमिक्षायागस्यैव वैश्वदेवीवाक्यविहितस्येदं नामधेयमस्तु, तत्र च तेनैव विश्वेषां देवानां प्राप्तत्वात् तत्प्रख्यन्यायसम्भवात् इत्याशङ्कते—न चेति। कथं वैयर्थ्यम्? "प्राचीनप्रवणे वैश्वदेवेनय जेत" "वसन्ते वैश्वदेवेत यजेत" इत्यादि विधौ वैश्वदेवशब्देन आमिक्षायागग्रहणात् सार्थ-

वैयर्थ्यापत्तेः । वैश्वदेवशब्दस्यामिक्षायागमात्रनामत्वे स एव यागोऽनेनानूद्यते इति वाच्यम् । न च तदनुवादेनाऽस्ति किंचित् कृत्यम् । "प्राचीनप्रवणे वैश्वदेवेन यजेते"ति विधीयमानस्य प्राचीनप्रवणदेशस्य विनाप्येतद्वाक्यमामिक्षायाग एव संबन्धोपपत्तेः, विश्वदेवसम्बन्धात्तस्य ।

आग्नेयाद्यशेषप्रकृतयागनामत्वे तु न 'वैश्वदेवेन यजेते'ति वाक्यानर्थक्यम् । तदा ह्यनेनाष्टौ यागा अनूद्यन्ते । अनुवादेन चैकप्रतीत्यारूढत्वात् समुदितानामष्टानामपि वैश्वदेवशब्दो नामधेयं सिध्यति । एवं च 'प्राचीनप्रवणे वैश्वदेवेन यजेते'त्यत्र वैश्वदेवशब्देनाष्टौ यागाननूद्य प्राचीनप्रवणविधानं तत्र सिद्धं भवति । तद्वाक्यस्याऽसत्त्वे तु अनेन वाक्येनामिक्षायाग एव प्राचीनप्रवणदेशसंबन्धः स्यात् । अतश्चाष्टसु यागेषु प्राचीनप्रवणदेशसंबन्ध एव तद्वाक्यप्रयोजनम् । एवं च वैश्वदेवशब्दोऽष्टानां नामधेयम् । न च तत्र तत्प्रख्यशास्त्रं निमित्तं संभवति । सप्तसु विश्वदेवाप्राप्तेः । अतो न वैश्वदेवशब्दस्य तत्प्रख्यशास्त्रान्नामधेयत्वमिति ।

नापि (१)तद्व्यपदेशात् । तादृशस्य व्यपदेशस्यानुपलम्भात् ।

---

क्यसम्भवात्, अत आह–वैश्वदेवशब्दस्येति । अनेन 'वैश्वदेवेन यजेते'ति वाक्येन **प्राचीनप्रवण इति** । यत्र भूमौ प्राचीनो देशः प्रतीचीनापेक्षया निम्नो वर्तते तत्र वैश्वदेवपर्वणा यजेतेत्यर्थः । **विश्वदेवसम्बन्धादिति** । उत्पत्तिवाक्य एवामिक्षायागस्य विश्वदेवसम्बन्धावगतेः तमादायापि तत्र कालादिविष्युपपत्तेः नास्य विधेः किञ्चित् प्रयोजनमस्तीति भावः ।

सर्वेषां नामत्वे वा कथमानर्थक्यपरिहारः ? तदाह–**तदा हीति** । अनेन वैश्वदेवेन यजेत इति वाक्येन । **सिद्धं भवतीति** । यथा विद्वद्वाक्याभ्यामनन्यप्रयोजनाभ्यां दर्शपूर्णमाससमुदायद्वयानुवादात् फलवाक्यगतेन दर्शपूर्णमासपदेन षण्णां यागानां ग्रहणं तद्वत् अष्टानामप्यनन्यप्रयोजनेनानेनानुवादात् तेषां सर्वेषामेव देशविधौ ग्रहणं कालविधौ च । तद्वारा "अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवती"ति वाक्येन सर्वेषामाग्नेयादीनां फलसम्बन्धसिद्धिः । इतरथा आमिक्षायागस्यैव फलसम्बन्धापत्त्या आग्नेयादीनां तदङ्गता स्यात् । तदा च "अष्टौ हवींषी"त्यष्टानामपि प्रधानत्वेन सङ्कीर्तनमनुपपन्नं स्यादिति भावः । अत्र च देशसम्बन्ध इत्युपलक्षणं वसन्तादिकालसम्बन्धस्यापि । अतश्च वैयर्थ्यपरिहारार्थं प्रकृतसर्वयागनामत्वमेव युक्तं वैश्वदेवशब्दस्येत्याह–**एवञ्चेति** । सर्वयागनामत्वे च आमिक्षायागातिरिक्तेषु प्रापकप्रमाणाभावात् न तत्प्रख्यन्यायस्सम्भवतीत्युपसंहरति–**अत इति** । **प्राचीनप्रवण इति** । यस्य देशस्य प्राग्भागः निम्नतरः पश्चिमभागापेक्षया स देशः प्राचीनप्रवणः इति पूर्वमुक्तम् । **अष्टानां** आग्नेयादिद्यावापृथिव्यान्तानाम् । तत्र यागाष्टकनामत्वे ।

चतुर्थप्रकारस्याप्यसम्भवमाह–**नापीति** । **तादृशस्य** विश्वदेवगतोपमानबोधकस्य । एवञ्च पूर्वोक्तप्रकारचतुष्टयस्यात्र निमित्तत्वानुपपत्तेः अगत्या पञ्चमप्रकार एव कश्चिदङ्गी-

---

१. श्येनवन्नामत्वम् ।

अतश्च वैश्वदेवशब्दस्य नामधेयत्वे उक्तप्रकारचतुष्टयस्याऽनिमित्तत्वादुत्पत्तिशिष्टगुणबलीयस्त्वमेव निमित्तम् । तथा हि—

"वैश्वदेवेन यजेते"त्यत्र न तावद्प्रकृतकर्मानुवादेन देवताविधानं संभवति, तेषामत्रानुपस्थितेः ।

नापि देवताविशिष्टकर्मान्तरविधानं संभवति, गौरवापत्तेः । 'अष्टौ हवींषी'त्यनन्यगतिकलिङ्गविरोधाच्च । अतोऽनेन प्रकृतकर्मानुवादेन देवता विधीयत इति वक्तव्यम् । तत्रामिक्षायागे विश्वदेवप्राप्तेः सत्सु यागेष्वनेन वाक्येन विश्वे देवा विधीयन्त इति वक्तव्यम् । न च तत्संभवति । तेषामुत्पत्तिशिष्टाग्न्याद्यवरोधात् । आकाङ्क्षया हि संबन्धो भवति । आग्नेयादिया-

---

करणीयः, स चोत्पत्तिशिष्टगुणबलीयस्त्वरूप एवेत्याह—अतश्चेति । ननु वैश्वदेवशब्देन प्रकृतकर्मानुवादेन गुणविध्यसम्भवेऽपि यत्र कर्मणि देवता नोत्पत्तिशिष्टा तत्र देवताविधिरस्तु, अथवा देवताविशिष्टकर्मान्तरविधिरेवास्तु । न च तदानीं हविर्नवकापत्त्या-"अष्टौ हवींषी"ति लिङ्गविरोधः, अनेन वाक्येन देवताविशिष्टकर्मणि विहिते तदनुवादेन "वैश्वदेव्यामिक्षे"ति वाक्येन द्रव्यमात्रविधिसम्भवात्, अतः किमर्थं नामधेयत्वाश्रयणमित्याशङ्क्य प्रथमं पक्षं निराकरोति—न तावदिति । अनुपस्थितेरिति । उपस्थापकप्रमाणानां प्रकरणादीनामभावात् श्रुतस्य यजिपदस्य यागमात्रसाधारण्येन यागविशेषानुपस्थापकत्वाच्चेति भावः ।

अस्तु तर्हि द्वितीयः पक्षः, सोऽपि नेत्याह—नापीति । गौरवापत्तेरिति । समुदायानुवादमात्रेण लाघवे सम्भवति अतिदेशापादकस्य विशिष्टे विधिव्यापाराङ्गीकरणरूपगौरवस्य सहनं नोपपत्तिमदित्याशयः । नाप्यामिक्षावाक्येन गुणमात्रविधानं सम्भवति । तत्र हि यज्यश्रवणेन "आग्नेयमष्टाकपालं निर्वपति" इत्यतो निर्वपतीत्यस्यैवानुषञ्जनीयतया तत्र विशिष्टकर्मविधायकस्य तस्यात्र गुणमात्रविधायकत्वे वैरूप्यप्रसङ्गात् । अतश्च तत्परिहारार्थमामिक्षावाक्येऽपि विशिष्टविध्यवश्यंभावेन वैश्वदेववाक्येऽपि विशिष्टविधिस्वीकारे हविर्नवकापत्त्या "अष्टौ हवींषी"ति लिङ्गविरोधस्तदवस्थ एवेत्याह—अष्टाविति । वैश्वदेवपर्वप्रकरणे "नव प्रयाजा इज्यन्ते । नवानूयाजाः । अष्टौ हवींषि । द्वावाघारौ । द्वावाज्यभागौ । त्रिंशत् सम्पद्यन्ते" इत्युक्तम् । तत्र त्रिंशत्सम्पत्तिबोधकेऽर्थवादे प्रधानहविषामष्टत्वं परिगणितम् । यदि वैश्वदेववाक्येऽपि प्रधानस्य विधिः स्यात् तर्हि प्रधानहविषां नवकापत्त्या 'अष्टौ हवींषी'त्यष्टत्वकथनं विरुध्येतेत्यर्थः । ननु तस्यार्थवादत्वादन्यथापि गतिर्भवितुमर्हतीत्यत आह—अनन्यगतिकेति । अतश्च वैश्वदेववाक्ये विशिष्टकर्मविधानं, आमिक्षावाक्ये च गुणमात्रविधानमित्यस्य पक्षस्यासम्भवेन प्रकृतकर्मस्वामिक्षायागातिरिक्तेषु वैश्वदेववाक्येन देवताविध्यङ्गीकारे च तत्राग्न्यादीनां विधानात् तत्रापि निवेशासम्भवेन च परिशेषात् नामत्वाङ्गीकरणमेव शरणमित्युपसंहरति—अत इत्यादिना । उत्पत्तिशिष्टदेवताकेऽपि कर्मणि पुनरनेनापि देवताविधानमस्तु । तस्याश्च देवतायाः अग्न्यादिभिस्सह विकल्पः समुच्चयो वा भवत्वित्याशङ्कायामाह—आकाङ्क्षयेति । सर्वत्र हि विहितस्य कर्मणः देवताकाङ्क्षायामेव वाक्यान्तरेण

गानां हि देवताकाङ्क्षा उत्पत्तिशिष्टैरग्न्यादिभिरेव निवृत्तेति न तत्र विश्वदेव-विधानं युक्तम्। अतश्चोत्पत्तिशिष्टगुणबलीयस्त्वाद्वैश्वदेवशब्दस्य कर्मनामधेयत्वम्। यथाहुः—'

गुणान्तरावरुद्धत्वान्नाऽवकाश्यो गुणोऽपरः।
विकल्पोऽपि न वैषम्यात्तस्मान्नामैव युज्यते॥ इति॥

( पञ्चमप्रकारखण्डनम् )

अन्ये त्वाचार्या आहुः—यः शब्दो यत्र कर्मणि यद्गुणसंबन्धं बोधयति स

---

देवता विधातुं शक्यते। यदा तु स्ववाक्य एव स्वेनैव सह देवता विधीयते तदा कर्मणः उत्पत्तिदशायामेव आकांक्षायाश्शान्तत्वात् निराकांक्षितविधानस्यासम्भवात् पुनस्तत्र देवताविधानस्यैवासम्भवे समुच्चयविकल्पयोर्दूरापास्तत्वादिति भावः। तत्र तेषु यागेषु।

ननु "तस्मादेकदेशस्थैरपि विश्वदेवैरुपलक्षितानां छत्रिन्यायेन तत्प्रख्यन्यायतयैव नामधेयत्व"मिति वार्तिकपर्यालोचनया तत्प्रख्यशास्त्रस्यैवात्र निमित्तत्वावगमात् कथं तत् परित्यज्य निमित्तान्तरमाश्रितमित्याशङ्कां, नेदं वार्तिकमत्र तत्प्रख्यन्यायस्य निमित्तत्वकथनाभिप्रायकम्, किन्तु अस्मिन्नधिकरणे उत्पत्तिशिष्टगुणबलीयस्त्वस्य गुणविध्यसम्भवात् नामधेयत्वं प्रति निमित्तत्वे साधिते तत्र प्रवृत्तिनिमित्तमात्रप्रदर्शनपरम्, अत एव वार्तिककारैः एतदधिकरणसिद्धान्तारम्भे उत्पत्तिशिष्टगुणबलीयस्त्वस्यैवं नामधेये निमित्तत्वं श्लोकेनोक्तमिति समाधानं च मनसि निधाय तदभिव्यञ्जकं तदयमिमेव श्लोकं पठति-**गुणेति**। आग्नेयादीनां कर्मणां स्वस्वोत्पत्तिवाक्यविहितैः अग्न्यादिभिर्व्याप्तत्वात् तत्र विश्वदेवदेवतारूपो गुणो नावकाशमर्हतीत्यर्थः। नन्वग्न्यादीनामिव विश्वेषां देवानामपि वाक्येन प्रतिपन्नत्वेनोभयोर्देवतयोस्तुल्यबलत्वात् कथं न विकल्पः ? इत्याशङ्कयामाह—**विकल्पोऽपीति**। तत्र कारणमाह—**वैषम्यादिति**। विषमशिष्टत्वादित्यर्थः। अग्न्यादीनां तद्धितश्रुतिबोधितत्वात् विश्वेषां देवानां तु वाक्यगम्यत्वादिति यावत्। इदमाकूतम्-'आग्नेयमष्टाकपाल'मित्यादौ आग्नेयादिपदानां अष्टाकपालपदरूपद्रव्यवाचकपदसामानाधिकरण्यदर्शनात् तद्घटकतद्धितस्य "सास्य देवता" इत्यधिकारे विहितस्य अग्न्यादिनिष्ठदेवतात्वप्रतिपादकत्वावगतेः ससम्बन्धिनः प्रतिसम्बन्धिनमपेक्ष्यैव प्रवृत्तेः यागस्य च सम्बन्धापादकत्वेन प्रतिसम्बन्धित्वाभावात् द्रव्यस्यैव प्रतिसम्बन्धित्वावगतेः तस्य च द्रव्यविशेषस्य तद्धितोपात्तत्वेनैकपदरूपश्रुतिगम्यत्वात् प्राबल्यम्। "वैश्वदेवेन यजेते"त्यत्र तु द्रव्यवाचकपदाश्रवणात् यजिसामानाधिकरण्यदर्शनाच्च तद्घटकतद्धितेन यागस्यैवोक्तत्वात् तेन च स्वसम्बन्धिद्रव्यलक्षणात् स्वलक्षितद्रव्यद्वारैव यागे देवतासम्बन्धस्य वक्तव्यतया वाक्यप्रमाणगम्यत्वात् ततो दौर्बल्यम्। अतो न तुल्यबलत्वात् विकल्प इति। यद्येवं तर्हि किमत्र युक्तम् ? तदाह-**तस्मादिति**। देवतारूपगुणस्य पूर्वकर्मसु विकल्पेन समुच्चयेन वा निवेशासम्भवेन, वैयर्थ्यापादनस्यानुचितत्वाच्चेत्यर्थः। नामैव आग्नेयादियागाष्टकनामत्वमेव।

( पञ्चमप्रकारखण्डनम् )

एवं न्यायसुधाकृदादिमतमुपपाद्य तत्प्रख्यन्यायेनैवात्रापि नामधेयत्वमभिप्रयतां पार्थसारथिमिश्राणां मतमुपपादयति—**अन्ये त्विति**। यश्शब्द इत्यनेन नामधेयत्वेनाभि-

चेत् संबन्धः शास्त्रान्तरप्रतिपन्नः तदा तस्य शब्दस्य तन्नामधेयत्वं तत्प्रख्यशास्त्रात्। तच्च शास्त्रान्तरं विधिर्वा अर्थवादो वेत्यत्राऽनादरः। तत्राग्निहोत्रशब्देऽग्निसंबन्धबोधकं शास्त्रान्तरं विधिरेव। वैश्वदेवशब्दश्च विश्वदेवसंबन्धं कर्मणि बोधयति। विश्वदेवसंबन्धश्चाऽष्टसु यागेषु "यद्विश्वेदेवाः समयजन्त, तद्वैश्वदेवस्य वैश्वदेवत्वम्" इत्यर्थवादावगतः।

न च विधिरेव तत्प्रख्यशास्त्रं नार्थवाद इत्यत्र किञ्चित् प्रमाणमस्ति। अत एव "ज्योतिष्टोमेन स्वर्गकामो यजेते"त्यत्र ज्योतिष्टोमशब्दः "एतानि वाव तानि ज्योतींषि य एतस्य स्तोमाः" इत्यर्थवादावगतं ज्योतिस्सम्बन्धं निमित्तीकृत्य सोमयागे प्रवर्तमानस्तत्प्रख्यशास्त्रान्नामधेयं भवति। एवं

---

प्रेतशब्दो विवक्षितः। यद्गुणेति कर्मधारयः। तन्नामधेयत्वं तादृशकर्मनामधेयत्वम्। **अनादर इति**। एवञ्च प्रापकेण विधिनैव भाव्यमित्यभिमन्वानेन भवता तदर्थं प्रमाणाषिद्धपञ्चमप्रकाराङ्गीकरणं व्यर्थमेवेति भावः। **विधिरेवेति**। यद्यप्येतन्मते मन्त्रवर्णस्य तत्र देवतासमर्पकत्वं तथापि तन्मतानुसारेणेदमुक्तम्। **यद्विश्वेदेवा इति**। यस्मात् विश्वे देवा यागाष्टकमिदमन्वतिष्ठन् तस्मात् विश्वदेवकृतत्वात् आग्नेयादियागाष्टकस्य वैश्वदेवशब्दवाच्यत्वमिति वाक्यार्थः।

**अत एव** अर्थवादस्य तत्प्रख्यशास्त्रत्वाभावे प्रमाणाभावादेव। **ज्योतिष्टोमशब्द इति** नामधेयं भवतीत्यनेन सम्बध्यते। **एतानीति**। तैत्तिरीयब्राह्मणे पञ्चमप्रपाठके ज्योतिष्टोमनामनिर्वचनावसरे-"**यदाहुः। कतमानि तानि ज्योतींषि। य एतस्य स्तोमा इति**" इति प्रश्नमुपक्षिप्य अनन्तरं "**त्रिवृत् पञ्चदशस्सप्तदश एकविंशः। एतानि वाव तानि ज्योतींषि। य एतस्य स्तोमाः**" इति समाहितम्। ब्रह्मवादिनः एवं पृच्छन्ति-ये प्रकृतस्य यज्ञस्य स्तोमा भवन्ति कानि तानि ज्योतिःपदवाच्यानीति प्रश्नार्थः। ये त्रिवृदादयः स्तोत्रसंख्याविशेषाः ज्योतिःपदवाच्याः त एवास्य स्तोमा इत्युत्तरवाक्यार्थः। स्तोत्रसाधनीभूतस्तोत्रीयानवकं(१) त्रिवृच्छब्देनाभिधीयते। एवं पञ्चदशा-

---

१. त्रिवृदादिपदानामर्थनिर्णयश्चेत्थम्—ज्योतिष्टोमे सन्ति द्वादशस्तोत्राणि—बहिष्पवमानमेकम्, चत्वार्याज्यस्तोत्राणि, माध्यन्दिनपवमानमेकम्, चत्वारि पृष्ठानि, आर्भवपवमानमेकम्, यज्ञायज्ञीयमेकमिति। स्तोत्रं नाम प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानम्। तदिदं स्तोत्रं सदोनाममण्डपे औदुम्बर्याख्यस्थूणासमीपे उपविष्टैरुद्गातृप्रस्तोतृप्रतिहर्त्राख्यैस्त्रिभिः ऋत्विग्भिः कर्तव्यत्वेन विहितम्। तत्रैकैकस्य स्तोत्रस्य "एकं साम तृचे क्रियते स्तोत्रीय"मिति विधिबलात्तिसृषु ऋक्षु एकं साम गातव्यं भवति। तत्र च त्रिवृत, पञ्चदशः, सप्तदशः, एकविंशः, त्रिणवः, त्रयस्त्रिंशः, चतुर्विंशः, चतुश्चत्वारिंशः, अष्टाचत्वारिंश इति नव प्रकारास्संख्याविशेषा उक्ताः। इम एव संख्याविशेषाः स्तोमशब्देनाऽभिधीयन्ते। तत्र बहिष्पवमानाख्यं स्तोत्रं परं "बहिष्पवमानं सर्पन्ती" ति विधिना सदसो बहिः चात्वालदेशं प्रति प्रसर्पणानन्तरं कर्तव्यत्वेन विहितम्। अतएवास्य स्तोत्रस्य बहिस्संबन्धात् पवमानक्रियाकर्तृप्रकाशकमन्त्रघटितत्वाच्च बहिष्पवमानमिति संज्ञा। तथा च बहिष्पवमानाख्यं स्तोत्रं त्रिवृत्स्तोमकं कर्तव्यमिति वाक्यार्थः पर्यवसन्नः॥ त्रिवृत नवसंख्योच्यते। तत्राम्नातानां नवानामृचां यथाम्नानं सकृद्गायेत्। स त्रिवृत् स्तोमः। उत्तराग्रन्थे बहिष्पवमानसूक्तेभ्यस्त्रिभ्य ऊर्ध्वं चत्वारिसूक्तान्याम्नातानि-अग्न आयाहि वीतय इत्याद्यं सूक्तम्, आ नो मित्रावरुणेति द्वितीयम्, आया हि सुषुमाहिते इति तृतीयम्, इन्द्राग्नी आगतं

प्रकृतेऽपि द्रष्टव्यम् । पञ्चमप्रकारकल्पने प्रमाणाभावात् । अत एव वैश्वदेवा-धिकरणे वार्तिककारैरेवमुपसंहृतम्-'तत्प्रख्यतयैव सर्वेषां नामधेयत्वम्' इति । यच्चोत्पत्तिशिष्टगुणबलीयस्त्वमुक्तं तत् गुणविध्यसंभवे युक्त्यभ्युच्चयमात्रम् । तत्सिद्धं तत्प्रख्यशास्त्रादेव(१) वैश्वदेवशब्दस्य कर्मनामधेयत्वमिति ।

---

दयोऽपि शब्दा द्रष्टव्याः । एवञ्चानेनार्थवादेनावगतं ज्योतिस्सम्बन्धमादायैव यथा ज्योतिष्टोमशब्दस्य कर्मनामधेयत्वमुररीकृतं एवं प्रकृतेऽप्यर्थवादावगतं विश्वदेवसम्बन्धमादायैव तत्प्रख्यन्यायेन नामत्वोपपत्तौ प्रकारान्तरकल्पनं नोपपत्तिमदित्याह-**एवमिति** । अत्र वार्तिककारसम्मतिमाह-**अत एवेति** । **तत्प्रख्यतयेति** । तत्प्रख्यन्यायेनैव वैश्वदेवशब्दस्याग्नेयादिसर्वयागनामधेयत्वमित्यर्थः । अत्र तत्प्रख्यतयैवेत्येवकारः प्रकारान्तरव्यावर्तकः । एवञ्च यत्र यत्र नामधेयत्वं वक्तव्यं तत्र सर्वत्र एतच्चतुष्टयान्यतमेनैव केनचित् प्रकारेण तत् वक्तव्यम्, न त्वतिरिक्तप्रकाराश्रयणं युक्तमिति वार्तिकाशय इति भावः। यद्येवं तर्हि किमर्थमेतदधिकरणसिद्धान्तारम्भे वार्तिककारैः "अग्न्यादयो हो"त्यादिना उत्पत्तिशिष्टगुणस्य बलीयस्त्वमुपपादितम् ? तत्राह-**तदिति** ।

**ननु 'वैश्वदेवेन यजेत'** इत्यत्र देवताविशिष्टकर्मविधानमङ्गीकृत्य तादृशकर्मोद्देशेन "**वैश्वदेव्यामिक्षा**" इति वाक्येन गुणविधिरङ्गीक्रियते । तदा च न कस्याप्यानर्थक्यम् । हविष्षु च संख्यावृद्धेरभावात् ना"ष्टौ हवींषी"ति लिङ्गविरोधः । अतश्च किमर्थं वैश्वदेवशब्दस्य कर्मनामधेयत्वमङ्गीक्रियत इतीमामाशङ्कां पूर्वस्मिन् पक्षे गूढाभिसन्धितो निराकृतामपि अगृहीताशयो यथाश्रुतग्राही पशुसोमाधिकरणदृष्टान्तेन पुनस्ता-

---

सुतमिति चतुर्थम् । तान्येतानि प्रातस्सवने गायत्रसाम्ना गीयमानानि चत्वार्याज्यस्तोत्राणीत्युच्यन्ते । तन्निर्वचनं च श्रूयते—"यदाजिमीयुस्तदाज्यानामाज्यत्वमि"ति । तेष्वाज्यस्तोत्रेषु पञ्चदशनामकस्तोमो भवति । तस्य स्तोमस्य विष्टुतिरेवमाम्नायते—"पञ्चभ्यो हिंकरोति स तिसृभिः स एकया स एकया, पञ्चभ्यो हिंकरोति स एकया स तिसृभिः स एकया, पञ्चभ्यो हिंकरोति स एकया स एकया स तिसृभि"रिति । एकं सूक्तं त्रिरावर्तनीयम् । तत्र प्रथमावृत्तौ प्रथमाया ऋचस्त्रिरभ्यासः, द्वितीयावृत्तौ मध्यमायाः, तृतीयावृत्तावुत्तमायाः । सोऽयं पञ्चदशस्तोमः । उक्तेभ्यश्चतुर्भ्यः सूक्तेभ्य ऊर्ध्वमुत्तराग्रन्थे त्रीणि माध्यन्दिनपवमानसूक्तान्याम्नाय तत ऊर्ध्वं च चत्वारि सूक्तान्याम्नातानि । तेषु "अभि त्वा शूर नोनुम" इत्याद्यम्, "कयानश्चित्र आभुवदि" ति द्वितीयम्। "तं वो दस्म मृतीषहमि" ति तृतीयम् । "तरोभिर्वो विदद्वसुमि"ति चतुर्थम् । एतानि क्रमेण रथन्तरवामदेव्यनौधसकालेयसामभिर्माध्यन्दिनसवने गीयमानानि पृष्ठस्तोत्राणीत्युच्यन्ते । "स्पर्शनात्पृष्ठानि" इत्येवं निरुक्तिर्द्रष्टव्या । तेषु स्तोत्रेषु सप्तदशस्तोमो भवति । तस्य स्तोमस्य विष्टुतिरेवमाम्नायते-"पञ्चभ्यो हिंकरोति स तिसृभिः स एकया स एकया, पञ्चभ्यो हिङ्करोति स एकया स तिसृभिस्स एकया, सप्तभ्यो हिंकरोति स एकया स तिसृभिः स तिसृभिरि"ति । अत्र प्रथमावृत्तौ प्रथमाया ऋचस्त्रिरभ्यासः, द्वितीयावृत्तौ मध्यमायाः, तृतीयावृत्तौ मध्यमोत्तमयोः। सोऽयं सप्तदशस्तोमः ॥ अग्निष्टोमे चैकविंशतिस्स्तोमः। एकविंशस्तोमस्य विष्टुतिरेवमाम्नाता—"सप्तभ्यो हिंकरोति स तिसृभिस्स तिसृभिस्स एकया, सप्तभ्यो हिंकरोति स एकया स तिसृभिस्स तिसृभिः, सप्तभ्यो हिंकरोति स तिसृभिस्स एकया स तिसृभिः" इति । अत्र प्रथमावृत्तौ प्रथमायास्तृचः द्वितीयायाश्च वारत्रयमावृत्तिः, तृतीयायास्सकृत् । द्वितीयावृत्तौ प्रथमायास्सकृत्, द्वितीयतृतीययोस्त्रिस्त्रिः । तृतीयावृत्तौ प्रथमातृतीययोस्त्रिस्त्रिरावृत्तिः मध्यमायाश्च सकृत् ॥ एत एव त्रिवृदादयस्तोमा उच्यन्ते ।

१. तत्प्रख्यतयैव इति. क. ।

ननु पशुसोमाधिकरणे "ऐन्द्रवायवं गृह्णाती" त्यादौ न यजिकल्पनम्, 'सोमेन यजेते'ति प्रत्यक्षयजिश्रुतेरित्युक्तम्। तेन न्यायेन 'वैश्वदेव्यामिक्षे' त्यत्रापि यजिकल्पनं मास्तु, 'वैश्वदेवेन यजेते'त्यत्र प्रत्यक्षयजिश्रुतेः। एवं चानेनैव वाक्येन देवताविशिष्टकर्मविधानमस्तु। तस्य च द्रव्याकाङ्क्षायां 'वैश्वदेव्यामिक्षे'ति द्रव्यविधानमस्तु। एवं च न वाक्यद्वयस्याऽप्यनुवादत्वम्। ना'प्यष्टौ हवींषी' त्यनन्यगतिकलिङ्गविरोधो भवेदिति चेत्—

मैवम्; "वैश्वदेव्यामिक्षे"त्यत्र यज्यकल्पने आमिक्षा किमनुवादेन विधीयत इति वक्तव्यम्। विश्वदेवानुवादेन द्रव्यविधाने द्रव्यस्य देवताङ्गत्वमेव स्यात्, न यागाङ्गत्वम्।

---

मेवाशङ्कां करोति नन्विति। न यजिकल्पनं न यागकल्पनम्। 'गृह्णाति' इत्यस्य न यागलक्षकत्वकल्पनमिति यावत्। "अग्नीषोमीयं पशुमालभेत" इति पशुयागविधायकं "सोमेन यजेत" इति सोमयागविधायकं वाक्यञ्चोदाहृत्य "द्रव्यसंयोगाच्चोदना पशुसोमयोः" इत्यादिभिः सूत्रैर्यत्र विचारः कृतः तदधिकरणं पशुसोमाधिकरणम्। तत्र हि "हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः" इति श्रुतेषु वाक्येषु यागवाचकपदाश्रवणेऽपि तत्कल्पयित्वा यागविधानमङ्गीकृत्य तद्वाक्यविहितानां च यागानां "अग्नीषोमीयं पशुमालभेत" इत्यनेनानुवादः ? उत अग्नीषोमीयवाक्य एव यागविधानम् ? हृदयादिवाक्यैश्च तद्यागीयहवीरूपहृदयाद्युद्देशेन अवदानसंस्कारमात्रविधानम्। एवं सोमयागप्रकरणे श्रुतानां "ऐन्द्रवायवं गृह्णाति" "मैत्रावरुणं गृह्णाति" "आश्विनं गृह्णाती"त्यादिवाक्येषु यज्यश्रवणेऽपि यागवाचकंपदं कल्पयित्वा तत्रैव यागा विधीयन्ते तेषामेव च "सोमेन यजेते"त्यनुवादः, अथ वा 'सोमेन यजेते'त्यत्रैव यागविधानम्, ऐन्द्रवायवादिवाक्येषु तु यागीयद्रव्यरूपसोमरसस्य ग्रहणाख्यसंस्कारविधानमिति सन्दिह्य हृदयादिवाक्ये ऐन्द्रवायवादिवाक्ये च यजेरश्रवणात् सोमेन यजेतेत्यादौ च प्रत्यक्षतस्तच्छ्रवणात् पशुसोमवाक्ययोरेव यागविधानम्। हृदयादिवाक्येषु तु संस्कारमात्रविधानमिति सिद्धान्तितम्, तन्न्यायमत्रातिदिशति–तेन न्यायेनेति। द्रव्यविधानमिति। वैश्वदेवीशब्देन यागमनूद्यामिक्षाशब्देन द्रव्यविधानमित्याशयः। एवञ्च वैश्वदेववाक्ये विशिष्टकर्मविधानात् न तस्यानर्थक्यम्। गुणविधानाच्च नामिक्षावाक्यस्यापीत्युभयोपपत्तिरित्यर्थः। वाक्यद्वयस्य वैश्वदेववाक्यस्य, आमिक्षावाक्यस्य च।

एवमाशङ्किते पशुसोमाधिकरणवैषम्यं प्रदर्शयन् अत्र गुणविध्यसम्भवं प्रदर्शयति–वैश्वदेवीति। किमनुवादेनेति। किमुद्दिश्येत्यर्थः। "वैश्वदेव्यामिक्षा" इत्यत्र पदद्वयसत्त्वेन वैश्वदेवीशब्देन देवतामुद्दिश्यामिक्षापदेन द्रव्यविधिरिति यद्युच्येत तदानीं दोषमाह–द्रव्यस्येति। न यागाङ्गत्वमिति। सर्वत्र विधिप्रत्ययमन्तरा नोद्देश्यविधेयवाचकपदद्वयश्रवणमात्रेण विधेयत्वमुद्देश्यत्वं वा सम्भवतीति प्रकृतेऽपि तस्यावश्यंभावे केवलस्य प्रत्ययस्य प्रयोगानर्हत्वेन कस्यचित् धातोरपि प्रयोगो यद्यप्यावश्यकः तथापि प्रत्ययार्थाविरोधी यः कश्चित् धातुः प्रयुज्यताम्, नैतावता यजिकल्पनं सिध्यतीत्याशयः। यथा पश्वेकत्वाधिकरणपूर्वपक्षे एकत्वस्य पश्वङ्गत्वेन यागाङ्गत्वासम्भव उक्तः तद्वदत्रा-

किञ्च वैश्वदेवीशब्दो देवतातद्धितत्वादामिक्षां(१)तत्वेन ब्रूत इत्युक्तम्। तत्र विश्वदेवानुवादेन द्रव्यविधानं वैश्वदेवीशब्देनैव कर्तव्यं, पदश्रुतेः। यथा भावनायां करणसमर्पणं धातुनैव क्रियते पदश्रुतेः, न तूपपदेनेत्युक्तं भावार्थाधिकरणे तद्वत्। तत्र च "वषट्कर्तुः प्रथमभक्ष" इतिवदेकप्रसरताविरोधः। अतो यागानुवादेनापि(२) द्रव्यविधानार्थं 'वैश्वदेव्यामिक्षे'त्यत्र यजिकल्पनं तावदवश्यं कर्त्तव्यम्।

(३)अतश्च पशुसोमाधिकरणन्यायवैषम्यम्। 'ऐन्द्रवायवं गृह्णाती'त्यत्र देवताविशिष्टग्रहणविधानेन यज्यकल्पनात्। यजिकल्पने च 'वैश्वदेव्यामिक्षे'त्यत्रैव द्रव्यदेवताविशिष्टकर्मविधानं युक्तम्, रूपद्वयश्रवणात्। एवञ्च "आग्ने-

---

प्यापतेत्। अतश्च यथैव तत्र द्वाभ्यां बहुभिर्वा पशुभिः यागकरणापत्तिः तद्वदत्रापि येन केनापि द्रव्येण यागानुष्ठानापत्तिरित्यपि हृदयम्।

ननु देवतोद्देशेन द्रव्यविधानेपि एतद्वाक्यबोधितस्य सम्बन्धस्य

'न क्रियागर्भसम्बन्धादृते सम्बन्धनं क्वचित्'

इति न्यायेन क्रियाघटितत्वात् तादृश्याश्च देवतासम्बन्धनघटनसमर्थायाः यागादृतेऽसम्भवात् यागापेक्षायां वैश्वदेववाक्यविहितस्योपस्थितस्यान्वयात् तत्रैव द्रव्यविधानस्य पर्यवसानात् सिध्यत्येव यागसम्बन्ध इत्यत आह—किञ्चेति। तत्वेनेति। देवताविशिष्टद्रव्यत्वेनेत्यर्थः।

"नैव हि द्रव्यमात्रस्य तद्धितैर्देवतोच्यते।
अस्य शब्दाभिधेयस्य विशेषत्वैव सा स्मृता"

इति न्यायेन द्रव्यविशेषस्यैव तद्धितेनोक्तत्वात्। अत एव च—

"आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः"

इति पूर्वमुक्तमिति भावः। अस्तु, तावता किमायातम्? अत आह-तत्रेति। वैश्वदेवीति। प्रकृत्यंशेन देवतामनूद्य प्रत्ययांशेन द्रव्यं विधेयमिति भावः। अस्त्वेवं, को दोषः? अत आह-तत्रेति। न हि यजेतेत्यादौ प्रत्ययार्थभावनोद्देशेन प्रकृत्यर्थयागविधानम्, येन तत्राप्येकप्रसरताभङ्ग आशङ्क्येत, किन्तु अप्राप्तभावनाविशिष्टयागविधानमेव। प्रकृते तु देवतायाः प्राप्तत्वेन विधानासम्भवात् तदनुवादेनैव द्रव्यविध्यवश्यंभावेन न एकप्रसरताविरोधदोषात् विमुक्तिरिति भावः। अतश्च वैयर्थ्यपरिहारार्थं यागोद्देशेनैव द्रव्यविधेरवश्याङ्गीकरणीयत्वेन तदर्थं यजिकल्पनमावश्यकमेवेत्याह-अत इति। यागानुवादेनापीत्यपिशब्दः एवकारार्थकः। यागानुवादेनैव द्रव्यं विधातव्यम्। तदर्थं च यजिकल्पनमावश्यकमेवेत्यर्थः। अथवा अपिशब्दो भिन्नक्रमः। द्रव्यविधानार्थमित्यत्रान्वेति।

कल्पिते च यजिपदे तत्रैव यागविधिरङ्गीक्रियताम्। किमर्थं वैश्वदेववाक्ये विशिष्टविध्यङ्गीकरणरूपं गौरवमाश्रीयते इत्याह-यजिकल्पने चेति। रूपद्वयश्रवणादिति। द्रव्यस्य देवतायाश्च श्रवणादित्यर्थः। ननु "यस्य पर्णमयी जुहूर्भवती" त्यादौ तद्धितस्य द्रव्यविशेषवाचित्वेऽपि एकप्रसरताभङ्गपरिहारार्थं विशेषसमर्पकस्य समभिव्याहृतजु-

---

१. 'आमिक्षान्तर्गतत्वेन ब्रू०; आमिक्षान्तर्गतार्थः'। २. कपुस्तके अपिर्नास्ति। ३. ततः।

योऽष्टाकपालः सौम्यश्चरु" रित्यादिवाक्यैर्वैश्वदे'यामिक्षे'(१)ति वाक्यस्य प्रायपाठो रक्षितो भवति। अन्यथा हि तेषु सर्वेषु द्रव्यदेवतासम्बन्धकल्पितयागविधानमत्र च द्रव्यमात्रविधानमिति वैरूप्यं प्रसज्येत।

किञ्च 'वैश्वदेवेन यजेते'त्यत्र वैश्वदेवशब्दस्य देवतासमर्पकत्वे 'यद्विश्वे देवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम्' इत्येतस्यार्थवादस्यात्यन्तमेव निरालम्बन(२)त्वं स्यात्। एतदर्थवादाद्धि वैश्वदेवशब्दो विश्वदेवकर्तृकत्वेन कर्मणि प्रवृत्त इति ज्ञायते। (३)तत् देवतासमर्पकत्वे विरुध्यते।

किञ्च 'वैश्वदेवेन यजेते'त्यस्य यागविधित्वे आमिक्षाया नोत्पत्तिशिष्टत्वम्। तथा च तया न वाजिनं बाधितुं शक्यत इति उभयोरपि आमिक्षावाजिनयोर्यागाङ्गत्वं स्यात्। तथा च विकल्पः।

द्वादिपदान्तरस्यैवोद्देश्यसमर्पकत्वस्य शतशोऽङ्गीकरणवत् प्रकृतेपि आमिक्षापदस्यैव तदङ्गीक्रियताम्। सति चैवं नैकप्रसरताविरोधः, नापि यजिकल्पनागौरवमित्यत आह—एवञ्चेति। 'आग्नेयोऽष्टाकपाल' इत्यादीनि हि वाक्यानि यागविधायकानि। तेषां मध्ये वैश्वदेव्यामिक्षेति पठितम्। यदि अस्यापि वाक्यस्य कर्मविधायकत्वमङ्गीक्रियेत तदानीमेव तन्मध्यपाठसङ्गतो भवतीत्यर्थः। प्रायपाठः सहचरितपाठः। यागविधायकवाक्यमध्ये पठितस्य वाक्यस्य यागविधायकत्वस्यैवोचितत्वात्। तदभावे दोषमाह—अन्यथेति। अत्र सर्वत्रापि प्रथमान्तपदश्रवणात् यागवाचकपदाश्रवणाच्च द्रव्यदेवतासम्बन्धान्यथानुपपत्त्यैव यागस्य कल्पनीयत्वात् तद्ज्ञापनार्थं द्रव्यदेवतासम्बन्धेत्याद्युक्तम्। इदं च मैत्रायणीयशाखामनुसृत्योक्तम्। तत्रैव प्रथमान्तपाठस्य श्रवणात्। यदा तु तैत्तिरीयशाखास्थः पाठ आद्रियते तत्र द्वितीयान्तपाठस्यैव श्रवणात् तदा पूर्वोक्तमास्मकीनं समाधानं बोध्यम्।

नन्वयं प्रायपाठोऽकिञ्चित्करः। आरादुपकारकप्रयाजचतुष्टयप्राये पठितस्यापि पञ्चमप्रयाजस्य सन्निपत्योपकारकत्वाङ्गीकरणात् आहवनीयाद्यग्निसम्पादकगुणकर्मभूतब्राह्मणादित्रैवर्णिककर्तृकाधानप्राये पठितस्यापि रथकाराधानस्यार्थकर्मत्वाङ्गीकरणात्। अतो यजिकल्पनापरिहारार्थं एकप्रसरताभङ्गपरिहारार्थं च गुणविधित्वमेवाङ्गीक्रियतामित्यत आह—किञ्चेति। निरालम्बनत्वमिति। निर्विषयत्वमित्यर्थः।

ननु देवतानां (४) विग्रहादिपञ्चकस्य नवमे निराकृतत्वात् षष्ठे तिर्यगधिकरणे च तासां कर्मण्यधिकाराभावस्य साधितत्वात् अर्थवादस्यास्य यथाकथञ्चित् स्तुतिमात्रपरत्वेनाप्युपपत्तौ न देवताविधिप्रतिबन्धकत्वं भवितुमर्हतीत्यत आह—किञ्चेति। उत्पत्तिशिष्टत्वाभावे दोषमाह—तथा चेति। तया आमिक्षया। शक्यत इति। तुल्यबलयोः परस्परं आत्यन्तिकबाधासम्भवादिति भावः। यागाङ्गत्वमिति। वैश्वदेववाक्यविहितयागाङ्गत्वमित्यर्थः। अस्तु तथैव, का हानिरिति चेत्? यद्येवं तर्हि "एकार्थास्तु-

१. इत्यस्य इति क. २. निरालम्बः स्यात् इति क. ३. 'तद्देवतासमर्पकत्वेन'
४. विग्रहो हविषां भोग ऐश्वर्यञ्च प्रसन्नता। फलप्रदानमित्येतत् पञ्चकं विग्रहादिकम्॥

स चाष्टदोष(१)दुष्ट इति। तस्मा"द्वैश्वदेव्यामिक्षे"त्यत्रैव यागविधानम्। इतरस्य त्वनुवादत्वम्। अनुवादत्वे च यथा नानर्थक्यं तथोक्तमित्यास्तां तावत्। तत्सिद्धम् वैश्वदेवशब्दस्य कर्मनामधेयत्वम्।

तदेवं निरूपितं मत्वर्थलक्षणादिप्रकारचतुष्टयनिरूपणेन नामधेयस्य विधेयार्थपरिच्छेदकत्वेनार्थवत्त्वम्।

( निषेधानां पुरुषार्थानुबन्धित्वनिरूपणम् )

अनर्थहेतोः कर्मणः सकाशात् पुरुषस्य निवृत्तिकरत्वेन निषेधानां पुरुषार्था-

विकल्पेरन्" इति द्वादशिकन्यायेन द्वयोर्द्रव्ययोः विकल्पः पर्यवस्येत् इत्याह—तथा चेति। अस्तु विकल्पः, यजिकल्पनापेक्षया तस्य लघुत्वात्। नैवमित्याह—स चेति। विकल्पश्चेत्यर्थः। अष्टदोष इति बहुव्रीहिः। अष्टौ दोषाश्च—'व्रीहिभिर्यजेत' 'यवैर्यजेत' इति शास्त्रद्वयेन व्रीहीणां यवानां च विकल्पोऽवगम्यते। अविशेषाच्च द्वयोरपि शास्त्रयोः प्रामाण्यं प्रमितम्। तत्र प्रथमं व्रीह्यनुष्ठाने यवशास्त्रे प्रतीतप्रामाण्यपरित्यागः अप्रतीताप्रामाण्यपरिकल्पनं चेति द्वौ दोषौ। पुनश्च यवानुष्ठाने तत्रैव पूर्वत्यक्तस्य प्रामाण्यस्य पुनरुज्जीवनम्, स्वीकृतस्याप्रामाण्यस्य परित्यागः, इति द्वौ दोषौ। तदेवं प्रथमं व्रीह्यनुष्ठाने यवशास्त्रे चत्वारो दोषाः। एवं प्रथमं यवानुष्ठाने व्रीहिशास्त्रे चत्वारः। आहत्याष्टौ दोषाः। एवञ्च उत्पत्तिशिष्टगुणबलीयस्त्वरूपपञ्चमप्रकारेण वा तत्प्रख्यन्यायेन वा वैश्वदेवशब्दस्य कर्मनामधेयत्वं तावत् सिद्धमेवेत्युपसंहरति—तत्सिद्धमिति।

वस्तुतस्तु यद्यप्यत्र तत्प्रख्यन्यायेनैव नामधेयत्वं तथापि केवलस्य तस्य न सर्वत्र प्रवृत्तिनिमित्तसम्पादकत्वम्, तेनामिक्षायाग एव तत्सम्पादनात्। नापि विश्वदेवकर्तृकत्वं प्रवृत्तिनिमित्तम्। तस्यालीकत्वात्। अतश्चाग्नेयादिषु गुणविध्यसम्भवसम्पादनार्थं उत्पत्तिशिष्टगुणबलीयस्त्वस्यापि सहकारित्वस्यावश्याभ्युपगन्तव्यतया उत्पत्तिशिष्टगुणबलीयस्त्वसहकृततत्प्रख्यन्यायस्यैवात्र नामत्वे निमित्तत्वं वक्तव्यम्। एतदभिप्रायेणैव च वार्तिके उभयमप्युपात्तमिति ध्येयम्॥

नामधेयनिरूपणप्रकरणमुपसंहरति—तदेवमिति॥

( निषेधानां पुरुषार्थानुबन्धित्वनिरूपणम् )

एवं नामधेयत्वनिमित्तानि निरूप्य क्रमप्राप्तं निषेधानामर्थवत्त्वप्रकारं निरूपयितुमारभते—अनर्थेति। अनर्थो नरकादिः, तद्धेतुभूतं यत् कर्म कलञ्जभक्षणादिकं तादृशात् कर्मण इत्यर्थः। निवृत्तिकरत्वेन निवृत्तिजनकत्वेन। पुरुषार्थानुबन्धित्वमिति। यथा हि विधयः इष्टसाधनीभूते कर्मणि पुरुषं प्रवर्तयन्तः पुरुषार्थपर्यवसायिनः, एवं निषेधा अपि अनिष्टसाधनीभूतात् कर्मणः पुरुषस्य निवृत्तिं जनयन्तः पुरुषार्थानुबन्धिन इत्यर्थः। पुरुषस्य हि यथा सुखप्राप्तिरभिलषिता एवं दुःखनिवृत्तिरपि। अतश्च यथैव सुखं जानन्नपि तत्साधनज्ञानाभावात् न तत्र प्रवर्तते पुरुषः, तथैव दुःखाभावं जानन्नपि कलञ्जभक्षणादौ दुःखजनकत्वमजानानः न ततो निवर्तते। तस्याञ्चावस्थायां यथा विधिः यागादौ सुखसाधनत्व

१. 'अष्टदोष इति' इति क.

नुबन्धित्वम्। तथा हि—यथा विधयः प्रवर्तनामभिदधतः स्वप्रवर्तकत्व-निर्वाहार्थं विधेयस्य यागादेः श्रेयःसाधनत्वमाक्षिपन्तः पुरुषं तत्र प्रवर्तयन्ति, एवं 'न कलञ्जं भक्षयेत्' इत्यादयो निषेधा अपि निवर्तनामभिदधतः स्वनि-वर्तकत्वनिर्वाहार्थं निषेध्यस्य कलञ्जभक्षणादेरनर्थहेतुत्वमाक्षिपन्तः पुरुषं ततो निवर्तयन्ति।

---

प्रमाणान्तरानवगतमेवावबोध्य तत्र प्रवर्तयति पुरुषम्, एवं कलञ्जभक्षणादौ दुःखजन-कत्वं प्रमाणान्तरेणानवगतमवबोध्य पुरुषं ततो निवर्तयति निषेध इति पुरुषाभिलषित-फलसम्पादकत्वाविशेषात् विधीनामिव निषेधानामपि पुरुषार्थानुबन्धित्वमिति भावः। तदेवोपपादयति—**तथा हीति। विधयः इति।** "**विधिनिमन्त्रणामन्त्रणाधीष्टस-म्प्रश्नप्रार्थनेषु लिङ्**" इति सूत्रे लिङादीनां प्रवर्तनायां शक्तिरित्यवधार्यते। प्रवर्त-नात्वं च प्रवृत्त्यनुकूलव्यापारत्वम्। अनुकूलत्वम् चात्र प्रवृत्तिजनकीभूतेष्टसाधनताज्ञानज-नकत्वम्। यथा हि लोके 'चैत्रः पचेत्' 'गामानये' त्यादिवाक्यश्रवणोत्तरं शाब्दबोधे जाते लिङाद्यर्थस्य प्रवृत्त्यनुकूलव्यापारस्येच्छारूपत्वेऽवगते वचनेङ्गितादिना च प्रयोक्तृपुरुष-स्याप्तत्वेऽवगते अयमत्र प्रवर्ततामित्याकारकाप्तेच्छाविषयीभूतकृतिविषयत्वरूपं हेतुज्ञानं मानसं जायते, तेन च हेतुना पाकादाविष्टसाधनत्वानुमितिर्जायते, एवं वेदेऽपि लिङादिश्रव-णोत्तरं प्रवर्तनाविषयकशाब्दबोधे जाते तत्र च पुरुषसम्बन्धाभावात् लिङादिनिष्ठत्वेऽव-गते भ्रमाद्यसम्बन्धाच्चानाप्तभिन्नत्वेऽवगते यागादिविषयककृतिसम्बन्धाच्च 'यागेऽयं प्रवर्त-ता'मित्याकारकत्वेऽवगते यागादौ 'अयमत्र प्रवर्तता'मित्याकारकव्यापारविषयीभूतकृति-विषयत्वज्ञानं मानसं जायते। ततश्च यागादाविष्टसाधनत्वमनुमीयते। अनुमानप्रकारश्चे-त्थम्—यागो मदिष्टसाधनम्, अयमत्र प्रवर्ततामित्याकारकव्यापारविषयीभूतकृतिविषयत्वात्, यथा गवानयम्, इति।

एवं निषेधवाक्येष्वपि निवर्तनाभिधीयते। निवर्तना च निवृत्त्यनुकूलो व्यापारः, अनुकूलत्वं चात्र न पूर्ववत् निवृत्तिजनकीभूतानिष्टसाधनताज्ञानजनकत्वरूपम्, प्रवृत्ति-प्रागभावरूपायाः तस्याः जन्यत्वासम्भवात्। किन्तु प्रवृत्तिसामग्रीविघटकत्वमेव। निषेध-वाक्यश्रवणोत्तरं हि निवर्तनाविषयकशाब्दबोधे जाते तस्याः अयमस्मान्निवर्ततामित्याकार-कत्वे लिङादिनिष्ठत्वादौ च पूर्ववदेवावगते कलञ्जभक्षणं मदनिष्टसाधनं, अयमस्मा-न्निवर्ततामित्याकारकव्यापारविषयाभावप्रतियोगिकृतिविषयत्वात्, इत्यनुमितिर्जायते। तया चानुमित्या कलञ्जभक्षणादौ पूर्वोत्पन्ना बलवदनिष्टाननुबन्धित्वरूपा प्रवृत्तिसामग्री विघ-टयते। तद्विघटनाच्च प्रवृत्तिकारणाभावात् पुरुषो न प्रवर्तत इति। तदेतत् सर्वं मनसि निधायाह—**प्रवर्तनामभिदधत इत्यादिना। आक्षिपन्तः** अनुमापयन्तः। **अनर्थहे-तुत्वं** बलवदनिष्टाननुबन्धित्वम्। **ततः** अनिष्टजनकात् कर्मणः।

सर्वत्र हि लिङ्घटितवाक्यस्यैव नञ्युक्तत्वे निषेधपदेन व्यवहारः। लिङश्च प्रवर्त-नायामेव शक्तिरनुशासनसिद्धा, न निवर्तनायामपि। नञश्चाभावे शक्तिः। तस्य च येन सह सम्बन्धः तदभावबोधकत्वं प्रसिद्धम्। अतश्च यदि स धात्वर्थेन सम्बध्नीयात् तदा तदभावं बोधयेत्, तस्य च धात्वर्थस्य लिङर्थेनान्वये धात्वर्थवर्जनकर्तव्यतैव प्रतीयेत।

ननु कथं निषेधानां निवर्तनाप्रतिपादकत्वम्? यावता 'न भक्षयेत्' 'न हन्तव्य' इत्येवमादावव्यवधानेन नञर्थस्याभावस्य धात्वर्थेनान्वये धात्वर्थवर्जनकर्तव्यतैव सर्वत्र (१)वाक्यार्थः प्रतीयते। ततश्च यथा 'यजेते'त्यादौ यागकर्तव्यता वाक्यार्थः, एवं(२)निषेधेषु तत्तद्धा(३)त्वर्थवर्जनकर्तव्यता वाक्यार्थः, न निवर्तनेति चेत्—

मैवम्-अव्यवधानेऽपि धात्वर्थस्य प्रत्ययार्थोपसर्जनत्वेनोपस्थितस्य नञर्थेनान्वयायोगात्। नह्यन्योपसर्जनमन्येनान्वेति। यतः मा भूद्राजपुरुषमानयेत्यत्र राज्ञ आनयनान्वयित्वम्। ततश्चाव्यवधानेऽपि नञर्थस्य न धात्वर्थेनान्वयः; आरुण्यस्येवैकहायन्या। नापि कलञ्जादिपदार्थैरन्वयः। तेषामपि कारकोपसर्जनतयोपस्थितत्वेन भिन्नपदस्य नञोऽर्थेनान्वयायोगात्, एकहायन्या इवारुण्येन।

अतश्चान्येनान्वयायोगान्नञर्थः प्रत्ययार्थेन सम्बध्यते, तस्य प्राधान्यात्, क्रयभावनयेवारुण्यादीनि। तत्रापि नाख्यातांशवाच्ययार्थभावनया, तस्या अपि

---

यदि च लिङर्थेन, तदापि प्रवर्तनाभाव एव बोध्येत, न निवर्तनेति तद्बोधकपदाभावेन कथं निषेधवाक्यतो निवर्तनाप्रतीतिरित्याशङ्क्य पूर्वपक्षी प्रत्यवतिष्ठते—**नन्विति**। तदेव विवृणोति-**यावतेति**। **अव्यवधानेनेति**। शाब्दबोधं प्रति आसत्तेरपि कारणत्वादिति भावः। **यजेतेत्यादाविति** नञभावस्थलोदाहरणम्।

नाव्यवधानमात्रमन्वयप्रयोजकम्, किन्तु अन्वयप्रतियोगिना अन्याविशेषणीभूतेनापि भाव्यम्, अन्यविशेषणीभूते पदार्थे अन्यान्वयस्यासाम्प्रदायिकत्वात्। अतश्च धात्वर्थस्याव्यवहितत्वेऽप्यन्यविशेषणत्वात् न तत्र नञर्थस्यान्वयो भवितुमर्हतीति समाधानमाह—**मैवमिति**। **अन्वयायोगादिति**। प्रतियोगितयेति शेषः। अन्योपसर्जनस्यान्यत्रान्वयाभावे दृष्टान्तमाह-**माभूदिति**। माभूदिति नहीत्यर्थे। यस्मात् राज्ञः पुरुषपदार्थे उपसर्जनतयान्वितस्यानयनपदार्थेऽन्वयो न भवितुमर्हतीत्यर्थः। **आरुण्यस्येति**। सन्निहिताया अप्येकहायन्याः कारकोपसर्जनत्वात् यथा न तत्रारुण्यान्वयः तद्वदित्यर्थः। ननु मास्तु धात्वर्थेनान्वयः। कलञ्जादिपदार्थैस्तह भवत्वन्वयः, तेषां तदभावात् इत्यत आह-**नापीति**। **भिन्नपदस्येति**। प्रकृत्यर्थस्य कारकान्वयस्यैव व्युत्पन्नत्वात् **'तयोस्तु प्रत्ययः प्राधान्येन'** इति स्मरणात् **'परिपूर्णं पदं पदान्तरेणान्वेती'**ति न्यायाच्च प्रथमतः स्वपदोक्तकारकान्वयमुज्झित्वा नञर्थेनान्वयासम्भवादिति भावः। तत्र दृष्टान्तमाह-**एकहायन्या इति**। एकहायन्याः करणत्वोपसर्जनीभूताया यथा न भिन्नपदोपात्तेनारुण्येनान्वयः एवं प्रत्ययार्थोपसर्जनीभूतानां कलञ्जादीनां नञर्थेनान्वयो न सम्भवतीत्यर्थः।

तर्हि कुत्रान्वयः? तमाह-**अतश्चेति**। **प्रत्ययार्थेन** लिङर्थेन। तत्र कारणमाह—**तस्येति**। **"प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतस्तयोस्तु प्रत्ययः प्राधान्येन"** इति स्मृत्या प्रत्ययार्थस्यैव प्रधान्यावगमादित्यर्थः। **ननु—अस्तु तर्हि** आर्थीभावनायामेवा-

---

१. कपुस्तके 'सर्वत्र' इति नास्ति। २. निषेधेऽपि. ३. 'द्वाक्यार्थंव'

लिङ्त्वांशवाच्यप्रवर्तनोपसर्जनत्वेनोपस्थितत्वात्। अतो लिङ्त्वांशेन नञ् सम्बध्यते, तस्य सर्वापेक्षया प्राधान्यात्। नञश्चैष स्वभावो यत्स्वसम्बन्धि-प्रतिपक्षबोधकत्वम्। 'नास्ती'त्यत्र ह्यस्तीति सत्त्वशब्देन संबध्यमानो नञ् सत्त्वप्रतिपक्षमसत्त्वं गमयति। तदिह लिङर्थस्तावत्प्रवर्तना। अतस्तेन सम्बध्यमानो नञ् प्रवर्तनाप्रतिपक्षां निवर्तनां गमयति। विधिवाक्यश्रवणे अयं मां प्रवर्तयतीति प्रवर्तनाप्रतीतिवत् निषेधवाक्यश्रवणे अयं मां निवर्तयतीति निवृत्त्यनुकूलव्यापाररूपनिवर्तनायाः प्रतीतेः(१)।

अतश्च सर्वत्र निषेधेषु निवर्तनैव वाक्यार्थः। एवं च विधिनिषेधयोर्भिन्नार्थत्वं (२) सिद्धं भवति। हननादि (३) वर्जनकर्तव्यतावाक्यार्थपक्षे तु कर्तव्यताया एवोभयत्र प्रतिपाद्यत्वात्तयोरेकार्थत्वं स्यात्। तच्च न युक्तम्। यदाहुः—

अन्तरं यादृशं लोके ब्रह्महत्याऽश्वमेधयोः।
दृश्यते तादृगे(४)वेदं विधानप्रतिषेधयोः॥ इति।

तथा—

फलबुद्धिप्रमेयाधिकारिबोधकभेदतः।
पञ्चधात्यन्तभिन्नत्वाद्भेदो विधिनिषेधयोः॥ इति।

---

न्वयः, तस्याः कारकापेक्षया प्राधान्यात् प्रत्ययार्थत्वाविशेषाच्चेत्यत आह-तत्रापीति। यद्यपि तस्याः कारकापेक्षया प्राधान्यम्, तथापि शाब्दभावनापेक्षयोपसर्जनत्वात् अन्योपसर्जनीभूतेऽन्यान्वयासम्भवस्यानुपदमेवोक्तत्वात् सर्वप्रधानभूतायां शाब्दीभावनायामेव नञर्थस्य सम्बन्ध इत्याह-अत इति। अस्तु एतावता निवर्तनाबोधकत्वं कथमायातम्? नञो विध्यर्थेन सम्बन्धे प्रवर्तनाभावस्यैव बोधनात् इति पूर्वमेव निगूढतयोक्तामाशङ्कामिदानीं परिहरति-नञश्चैष इति। नञो न केवलमभावमात्रबोधकत्वम्, किन्तु येन सह सम्बध्यते तद्विरुद्धार्थबोधकत्वमित्यर्थः। तत्र दृष्टान्तमाह-नास्तीति। नञिति। एवञ्च नञ एव निवर्तनाबोधकत्वम्, तत्र च लिङ्तात्पर्यग्राहक इति भावः। किं तत्र प्रमाणमित्यत आह-विधिवाक्येति। उभयत्र विधिस्थले प्रतिषेधस्थले च। तयोः विधिप्रतिषेधयोः।

विधिप्रतिषेधयोरत्यन्तविरोधे बृहट्टीकोक्तां न्यायसुधाकृदुदाहृतां कारिकामनुवदति—अन्तरमिति। ब्रह्महत्यायाः अत्यन्तोत्कटपापरूपत्वेन; अश्वमेधस्य च 'सर्वं पाप्मानं तरति, तरति ब्रह्महत्यां योऽश्वमेधेन यजते' इत्यादिना तादृशपापनाशकत्वश्रवणाच्च तयोर्यावान् विरोधः परस्परमस्ति तावानेव विधिनिषेधयोर्विरोधः परस्परमस्तीति कारिकार्थः।

एवं फलादिना परस्परं भिन्नत्वादपि विधिनिषेधयोर्भेदोऽवश्यमङ्गीकर्तव्य इत्यत्र न्यायसुधोक्तं पद्यमपि स्वयमनुवदति—फलेति। स्वर्गादिरूपमिष्टं फलं विधेः, अनिष्टनिवृ-

---

१. प्रतिपत्तेः इति क.। २. सम्भवति। ३. निवर्तन। ४. वेह विधानप्रतिषेधयोः।

यन्मते इष्टसाधनत्वं लिङर्थस्तन्मतेऽपि लिङ्संसृष्टो नञ् इष्टसाधनत्वप्रतिपक्षमनिष्टसाधनत्वं गमयति। सर्वथापि तु नञः प्राधान्यात् प्रत्ययेनान्वयः।

( पर्युदासनिरूपणम् )

यदा तु तदन्वये किंचित् बाधकं तदाऽगत्या धात्वर्थेनान्वयः। तच्च बाधकं द्विविधम्–'तस्य व्रत'मित्युपक्रमो विकल्पप्रसक्तिश्चेति। (१)अनेन च

त्तिर्निषेधफलम्। विधिश्रवणे 'अहमनेनास्मिन् कर्मणि प्रवर्तितः' इति बुद्धिरुत्पद्यते, निषेधश्रवणे च 'अहमस्मात् कर्मणो निवर्तितः' इति धीरुदेति। यागादिगतेष्टसाधनत्वं विधेः प्रमेयम्, कलञ्जभक्षणादिगतानिष्टसाधनत्वं निषेधस्य प्रमेयम्। यथोक्तविशेषणविशिष्टः स्वर्गादिकामनावान् निमित्तवान् वा पुरुषः स्वयमप्रवृत्तः प्रमाणान्तरेणाप्रवर्त्तितो विधेयेष्वधिकारी, रागादिना प्रवृत्तमात्रः पुरुषो निषेधेष्वधिकरोति। नञ्रहितो लिङादिर्विधेर्बोधकः, लिङाद्यनुगृहीतो नञ् निषेधस्य बोधकः। एवं प्रकारेण पञ्चधा भिन्नत्वात् विधिनिषेधयोरत्यन्तभेद इत्यर्थः। एतदपि तत्रैव श्लोकैर्विवृतम्—

"विधिरिष्टफलोऽनिष्टपरिहारफलोऽपरः।
प्रेरितोऽस्मीति पूर्वं धीः वारितोऽस्मीति चापरे॥
विषयस्येष्टहेतुत्वं विधिना च प्रमीयते।
निषेधेन निषेध्यस्य प्रत्यवायनिमित्तता॥
विधिश्चाधिकरोत्यन्यकारणेनाप्रवर्तितम्।
रागादिना प्रवृत्तं तु निषेधस्तद्विलक्षणम्॥
नञ्वर्जितो लिङादिश्च विधिबोधस्य कारणम्।
लिङाद्यनुगृहीतस्तु नञ् निषेधस्य बोधकः॥ इति।

ननु प्रवर्तनालिङर्थवादिनां मते एवमुपपत्तावपि इष्टसाधनत्वलिङर्थवादिनां मते कथं निवर्तनायाः प्रतीतिरित्यत आह–यन्मत इति। एवञ्च ये इष्टसाधनत्वमेव लिङर्थमभ्युपगम्य तस्यैव प्रवर्तनात्वमभ्युपगच्छन्ति ते मण्डनमिश्रप्रभृतयः तत्प्रतिपक्षभूतमनिष्टसाधनत्वमेव लिङर्थं ब्रूयुः। तेन तेषामपि न कापि हानिः। पुरुषस्तु यथा इष्टसाधनताज्ञानात् प्रवर्तते, एवमनिष्टसाधनताज्ञानात् निवर्तते एवेति तत्रापि निवर्तनासिद्धिरविहतैवेति भावः। तस्मिन्नपि मते नञर्थस्य प्रत्ययार्थेनैव साकमन्वय इत्याह–सर्वथापीति। प्रधान्यादिति। प्रत्ययार्थस्येति शेषः। नञ इति अन्वय इत्यनेन सम्बध्यते।

( पर्युदासनिरूपणम् )

एवं सर्वत्र नञः प्रत्ययान्वयप्रसक्तौ क्वचित् तदपवादमाह–यदा त्विति। तदन्वयेप्रत्ययान्वये। बाधकमेवोपपादयति–तच्चेति। तस्येति। तस्य स्नातकस्य व्रतं अनुष्ठेयपदार्थः अग्रे निरूप्यते इति शेषः। यत्रोपक्रमेऽनुष्ठेयपदार्थवाचको व्रतशब्दो दृश्यते, यत्र वा प्रत्ययार्थान्वयाङ्गीकारेऽष्टदोषदुष्टो विकल्पः प्रसज्यते, तदुभयमपि नञर्थस्य

१. तेन।

**बाधकद्वयेन नञ्युक्तेषु वाक्येषु पर्युदासाश्रयणं भवति। तदभावे निषेध एव।**
**पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्। इति,**

---

प्रत्ययार्थान्वये बाधकमित्यर्थः। व्रतमित्युपलक्षणं धर्मादिपदस्यापि। **उपक्रम** इत्युपलक्षणमुपसंहारस्यापि। अत एव

**'एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि।**

**वनस्थयतिधर्मोऽयम्'** इत्यत्राभोजनसङ्कल्पलक्षणा स्मर्तृभिरङ्गीकृता सङ्गच्छते। अत एव च तन्त्रवार्तिके कर्त्रधिकरणे पर्युदासनिमित्तकथनावसरे—**'न हि दार्शपौर्णमासिके कश्चित् पर्युदासहेतुरस्ति व्रतशब्दप्रयोगो विकल्पप्रसक्तिर्वा'** इत्युपक्रमशब्दमनुपादाय प्रयोगपदमेव प्रयुक्तम्। परन्तु तत्रत्यं व्रतपदमपि धर्मादिपदोपलक्षकमित्यवगन्तव्यम्। **तदभावे** तादृशबाधकद्वयाभावे।

अत्र च विकल्पप्रसक्तौ पर्युदासाश्रयणमित्युक्त्या विकल्पदोषात् मुक्त्यर्थमेव पर्युदासाश्रयणमित्यवगमात् यत्र पर्युदासाश्रयणेऽपि विकल्पात् न मुच्यामहे तत्र पर्युदासे प्रयोजनाभावात् नञः प्रधानसम्बन्धलाभार्थे च प्रतिषेध एवाश्रीयते, यथा—**"न तौ पशौ करोति"** त्यत्र। अनेन हि वाक्येन पशुयागे आज्यभागसंज्ञके अङ्गे न कुर्यादित्याज्यभागकर्तव्यता प्रतिषिध्यते। यद्यत्र पर्युदास आश्रीयते तदा पशुयागे आज्यभागभिन्नमङ्गजातमनुतिष्ठेत् इत्यर्थः स्यात्। अनेन नाज्यभागयोरात्यन्तिकी निवृत्तिर्भवितुमर्हति। पशौ **"अग्नय आज्यस्यानुब्रूहि, सोमायाज्यस्यानुब्रूहि"** इत्याज्यभागाङ्गभूतमन्त्रपाठबलात् तयोरपि तत्र कर्तव्यतावगमात्, किन्तु विकल्प एवेति पर्युदासाश्रयणे प्रयोजनाभावात् प्रतिषेध एवाश्रीयते। एतेन **'न तौ पशौ करोति'** त्यत्र विकल्पभयात् पर्युदासाश्रयणमिति प्राभाकरोक्तिः प्रत्युक्ता। विकल्पानङ्गीकारे पशुप्रकरणे आज्यभागाङ्गमन्त्रपाठवैयर्थ्यापत्तेः। एतत्सर्वं **निषेध** एवेत्येवकारेणापि सूचितं ग्रन्थकृता।

**ननु** कोऽसौ पर्युदासः प्रतिषेधो वा? इत्याशङ्कायां तत्परिचयार्थं तयोर्लक्षणं प्राचीनोक्तमनुवदति—**पर्युदास इति**। अत्रोत्तरपदं क्रियावाचकप्रत्ययातिरिक्तपरम्, न तु वैयाकरणमतवत् समासचरमावयवे रूढम्। अतश्च यत्र नञ् क्रियाभिन्नवाचकपदेन सम्बध्यते तत्र **पर्युदासः**। क्रिया चाख्यातार्थः। एवञ्चाख्यातार्थभिन्नप्रतियोगिताकाभावबोधकवाक्यत्वं पर्युदासत्वमिति फलितम्। उत्तरार्धं स्पष्टार्थम्। लक्षणवाक्यद्वयमपीदं हरिकारिकायां श्लोकद्वयस्यार्धार्धात्मकम्। तत्र च

**"अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता।**
**प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्॥**
**प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता।**
**पर्युदासस्स विज्ञेयो यत्रोत्तरपदेन नञ्॥"**

इति श्लोकद्वयं श्रूयते। ग्रन्थकारस्स्वयं प्रकृतोपयुक्तमेकैकश्लोकादेकैकमर्धमुपादाय प्रतिषेधलक्षणे किञ्चिदन्यथयित्वा व्यलिखदित्यवगम्यते।

(१) प्रतिषेधः स विज्ञेयः क्रियया सह यत्र नञ् ॥

इति च तयोर्लक्षणम् । तत्र "नेक्षेतोद्यन्तमादित्य" मित्यादौ पर्युदासाश्रयणम्, 'तस्य व्रत' मित्युपक्रमात् ।

( उपक्रमबलात्पर्युदासाङ्गीकारः )

तथा हि-व्रतशब्देन कर्तव्योऽर्थ उच्यते । अतश्च स्नातकस्य कर्तव्यार्थानां वक्तव्यत्वेनोपक्रमात् किं तत् कर्तव्यमित्यपेक्षायां अग्रे 'नेक्षेतोद्यन्त' मित्यादौ कर्तव्य एवार्थो वक्तव्यः, आकाङ्क्षिताभिधानात् । अर्थान्तरोक्तौ च पूर्ववाक्यस्य साकाङ्क्षत्वेनाप्रामाण्यं (२) स्यात् । न हि कर्तव्यार्थस्य वक्तव्यत्वेनोपक्रमे अग्रे च तदनभिधाने पूर्ववाक्यस्य निराकाङ्क्षत्वं सम्भवति । न च साकाङ्क्षस्य प्रामाण्यम्, गौरश्वः पुरुषः इत्यादावपि तत्प्रसङ्गात् ।

---

एवं तयोर्लक्षणमुक्त्वा पर्युदासाश्रयणस्य प्राथमिकं स्थलमुदाहरति-तत्रेति । नेक्षेतेति । मनौ चतुर्थाध्याये—

अतोऽन्यतमया वृत्त्या जीवंस्तु स्नातको द्विजः ।
स्वर्गायुष्ययशस्यानि व्रतानीमानि धारयेत् ॥

इत्यत्र स्नातकोद्देशेनाग्रे वक्ष्यमाणाः तदनुष्ठेयपदार्था व्रतशब्दोक्ताः । अग्रे च 'नेक्षेतोद्यन्तमादित्य' मित्यादयोऽभिहिताः । तत्र सर्वत्रापि पर्युदासाश्रयणमेव । प्रतिषेधाश्रयणे तस्य कर्तव्यत्वाभावात् कर्तव्यवाचकव्रतशब्दोपक्रमो विरुध्येतेति भावः । अत्र चादिपदेन "नास्तं यन्तं कदाचन, ।

नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम् ।

"न लङ्घयेत् वत्सतन्त्रीम्" इत्यादीनि तत्प्रकरणे पठितानि नञ्घटितवाक्यानि सर्वाण्यपि गृह्यन्ते । उपसृष्टं राहुग्रस्तम् । वारिस्थं जलमध्ये प्रतिबिम्बतया दृश्यमानम् । अत्र चोदयादिविशिष्टमादित्यं न पश्येदिति यथाश्रुतोऽर्थः । तत्परिग्रहे चोपक्रमभङ्गापत्त्या निषेधमकल्पयित्वा नञो धात्वर्थेन सम्बन्धमङ्गीकृत्य ईक्षणाभावसङ्कल्पोऽनेन विधीयत इत्यङ्गीकार्यमिति तात्पर्यम् । एवञ्च तत्प्रकरणे यावन्ति नञ्घटितवाक्यानि तत्र सर्वत्रापि पर्युदासमङ्गीकृत्य तद्वर्जनसङ्कल्प एव कार्य इति सिध्यति । स च सङ्कल्पः-उद्यन्तमादित्यं नेक्षिष्ये-इत्येवमादिरूपो द्रष्टव्यः । यद्यप्यत्र मूलपर्यालोचनया मानवं वाक्यमेवोदाहरणमिति भाति, तथापि तत्र 'तस्य व्रत' मित्युपक्रमादर्शनात् "एतावता हैनसा विमुक्तो भवती" त्यग्रे वक्ष्यमाणस्य वाक्यशेषस्याभावाच्च न मानवं वाक्यमुदाहरणं भवितुमर्हति परन्तु तत्समानजातीयं तादृशवाक्यशेषविशिष्टं स्मृत्यन्तरं श्रुत्यन्तरं वोदाहरणमित्यवगन्तव्यम् ।

( उपक्रमबलात् पर्युदासस्वीकारः )

पर्युदासाश्रयणावश्यकतामुपपादयति-तथा हीति । आकाङ्क्षिताभिधानादिति ।

---

१. अयमेव पाठस्साधीयान् शास्त्रानुगतस्सम्प्रदायागतश्च । सति चैवं अत्र निर्णयसागरमुद्रितपुस्तके कलिकत्तामुद्रितपुस्तके च शोधयित्रा व्याख्यात्रा च स्वस्वमनीषानुसारेण पाठभेदं प्रकल्प्य तदनुसारेण चार्थो यो वर्णितः स सर्वोऽप्यभित्तिचित्रायित इत्युपेक्षणीयं प्रेक्षावद्भिः । २. ण्यप्रसङ्गात् ।

किञ्च 'नेक्षेते' त्यस्योपक्रमेण प्रतीयमाना एकवाक्यता च न स्यात्, अर्थान्तरोक्तेः। अतश्चास्मिन् वाक्ये कश्चित् कर्तव्य एवार्थो वक्तव्यः। तदुक्तौ च न नञः प्रत्ययेन सम्बन्धो घटते। तत्सम्बन्धे कर्तव्यार्थोक्तेरनुपपत्तेः। प्रत्ययाच्च उत्सारितो(१) नञ् धातुना सम्बध्यते। तत्सम्बन्धे च न नञः प्रतिषेधकत्वम्। विधायकसम्बन्धेनैव तस्य प्रतिषेधकत्वात्। प्रतिषेधकत्वस्य विधायकत्वप्रतिपक्षत्वात्।

नामधातु(२)योगे तु न नञः प्रतिषेधकत्वम्। तयोरविधायकत्वात्। यदाहुः

(३)नामधात्वर्थयोगी तु नैव नञ् प्रतिषेधकः।

वदत्यब्राह्मणाधर्मावन्यमात्रविरोधिनौ॥ इति।

अतश्च 'नेक्षेते' त्यत्र नञो धातुयोगात् नञोऽतिश्यामीक्षणविरोधी कश्चनार्थः प्रतिपाद्यते।

---

तदानीमेवापेक्षितविधानं भवतीत्यर्थः। अन्यथा अनपेक्षितविधानरूपो दोष आपतेदिति भावः।' तदनभिधाने कर्तव्यार्थानभिधाने। तत्प्रसङ्गात् प्रामाण्यप्रसङ्गात्।

ननु यत्र व्रतशब्दः श्रूयते तस्मिन्नेव वाक्ये कर्तव्यताविधिरङ्गीक्रियताम्। किमर्थमुपरितनेषु सर्वेष्वपि वाक्येषु लक्षणापादकः पर्युदास आश्रीयते इत्यत आह-किञ्चेति। अयमाशयः—स्नातकानुष्ठेयपदार्थनिरूपणप्रकरणे 'तस्य व्रत' मित्यादि सामान्यत एव व्रतशब्दः श्रूयते। तस्य च विशेषापेक्षायां अग्रिमवाक्यैस्सर्वैरेवाविशेषात् विशेषस्समर्प्यत इति वक्तव्यम्। अयमर्थः स्मृत्यन्तरेषु एतत्प्रकरणगतैतत्समानार्थकवाक्यैः स्पष्टमवगम्यते। तेषु हि 'व्रतानीमानि धारयेत्' 'इमानि व्रतान्यनुकर्षेत्' इत्यादिना उपरिष्टात् प्रतिपाद्यमाना एव पदार्थाः व्रतशब्देनाभिधीयन्ते। कर्तव्यविशेषश्च कर्तव्य एव भवतीत्यगत्या उत्तरवाक्यानां पूर्ववाक्यापेक्षितविशेषसमर्पकत्वावश्यम्भावेन तदेकवाक्यताया अप्यवश्याभ्युपगमनीयत्वात्। यदि तु 'तस्य व्रत' मित्यत्रैवानुष्ठेयपदार्थविधानमाश्रीयेत, तदा स्वरसतः प्रतीयमाना एकवाक्यता भज्येतेति। अत्र च न पदैकवाक्यता। वाक्यानां स्वार्थबोधे समाप्तत्वात्। अतो दर्शपूर्णमासवाक्यप्रयाजादिवाक्यानामिव वाक्यैकवाक्यता वेदितव्या। अतश्चेति। आकाङ्क्षिताभिधानसिध्यर्थं प्रतीयमानैकवाक्यतानिर्वाहार्थं चेत्यर्थः। अस्मिन् वाक्ये नेक्षेतेति वाक्ये। तदुक्तौ कर्तव्यार्थोक्तौ। तत्सम्बन्धे विधिप्रत्ययेन सह सम्बन्धे। अनुपपत्तेरिति। नञः स्वसम्बन्धिप्रतिपक्षबोधकत्वस्य पूर्वमेव निरूपितत्वादिति भावः। तत्सम्बन्धे धातुसम्बन्धे। विधायकसम्बन्धेनैवेति। 'विधायकैस्संयुक्तो नैव नञ् प्रतिषेधकः' इति वार्तिकोक्तत्वादिति भावः। किमिदं प्रतिज्ञामात्रसाध्यम्? उत युक्तिसहम्? तदर्थमाह-प्रतिषेधकत्वस्येति। तयोः नाम्नः धातोश्च। अविधायकत्वादिति। विधायकसंयुक्तस्यैव नञः तत्प्रतिपक्षबोधकत्वादिति भावः। नामेति। नाम्ना नामार्थेन धात्वर्थेन च संयुज्यमानो नञ् न प्रतिषेधमभिधत्ते। यतः ब्राह्मणपदेन संयुक्तः तदन्यमात्रमब्राह्मणं धर्मपदेन च संयुक्तस्तद्विरोधिनमधर्मं च वदतीत्यर्थः। एतावता प्रकृते किमायातम्? अत आह-अतश्चेति।

---

१. अवतारितो इति क.। २. धात्वर्थयो। ३. नामधात्वर्थयोर्योगे।

ननु–'तदन्यतद्विरुद्धतदभावेषु नञि' ति सत्यपि स्मरणे नञः स्वसंसृष्टाभाव एव शक्तिः, लाघवात्। न तु तदन्यतद्विरुद्धयोः। तयोरभावघटितत्वेन गौरवात्। अनेकार्थत्वस्य चान्याय्यत्वात्। अतो नञो धातुयोगे धात्वर्थाभावबोधकत्वमेव, न तु तदन्यतद्विरुद्धार्थबोधकत्वमिति चेत्—

सत्यम्, नञोऽभाव एव शक्तिः, स्मरणं तु प्रतीत्यभिप्रायम्, न शक्त्यभिप्रायम्, नामधात्वर्थयोगीत्यपि प्रतीत्यभिप्रायम्, तथापि 'नेक्षेते' त्यत्र प्रत्ययस्य नञाऽसम्बन्धात् तेन तावत् कश्चिदर्थो विधेयः। तत्र न तावद्धात्वर्थो विधातुं शक्यते, नञा तदभावबोधनात्। नापि तदभावो विधातुं शक्यते, अभावस्याविधेयत्वात्। अतश्च नञीक्षतिभ्यां विधानयोग्यः कश्चनेक्षणविरोधी अर्थो लक्षणया प्रतिपाद्यते। स चेक्षणविरोधी लक्ष्यमाणः पदार्थो

---

ननु "अमानोनाः प्रतिषेधे" इति स्मृतिबलात् लाघवाच्च नञोऽभाव एव शक्तिरङ्गीकार्या। अत एव नञ्सूत्रे महाभाष्ये "निवृत्तपदार्थक" इत्यभावार्थकत्वमेव नञ उक्तम्। निवृत्तमिति भावे क्तः। निवृत्तिरित्यर्थः। निवृत्तिरभावः स पदार्थो यस्येति बहुव्रीहिः। अभावार्थक इति यावत्। न च 'तदन्यतद्विरुद्धतदभावेषु नञ्' इति स्मृत्या नञोऽन्योन्याभावादावपि शक्तिरस्तीति वाच्यम्। तस्याः स्मृतेः लक्षणायां तात्पर्यग्राहकत्वेनाप्युपपत्तौ अनेकशक्तिकल्पने मानाभावात्।

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाःषट् प्रकीर्तिताः॥

इतीदमपि वचनं एष्वर्थेषु नञो लक्षणायां तात्पर्यग्राहकमेव। स्पष्टं चैतत् भूषणादौ। अतश्च नञो धातुना योगे तदभावस्यैव बोधनात् तद्विरुद्धार्थस्यैवाप्रतीतौ कुतस्सङ्कल्पलक्षणेत्याशङ्कते–नन्विति। संसृष्टाभाव इति। संसर्गाभाव इत्यर्थः। अनेकार्थस्य चेति। चकारोऽनुक्तसमुच्चयार्थः। भेदस्य नञ्वाच्यत्वाङ्गीकारेऽपि घटो न पट इत्यादौ नञर्थभेदस्याभेदातिरिक्तसम्बन्धेन पटेऽन्वयासम्भवात् तद्वद्भेदवति लक्षणाया आवश्यकत्वात्। अतश्च संसर्गाभाव एव शक्तिरङ्गीकार्येति भावः।

नञोऽभावशक्ततां स्वीकरोति–सत्यमिति। स्मरणमप्यन्यथोपपादयति–स्मरणन्त्विति। तदन्येति व्याकरणस्मृतिरित्यर्थः। प्रतीत्यभिप्रायमिति। नञः श्रवणादेतावन्तोऽर्थाः प्रतीयन्त इति नञमीषामर्थानां प्रतिपादकः इत्येतावत्यंशे स्मृतेस्तात्पर्यम्। प्रतिपादनञ्च शक्त्या लक्षणया वेति तु लाघवादिसहकृतन्यायैकवेद्यमित्यभिप्रायः। प्रतीत्यभिप्रायमिति। अत एव न्यायरत्नाकरे एतच्छ्लोकव्याख्यानावसरे सम्भवति चाभाववचनस्यापि ( नञः ) अन्यमात्रे विरुद्धे च प्रवृत्तिरिति अभाव एव नञः शक्तिः, इतरत्र च लक्षणयापि प्रवृत्तिरित्याशयोऽवबोधित इति भावः। कथं तर्हि 'नेक्षेते' त्यत्र सङ्कल्पबोधकत्वम्? तदाह—तथापीति। तेन प्रत्ययेन। अविधेयत्वादिति। उपादेयस्वरूपकृतिसाध्यत्वस्य तत्राभावादिति भावः। नञीक्षतिभ्यामिति। नञ्पदेन ईक्षतिधातुना चेत्युभाभ्यां मिलिताभ्यामित्यर्थः। ननु लक्ष्यतामीक्षणविरोधी कश्चित् पदार्थः, तथापीक्षणविरोधिनां बहूनां पदार्थानां सत्वात् कथं सङ्कल्पस्यैव लक्ष्यमाणतेत्याश-

(१)'नेक्षेत' इत्यनीक्षणसंकल्पः, तस्येक्षणविरोधित्वात्। सत्यपि पदार्थान्तरस्येक्षणविरोधित्वे सर्वक्रियाऽविनाभूतत्वेन संकल्पस्यैव (२)लक्षणात् स एव 'नेक्षेते' त्यत्र कर्तव्यतया विधीयते-अनीक्षणसंकल्पेन भावयेदिति। भाव्याकाङ्क्षायां च "एतावता हैनसा विमुक्तो भवती" ति वाक्यशेषावगतः पापक्षयो भाव्यतया सम्बध्यते।

एवञ्चात्र पापक्षयार्थं सङ्कल्पस्य कर्तव्यतया विधानात् 'तस्य व्रत'मित्यनेनैकवाक्यता सिद्धा भवति।

तत्सिद्धं 'नेक्षेते' त्यत्र 'तस्य व्रत' मित्युपक्रमात् पर्युदासाश्रयणमिति॥

( विकल्पभयात् पर्युदासाङ्गीकरणम् )

'नानूयाजेषु येयजामहं करोती' त्यत्र विकल्पप्रसक्त्या तदाश्रयणम्।

---

ङ्क्षायामाह—सत्यपीति। सत्यं सन्तीक्षणविरोधिनो बहवः पदार्थाः। तथापि न ते ईक्षणाविनाभूताः, मानससङ्कल्पस्तु सर्वप्रवृत्तिनिवृत्त्यविनाभूत इति स एव लक्षणीय इत्याशयवानाह-सर्वक्रियेति। भाव्याकाङ्क्षायामिति। अनीक्षणसङ्कल्पेन भावयेत् इत्युक्तौ तस्य विहितत्वप्रतीतेः विहितेऽपि तस्मिन्नफले प्रेक्षावतः प्रवृत्त्यनुदयात् तत्सिध्यर्थं भाव्यस्य कस्यचिदपेक्षायां सत्यामित्यर्थः। एतावतेति। एतावतानीक्षणसङ्कल्पमात्रेण पापान्मुक्तो भवतीत्यर्थः। वाक्यशेषावगत इति। स्तुत्यर्थं प्रवृत्तस्यापि वाक्यशेषस्य फलसमर्पकत्वं रात्रिसत्रवदङ्गीक्रियत इति भावः। पापक्षय इति। अक्रत्वर्थस्य तस्य क्रतूपकाररूपफलजननायोगात् पुरुषार्थत्वाच्च पुरुषाभिलषितफलस्यैव भाव्यत्वौचित्याच्चेति भावः। न च 'उद्यन्तमादित्य' मित्यत्र उद्यदादित्यस्य पदार्थैकदेशे ईक्षणे अन्वयाङ्गीकरणापत्त्या एकदेशान्वयनिबन्धनो दोष इति वाच्यम्। मीमांसकमते कारकाणां प्रथमतो भावनान्वयस्यैव स्वीकारात् तदनापत्तेः, पार्ष्ठिकान्वयवेलायां च समस्तपदघटितस्य वाक्यस्यैव कल्पनात् न दोषः। प्रकृतमुपसंहरति-तत्सिद्धमिति।

( विकल्पभयात् पर्युदासाङ्गीकरणम् )

द्वितीयं बाधकमुपपादयति—नानूयाजेष्विति। अयमत्र विषयः—'आश्रावयेति चतुरक्षरं, अस्तु श्रौषडिति चतुरक्षरं, यजेति द्व्यक्षरं, ये यजामह इति पञ्चाक्षरं, द्व्यक्षरो वषट्कारः, एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः, इत्यनारभ्य श्रूयते। अस्यायमर्थः-यदाध्वर्युः यजतिचोदनाचोदितेषु कर्मसु हविर्देवेभ्यो दातुमुद्युङ्क्ते तदा हविःपूर्णां जुहूं हस्ते गृहीत्वा आग्नीध्रनामानमृत्विग्विशेषं प्रति प्रैषं ददाति-आश्रावयेति। एवं प्रेषितः स आग्नीध्रः "अस्तु श्रौषट्" इति प्रतिब्रूयात्। तच्छ्रुत्वाध्वर्युः तदानीं त्यज्यमानद्रव्योद्देश्यभूतदेवतावाचिपदं द्वितीयान्तमुच्चार्य तदन्ते 'यजे' ति पदं ब्रूयात्, यथा—अग्निं यज, विश्वान् देवान् यज, इत्यादि। तच्छ्रुत्वा च होता तद्देवताकयाज्यातः पूर्वं "ये यजामहे" इति पदद्वयं ततो याज्यां च पठित्वा तदन्ते

---

१. कलिकत्तामुद्रितपुस्तके तु नास्तीयं पङ्क्तिः। २. लक्षणा।

**तथा हि-यद्यत्र प्रधानसम्बन्धलोभान्नञः प्रत्ययसम्बन्धः स्वीक्रियते तथा सत्यनेन वाक्येनानूयाजेषु येयजामहः प्रतिषिध्यते इति वक्तव्यम्-अनूयाजेषु येयजामहं न कुर्यादिति। न च तत्र तस्य प्रतिषेधः प्राप्तिं विना सम्भवति, प्राप्तिसापेक्षत्वात् प्रतिषेधस्य।**

---

"**वौषडि**" ति वषट्कारमुच्चारयेत्। अत्र च 'आश्रावये' त्यक्षरचतुष्टयमुक्तम्। 'अस्तु श्रौषट्' इत्यपि तथैव। 'यजे' ति 'वौषट्' इति च द्व्यक्षरम्। 'ये यजामहे' इत्यक्षरपञ्चकम्। इमानि च सप्तदशाक्षराणि सर्वेष्वपि यजतिचोदनाचोदितेषु पठनीयानि। यजतिचोदनाचोदितत्वं च यजधातुघटितपदघटकप्रत्ययविहितत्वम्। आश्रावयेत्यादीनामर्थो विवृतो वेदार्थप्रकाशे सायणाचार्यैः-**आश्रावयेति**। हे आग्नीध्र यक्ष्यमाणदेवतां प्रति 'तुभ्यमिदं दीयत' इत्याभिमुख्येन श्रावयेत्यर्थः। **अस्तु श्रौषडिति**। एवमध्वर्युणोक्ते स आग्नीध्रः 'अस्तु' इत्यङ्गीकृत्य "श्रौषट्" इति शब्देन श्रावयति। हे देवाः युष्मद्विषयमिदं हविर्दानं शृणुतेत्यर्थः। **यजेति**। हे होतः यज याज्यां पठेत्यर्थः। **ये यजामह इति**। ये वयं होतारोऽध्वर्युणा यजेति प्रेषिताः ते वयं यजामहे याज्यां पठाम इत्यर्थः। वषट्कारशब्देन 'वौषडि'त्येवंरूपो मन्त्रो विवक्षितः। हविर्दीयत इति तस्य शब्दस्यार्थ इति। अतश्चानारभ्याधीतवाक्ये यागसामान्योद्देशेन येयजामहो विधीयते। 'नानूयाजेष्वि'ति वाक्येन अनूयाजव्यतिरिक्तेषु यागेषु येयजामहः कर्तव्यतया बोध्यते। एवञ्चानारभ्यवाक्यनानूयाजवाक्ययोरेकवाक्यतामङ्गीकृत्य अनूयाजव्यतिरिक्तेषु यागेषु येयजामहः कर्तव्य इति विधिरित्यर्थः।

नन्वत्र कथं विकल्पप्रसक्तिः? येन प्रतिषेध आश्रीयते, तदुपपादयति-**तथा होति। ये यजामहं न कुर्यादिति**। 'ये यजामहे' इति पदद्वयं नोच्चारयेदित्यर्थः। एवञ्चानूयाजेषु '**देवं बर्हिर्वसुवने वसुधेयस्य वेतू ३ वौषट्**' इत्येव ब्रूयादिति फलितम्। **प्राप्तिसापेक्षत्वादिति**। प्रतिषेधो हि यत्किञ्चित्प्रतियोगिकाभावबोधनम्। तच्चाभावज्ञानमन्तरा न सम्भवति, सर्वत्राभावज्ञानं प्रति प्रतियोगिज्ञानस्य कारणत्वात्। तच्च प्रतियोगिज्ञानं यदधिकरणे निषेधः तदधिकरणेऽपेक्ष्यते। अन्यथा यत्र कुत्रापि प्रसिद्धस्यात्र निषेधे निषेधानां प्रसक्तपुरुषनिवृत्तिप्रयोजनकत्वाभावेन वैयर्थ्यापत्तेः। न च ह्रदे वह्निप्रसिध्यभावेऽपि अन्यत्र प्रसिद्धिमादायैव ह्रदे वह्निर्नास्तीति प्रयोगवत् अन्यत्र यागेषु प्रसिद्धयेयजामहमादायैव तदभावोऽत्र बोध्यतामिति वाच्यम्। सर्वत्र निखिलकारकविशिष्टाख्यातार्थ एव प्रतियोगितासम्बन्धेन नञर्थान्वयस्यौत्सर्गिकत्वेन तदभावस्यैव तत्र प्रतीतेः अनूयाजाधिकरणकयेयजामहानुकूलकृतेरेव तत्र प्रतियोगितया तत्प्रसिद्धिं विना तदभावविषयकशाब्दबोधस्यैवाजननात् तत्सिध्यर्थं अनूयाजेषु येयजामहप्रसिद्धेरावश्यकत्वात्। ह्रदे वह्निर्नास्तीत्यत्र तु बाधात् अगत्या वन्ह्यादेरेव प्रतियोगित्वमङ्गीकृत्य तत्प्रतियोगिकाभावस्यैवानुयोगिनि ह्रदादौ बोधनम्। अतश्च प्रतिषेधस्थलेऽनुयोगिवृत्तिप्राप्तिरवश्यमङ्गीकार्यैवेति भावः।

**अत एव "नान्तरिक्षे न दिवी" त्यस्य न प्रतिषेधत्वम् , अन्तरिक्षे चयनाप्राप्तेः। अत एव "ब्राह्मणो न हन्तव्य" इत्यस्य नित्यवद्धनननिवर्तकत्वमुपपद्यते। सर्वो हि पुरुषः कदाचिद्धननादौ प्रवर्तते; कदाचिच्च(१)रागाद्यभावे न प्रवर्तते। तत्र यदि निषेधस्य प्राप्तिसापेक्षत्वं न स्यात् तदा(२)रागादि तिरोधाय हननादावप्रवृत्तं प्रत्येव शास्त्रप्रामाण्योपपत्तौ रागादिना हननादौ प्रवृत्तेन पुंसा न ततो निवर्तितव्यम्।**

**प्राप्तिसापेक्षत्वे तु स्वयमप्रवृत्तं प्रति प्रसक्त्यभावेन निषेधशास्त्राप्रवृत्तेः रागादिना प्रवृत्तं प्रत्येव भ्रान्तिनिमित्तरागबाधेन निषेधशास्त्रप्रवृत्तेर्युक्ता प्रवृत्तस्य ततो निवृत्तिः।**

---

एवञ्च यत्र तादृशी प्राप्तिर्नास्ति तत्र श्रुतस्यापि न नञः प्रतिषेधकत्वमित्याह—**अत एवेति।** प्रतिषेधस्य प्राप्तिसापेक्षत्वादेवेत्यर्थः। **नान्तरिक्ष इति।** अन्तरिक्षेऽग्निचयनं न कुर्यात्,द्युलोके चाग्निचयनं न कुर्यादिति तदर्थः। चयनं नामाहवनीयस्याग्नेः स्थापनार्थमिष्टकाभिः स्थण्डिलविशेषसम्पादनम्। अत्र च **'नान्तरिक्षे'** इत्यादि न चयननिषेधार्थम्। किन्तु **'हिरण्यं निधाय चेतव्य'** मित्यस्य विधेश्शेषभूतम्। यथान्तरिक्षे दिवि वा चयनं न प्रसिद्धं, एवं हिरण्यरहितायां केवलायामपि पृथिव्याम्। अतो हिरण्यं भूमौ निधाय तदुपर्येव चयनं कर्तव्यमित्यौचित्येन हिरण्यनिधानस्तुतिः। कुतो न चयननिषेधः ? अत आह-**चयनाप्राप्तेरिति।** तस्य भूमावेव कर्तुं शक्यतया अन्तरिक्षद्युलोकयोः कर्तुमशक्यत्वेन तत्र प्राप्तेरेवाभावादित्यर्थः। **अत एव** निषेधस्य प्राप्तविषये प्रवृत्तिस्वाभाव्यादेव। **नित्यवदिति।** नित्यतयेत्यर्थः। तदेवोपपादयति—**सर्वो हीति।** हननादावित्यादिपदेन निषिद्धकर्माणि गृह्यन्ते। **तिरोधाय** प्रतिरुध्य। **शास्त्रेति**निषेधवाक्याभिप्रायम्। **नेति।** प्रवृत्त्यभावस्थलमादाय चरितार्थस्य शास्त्रस्य रागप्राप्तप्रवृत्तिबाधे प्रमाणाभावात्। अतश्च नित्यवद्धनननिवर्तकत्वं नोपपद्येतेति भावः।

भवत्पक्षे वा कथं नित्यतया हनननिवृत्तिः ? अत आह-**प्राप्तीति। स्वयमिति।** शास्त्रं विनेत्यर्थः। अप्रवृत्तं ( पुरुषं ) प्रति निषेधशास्त्राप्रवृत्तेरित्यन्वयः। तत्र हेतुः **प्रसक्त्यभावेनेति। ननु** अस्तु रागादिना प्रवृत्तपुरुषविषय एव निषेधशास्त्राणां प्रवृत्तिः, तथापि कथं तस्य नित्यतया हननादिनिवर्तकत्वम्। तादृशस्थले रागादिकमुपजीव्यैव खलु निषेधशास्त्रं प्रवर्तत इति वक्तव्यम्। ततश्च स्वतो दुर्बलस्याप्युपजीव्यत्वेन प्राबल्यमश्नुवतो रागादेः निषेधशास्त्रतो निवृत्तिरात्यन्तिकी न सम्भवत्येवेति विकल्प एव युक्त इत्यत आह-**भ्रान्तीति।** हननादिविषयकबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वभ्रमादित्यर्थः। प्रवृत्तौ हि तद्विषयीभूते व्यापारे बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताज्ञानं कारणम्। तच्च निषेधशास्त्रानालोचनदशायां कलञ्जभक्षणादौ भ्रमादुदेति। तदानीं च शास्त्रप्रवृत्तौ तेन पूर्वोत्पन्नज्ञाने भ्रमत्वमापाद्यते। अतश्चोपजीव्यस्यापि भ्रमात्मकस्योत्तरोत्पन्नेन प्रमाणज्ञानेन युक्त आत्यन्तिको बाध इति भावः। यद्यपि इष्टसाधनत्वांशे न भ्रान्तिः, तात्कालिकतृप्तिरूपेष्टसाधनत्वस्य कलञ्जभक्षणादौ सत्वात्,

---

१. रागाद्यभावेन निवर्तते। २. 'रागाविरोधाय' इति तु पाठो न साधीयान्।

**अतश्च 'ब्राह्मणो न हन्तव्य' इत्यस्य निषेधस्य निवृत्तिनियमबोधकत्वम्, 'व्रीहीनवहन्या' दित्यस्येवावघातनियमबोधकत्वम्। यथा खलु 'व्रीहीनवहन्या' दिति शास्त्रं वैतुष्यार्थमवघाते स्वतः प्रवृत्तं पुरुषं प्रति न प्रवर्त्तते, वैयर्थ्यात्, किन्तु दलनादौ प्रवृत्तं प्रति, एवं 'न हन्या' दिति शास्त्रं हननात् स्वयं निवृत्तं पुरुषं प्रति न प्रवर्तते, वैयर्थ्यात्; किंतु हनने प्रवृत्तं पुरु प्रति कर्तव्यत्वेन प्रसक्तस्य प्रतिषेधात्—यत् कर्तव्यं तन्नेति।**

---

तथापि विशेषणांशे बलवदनिष्टाननुबन्धित्वे अप्रसक्त्वात् निषेधेन तन्निवारणात् विशिष्टाभावसम्पादकतया तस्य प्रवृत्तिविघटकत्वं बोध्यम्। ततः निषेध्यहननादितः।

**निवृत्तिनियमबोधकत्वमिति।** निवृत्तेर्यो नियमः अप्राप्तांशपूरणं तद्बोधकत्वमित्यर्थः। **अयमाशयः**—यथा विधेः अपूर्वविधित्वनियमविधित्वपरिसंख्याविधित्वरूपं त्रैविध्यमस्ति, एवं निषेधेष्वपि अपूर्वनिषेधः, नियमनिषेधः, परिसंख्यानिषेधश्चेति त्रैविध्यमस्ति, तत्र अवहननियमविधिः स्वत एवावहनने प्रवृत्तपुरुषविषये न प्रवर्तते। किन्तु अवहननमुज्झित्वा य उपायान्तरेण वैतुष्यं सम्पादयितुमारभते तदानीमवहननस्य योऽप्राप्तोऽशः तत्पूरक एव यथा भवति तथैव नियमनिषेधोऽपि स्वत एव निवृत्तपुरुषविषये न प्रवर्तते, तत्र प्रयोजनाभावात्। न च निषेधश्रवणं विना पुरुषस्य स्वतो निवृत्तिर्नास्त्येवेति वाच्यम्। हिंसादिनेव तद्वर्जनेनापि पुरुषस्य कदाचिदीप्सितसम्भवात्! किन्तु यो रागादिना निषेध्यकर्मसु हननादिषु प्रवर्तते तदानीं निवृत्तेर्योऽप्राप्तोऽशः सोऽनेन पूर्यत इति। अतश्च नियमविधिस्थलेऽप्राप्तांशपूरकत्वात् प्रवृत्तिनियमवत् नियमनिषेधस्थलेऽप्यप्राप्तांशपूरकत्वात् निवृत्तिनियम इत्युच्यत इति। एवञ्च रागप्राप्तविषयकनिषेधत्वावच्छिन्नस्य नियमनिषेधत्वमित्युक्तं भवति। अपूर्वनिषेधाः **"नातिरात्रे षोडशिनं गृह्णाति" "दीक्षितो न ददाति" "न तौ पशौ करोति"** इत्यादयो बोध्याः।

**वस्तुतस्तु**—परिसङ्ख्यासूत्रे **"सर्वत्र हि परिसंख्याशब्दादेवकाराद्वा न श्रुत्या परिसंख्या नियमो वा बोध्यत"** इति वार्तिकस्वारस्यात् सर्वे निषेधाः परिसंख्यापदेनैवाभिधीयन्ते। न तु विधाविव तत्राप्यपूर्वविधित्वादिकृतो भेदस्समस्तीत्यवगम्यते। अत एव **विधिरसायने**(१)द्विचत्वारिंशच्छ्लोकव्याख्यानावसरे—**"अर्थाद्वा स्वविषयप्रच्युतात् लाक्षणिकशब्दाद्वा एवकाराद्वा नञ्पदाद्वा लभ्यो यस्य कस्यापि भावस्याभावस्य वा यो बाधः स सर्वोऽपि परिसंख्येति मर्यादां कुर्महे"** इत्यभिधाय तत्रैवावसाने **"तस्मादार्थो लक्ष्य एवकारप्रतिपाद्यो नञर्थभूतश्च सर्वोऽपि निषेधः परिसंख्येति युक्तम्। उक्तञ्च न्यायसुधायां—परिसंख्यावर्जनबुद्धिः, तदर्थो नञादिः परिसंख्याशब्दः तद्योगात् 'ब्राह्मणो न हन्तव्यः' 'नेक्षेतोद्यन्तमादित्य' मित्यादीनामेव श्रुत्या परिसंख्यात्वमिति"** इत्युपसंहरन्ती दीक्षितोक्तिरपि साधु सङ्गच्छते। इममेव चाशयं **"तेन प्रवर्तकयो-**

---

१. यद्यपि विधिरसायनस्थश्लोकपरिगणनायां श्लोकोऽयं त्रिचत्वारिंशत्तमः, तथापि ग्रन्थकृता द्वितीयश्लोकमारभ्यैव श्लोकानां संख्यातत्वात् तदनुरोधेनेदम्।

**अतश्च प्राप्तिसापेक्षत्वात् प्रतिषेधानामनूयाजेषु येयजामहप्रतिषेधे तस्य तत्र प्राप्तिर्वक्तव्या। सा च न तावद्धननादाविव रागतः सम्भवति। अतो 'यजतिषु येयजामहं करोती' ति शास्त्रात् सा वक्तव्या। शास्त्रप्राप्तस्य च प्रतिषेधे विकल्पः स्यात्, शास्त्रेण भ्रान्तिनिमित्तरागस्येव शास्त्रान्तरस्यात्यन्तबाधायोगात्।**

**न च पदशास्त्रेणाहवनीयशास्त्रस्येव 'नानूयाजेष्वि'ति विशेषशास्त्रेण 'यजतिषु येयजामहं करोती' ति सामान्यशास्त्रस्य बाधः स्यादिति वाच्यम्। शास्त्रयोर्हि तत्र बाध्यबाधकभावो यत्र परस्परनिरपेक्षता। न हि पदशास्त्रस्य**

---

**विध्योरेवापूर्वविधित्वनियमविधित्वे सम्मते इति न निषेधस्यापूर्वविध्यादिवत् भेदत्रयम्''** इति ग्रन्थेनोपोद्बलयन्ति प्रकाशकारा अपीति ध्येयम्।

एवं प्रतिषेधस्य प्राप्तिसापेक्षत्वे साधिते प्रकृतेऽप्यनूयाजाधिकरणकयेयजामहस्य निषेधार्थं तत्र तत्प्राप्तिरवश्यं वक्तव्येत्याह—**अतश्चेति**। अस्तु प्राप्तिसापेक्षत्वम्, तथापि रागादेव सा भवतु, तथा च हननादाविव नित्यवन्निषेधस्सिध्यतीत्याशङ्कयाह—**सा चेति**। **रागत इति**। क्रियायां दुःखात्मिकायां विना वचनं प्रेक्षावतां प्रवृत्त्यनुदयादिति भावः। **अत्यन्तबाधायोगादिति**। रागप्राप्तस्थले हि रागस्य भ्रान्तिनिमित्तकस्य सम्भवात् तत्प्रापितस्य पदार्थस्य भ्रान्त्याद्यनिमित्तकशास्त्रप्रापितेन तेन युक्तो बाधः। शास्त्रीयप्राप्तिस्थले तु उभयोरपि शास्त्रीयत्वाविशेषात् भ्रमप्रमादाद्यसम्भवस्य चाप्युभयत्र तुल्यत्वात् तादृशेनैकेन तादृशस्यैवापरस्यात्यन्तिको बाधो न भवितुमर्हतीति पाक्षिक एव बाधोऽङ्गीकर्तव्यस्स्यात्, तथा च विकल्प इति।

ननु—शास्त्रप्राप्तस्यापि शास्त्रान्तरेणात्यन्तिको बाधो दृष्टः पदाहवनीयाद, तद्वदेवात्रापि कुतो न स्यात् इत्याशङ्कामनूद्य परिहरति—**न चेति**। **पदशास्त्रेणेति**। ज्योतिष्टोमप्रकरणे यागार्थंसोमलतायाः क्रयणमाम्नातम्—**"अरुणया पिङ्गाक्ष्यैकहायन्या ( गवा ) सोमं क्रीणाती" ति**। तत्र यजमानगोष्ठस्था गौः क्रयस्थानं प्रत्यानीयते। आनीयमाना च सा यत्र सप्तमं पदं निक्षिपति तत्र होमः कर्तव्यतया विहितः—**"सप्तमे पदे जुहोति"** इति। एवं **अश्वमेधे** यागीयाश्वस्य पदप्रक्षेपस्थाने होमो विहितः—**"अश्वस्य पदे पदे जुहोति"** इति, एतादृशानि होमविशेषोद्देशेन पदरूपाधिकरणविधायकानि वाक्यानि पदशास्त्राणि। **"यदाहवनीये जुहोती"** ति होमत्वावच्छिन्नोद्देशेनाहवनीयसंज्ञकाग्निविधायकं शास्त्रमाहवनीयशास्त्रम्। तत्र विजातीयहोमत्वं पदशास्त्रस्योद्देश्यतावच्छेदकम्। आहवनीयशास्त्रं तु होमत्वावच्छिन्नोद्देश्यकम्। एवञ्च सामान्यविषयकस्याहवनीयशास्त्रस्य विशेषविषयकेण पदशास्त्रेणात्यन्तिको बाधो यथाऽङ्गीक्रियते एवमनूयाजगतयेयजामहमात्रविषयकेण **'नानूयाजेष्वि'**ति शास्त्रेण यागसामान्यगतयेयजामहविषयकस्य **'यजतिषु येयजामहं करोती'**ति शास्त्रस्य बाधो भवत्वित्याशङ्कार्थः। समाधत्ते—**शास्त्रयोरिति**। न च सामान्ये आधारान्वयायोगात तद्द्वारा व्यक्तिविशेषेष्वेव प्रवर्तमानस्य सामान्यशास्त्रस्याविशेषात् पदहोमव्यक्तावपि प्रवृत्तः

स्वार्थविधानार्थमाहवनीयशास्त्रापेक्षास्ति । निषेधशास्त्रस्य तु प्रसक्त्यर्थ 'यजतिषु येयजामहं करोती' ति विधेरस्त्यपेक्षा ।

एवञ्च निषेधशास्त्रस्य विशेषविषयत्वेन प्राबल्यवत् विधिशास्त्रस्याप्युपजीव्यत्वेन प्राबल्यमस्तीति न निषेधेन विधेरत्यन्तबाधो युक्त इति विहितप्रतिषिद्धत्वाद्विकल्पः स्यात् । स च न युक्तः । विकल्पे हि पक्षे शास्त्रस्याप्रामाण्यं भवति । न ह्यनूयाजेषु येयजामहकरणे 'नानूयाजेष्वि' त्यस्य प्रामाण्यं सम्भवति, व्रीह्यनुष्ठानसमय इव यवशास्त्रस्य ।

द्विरदृष्टकल्पना च स्यात् । विधेर्हि एवं ज्ञायते-यदनूयाजेषु येयजामहकरणे कश्चनोपकारो भवतीति । निषेधाच्च तदकरणादिति ज्ञायते, अनृत-

---

प्रवृत्तस्य चात्यन्तबाधायोगात् विकल्पो दुर्वार इति वाच्यम् । सामान्यशास्त्रस्थजुहोतेः होमत्वसामान्यवाचित्वात् तेन च व्यक्तिलक्षणया तदवच्छिन्नव्यक्तिमात्रे आहवनीयं विदधता शक्यसम्बन्धमालोच्य तेन च निर्ज्ञातसम्बन्धसकलव्यक्तिलक्षणापूर्वकं पदहोमव्यक्तिर्यावता लक्ष्यते ततः पूर्वमेव प्राकरणिकेन पदवाक्येन विजातीयपदहोमव्यक्तिं लक्षयित्वा झटिति तत्र पदविधानात् तेनैव च पदहोमस्य नैराकांक्ष्येण पदहोमे आहवनीयशास्त्रप्रवृत्तेरेवाभावात् । अतश्चाहवनीयशास्त्रं वस्तुतः पदहोमातिरिक्तविषयमेव । एतद्वाक्यादर्शनजनिता भ्रान्तिः परमनेन वाक्येनापोद्यते इति वेदितव्यम् । प्रकृते तु न तथा भवितुमर्हतीत्याह—**निषेधशास्त्रस्येति** । नानूयाजेष्विति शास्त्रस्येत्यर्थः । नच अत्रापि निषेधसिद्ध्यर्थं प्राप्त्या प्रमारूपयैव भाव्यमिति न नियमः । निषेधशास्त्रानालोचने सामान्यशास्त्रजनितभ्रमात्मकप्राप्तिमादायापि तत्सम्भवादिति—वाच्यम् । सामान्यशास्त्रस्य प्रथममालोचने तत्सम्भवेऽपि विशेषशास्त्रस्य प्रथमालोचने प्रथममेव विशेषदर्शनसत्वात् सामान्यशास्त्रेण भ्रमानुपपत्तेः । अतोऽवश्यं निषेधसिध्यर्थं प्रमारूपाया एव प्राप्तेरावश्यकत्वेन तत्प्रापितपदार्थस्य निषेधे विकल्प एव पर्यवस्येदिति ।

ननु एवमपि कथं विकल्पः ? तुल्यबलयोरेव खलु विकल्पो दृष्टः, नात्र तदस्ति । निषेधशास्त्रस्य विशेषविषयत्वेन प्राबल्यात् , अत आह—**एवञ्चेति** । "दुर्बलोऽपि विधिस्तदधीनात्मलाभेन प्रतिषेधेन तुल्यबलो भवति" इति न्यायेनोभयोस्तुल्यबलत्वमिति भावः । अस्तु विकल्पः को दोषः ? अत आह—**विकल्प इति** । **शास्त्रस्येति** । यदा यत्किञ्चित् शास्त्रमुपादातुमारभते तदानीं तत्समानविषयकशास्त्रान्तरस्य परित्यागः कर्तव्यो भवति । स चोपादेयशास्त्रापेक्षया परित्याज्यशास्त्रेऽप्रामाण्यबुद्धिमन्तरा न सम्भवति । उभयत्रापि प्रामाण्यमीहमानो हि तयोर्बलाबलमनवधारयन् क्कुत्रापि प्रवर्तेतेति भावः । **व्रीहीति** । व्रीहिभिः पुरोडाशद्वारा यागानुष्ठानसमय इत्यर्थः । एतच्च निरूपितं विकल्पस्याष्टदोषदुष्टत्वनिरूपणावसरे ।

ननु शास्त्रस्य पाक्षिको बाधो नात्यन्तदोषावहः, पक्षे प्रामाण्यसम्भवादित्यत आह—**द्विरिति** । तामेवोपपादयति—**विधेरिति** । पञ्चमीविभक्तिरियम् । **उपकारो भवतीति** । अनारभ्याधीतस्यापि येयजामहस्य यागसामान्योद्देशेन विहितत्वात् विहितस्य

वदनाकर(१)णादिव दर्शपूर्णमासयोः। स चोपकारोऽदृष्टरूप इति द्विरदृष्टकल्पनाप्रसङ्गः। अतश्च विकल्पो न युक्तः। प्रतिषेधाश्रयणे च तदापत्तेर्न तदाश्रयणम्।

किन्तु नञः अनूयाजशब्देन सम्बन्धमाश्रित्य पर्युदास आश्रीयते, नञनूयाजशब्दाभ्यामनूयाजव्यतिरिक्तलक्षणात्-अनूयाजव्यतिरिक्तेषु येयजामहं करोतीति। अत्र च वाक्ये येयजामहः कर्तव्यतया न विधीयते, 'यजतिषु येयजामहं करोती'त्यनेनैव विहितत्वात्। किन्तु सामान्यशास्त्रविहितयेयजामहानुवादेन तस्यानूयाजव्यतिरिक्तविषयता विधीयते-यत् यजतिषु येयजामहं करोति तदनूयाजव्यतिरिक्तेष्विति। एवञ्च सामान्यशास्त्रस्य विशेषशास्त्रा(२)पेक्षिणः 'नानूयाजे' ष्वित्यनेनानूयाजव्यतिरिक्तविषयसमर्पणादनूयाज-

---

चोपकारजनकत्वनियमादिति भावः। तदकरणादित्यनन्तरं कश्चनोपकारो भवतीति शेषः। तत्र दृष्टान्तमाह—**अनृतेति**। यथा दर्शपूर्णमासप्रकरणगतेन **'नानृतं वदेत्'** इति वाक्येन दर्शपूर्णमासापूर्वोद्देशेनानृतवदनवर्जनविधानात् तादृशवर्जनेन दर्शपूर्णमासयोरुपकारस्सम्पाद्यत इत्यवगम्यते, एवमनूयाजोद्देशेन येयजामहाकरणविधानात् तेन तत्रोपकारस्सम्पाद्यत इत्यवगम्यत इत्यर्थः। एवञ्च क्रतुवैगुण्यपरिहारद्वारा क्रत्वपूर्वजनकत्वं क्रत्वर्थनिषेधानामित्युक्तं भवति। उक्तं हि वार्तिककृता—**"प्रकरणसामर्थ्याद्धि पुरुषगतमपूर्वसाधनत्वं लङ्घयित्वा अनृतं प्रतिषिद्धम्। अतस्तदतिक्रमे दर्शपूर्णमासापूर्वमेव वैगुण्यान्न स्यात्"** इति। **अदृष्टकल्पनाप्रसङ्ग इति**। अनूयाजकरणात् तदकरणाद्वा दृष्टस्य फलस्य कस्याप्यसम्भवात् उभयत्राप्यदृष्टस्यैव कल्पनावश्यंभावेनादृष्टद्वयकल्पनाप्रसङ्ग इत्यर्थः। **अतश्चेति**। शास्त्रस्य पक्षेऽप्रामाण्यापत्त्या अदृष्टद्वयकल्पनापत्त्या चेत्यर्थः। **तदापत्तेः** विकल्पापत्तेः। **तदाश्रयणं** प्रतिषेधाश्रयणम्।

तर्हि किमत्राश्रीयते? अत आह—**किन्त्विति**। नञोऽनूयाजसम्बन्धे कथं पर्युदासः? अत आह—**नञिति**। पर्युदासप्रकारमेवाह-**अनूयाजेति**। **ननु अत्रापि** येयजामहकर्तव्यताया एव बोधनात् को विशेषस्सामान्यवाक्यादित्यत आह—**अत्रेति**। नञ्घटितवाक्य इत्यर्थः। कर्तव्यताबोधकविधिप्रत्ययश्रवणात् कुतो न कर्तव्यताबोधनम्? अत आह—**यजतिष्विति**। सत्यपि विधिप्रत्ययश्रवणे विहितस्य पुनर्विधानायोगात् सोऽन्यपरतया नेय इति भावः। तर्हि किमनेन क्रियते? तदाह—**किन्त्विति**। **व्यतिरिक्तविषयतेति**। एवञ्चास्य वाक्यस्य येयजामहप्रवृत्तौ विषयसमर्पणमात्रं व्यापार इति भावः। तदेव स्पष्टयति—**यदिति**। कथमेतावता विकल्पपरिहारः? तं निरूपयति—**एवञ्चेति**। **विशेषशास्त्रापेक्षिण इति**। सामान्यविशेषशास्त्रयोरेकवाक्यतया विशेषशास्त्रगृहीतविषयव्यतिरिक्तविषय एव सामान्यशास्त्रप्रवृत्तेः, तदर्थं तस्य विशेषशास्त्रसापेक्षत्वादित्यर्थः। **नानूयाजेष्विति**। विशेषशास्त्रेणेतिशेषः। **विशेषापेक्षिण** इति क्वचित् पाठः। स यदा स्वीक्रियते तदाऽयमर्थः-सामान्यस्य विशेषेऽपर्यवसन्नस्य प्रवृत्त्यजनक-

---

१. दिवत्।		२. विशेषापेक्षिणः

व्यतिरिक्तेषु येयजामहः कर्तव्यतया प्राप्तः। अनूयाजेषु तु स न कर्तव्यतया प्राप्तो न वा प्रतिषिद्ध इति न विकल्पः। लक्षणया चानूयाजव्यतिरिक्तविषयसमर्पणा'न्नानूयाजेष्वि'ति वाक्यस्य नाप्रामाण्यम्। अतश्च पर्युदासाश्रयणे न किञ्चिद्बाधकम्।

तत्सिद्धं नानूयाजेष्विति वाक्ये विकल्पभयात् पर्युदासाश्रयणमिति।

ननु-पर्युदासाश्रयणे 'यजतिषु येयजामहं करोती'ति शास्त्रेण यागसामान्ये प्राप्तस्य येयजामहस्य 'नानूयाजेष्वि' त्यनेनानूयाजव्यतिरिक्ते सङ्कोचकल्पनात् पर्युदासस्योपसंहारादभेदः स्यात्। उपसंहारे हि सामान्ये प्राप्तस्य विशेषे सङ्कोचो भवति। यथा ''पुरोडाशं चतुर्धा करोती''ति पुरोडाशसामान्ये प्राप्तं चतुर्धाकरणं "आग्नेयं चतुर्धा करोती"त्याग्नेये सङ्कोच्यत इति चेत्—

( पर्युदासोपसंहारयोर्भेदनिरूपणम् )

न, तन्मात्रसङ्कोचार्थत्वादुपसंहारस्य, तदन्यमात्रसङ्कोचार्थत्वात् पर्युदासस्येति- केचित्।

---

त्वात् प्रवृत्तिसम्पादनार्थं सामान्यशास्त्रमेव विशेषमपेक्षते। तं च विशेषमनूयाजव्यतिरिक्तयागरूपं नानूयाजेष्विति समर्पयति। तावतैव च शास्त्रद्वयमपि चरितार्थम्। अनूयाजेषु च प्रापकनिषेधकयोरुभयोरप्यभावात् विकल्पप्रसक्तिरेव नास्तीत्यर्थः। एवञ्चानूयाजव्यतिरिक्तेषु विधिप्राप्तत्वात् येयजामहस्य नित्यं करणम्, अनूयाजेषु तु प्रापकप्रमाणाभावादेव नित्यमकरणमिति सिद्धम्। नचैवमपि पर्युदसनीयप्राप्तिसापेक्षत्वेन विकल्पो दुर्वार इति वाच्यम्। तत्र प्राप्तेस्तार्किकीं भ्रान्तिमादायाप्युपपत्तौ शास्त्रीयप्राप्त्यनपेक्षणात्। प्रतिषेधपक्षे तु शाब्दबोधसिध्यर्थं तात्त्विकी प्राप्तिरवश्यं वक्तव्येति वैषम्यम्। ननु सामान्यवाक्येनैव येयजामहविध्युपपत्तेः नास्य किञ्चित् प्रयोजनमित्यप्रामाण्यापत्तिरित्यत आह—लक्षणयेति। एतदभावे हि अविशेषात् सर्वेष्वपि यागेषु येयजामहः प्रवर्तेत, सति त्वस्मिन् अनूयाजव्यतिरिक्तरूपविषयसमर्पणात् अनूयाजेषु न प्रवृत्तिः। अतोऽनूयाजव्यावृत्तिरेव फलमिति नास्याप्रयोजनवत्त्वमिति भावः। उक्तमर्थं निगमयति-तत्सिद्धमिति। यद्यपि पर्युदासाश्रयणेऽपि लक्षणारूपो दोषो जागर्ति तथाप्यष्टदोषदुष्टविकल्पापेक्षया सोऽत्यन्तं लघुभूत एवेत्याशयः।

ननु सामान्यविधिना अनूयाजाननूयाजसाधारण्येन प्राप्तस्य येयजामहस्य पर्युदासेनानूयाजव्यतिरिक्तार्थत्वबोधने सामान्ये प्राप्तस्य विशेषे सङ्कोचनरूपोपसंहाररूपत्वं पर्युदासस्यापद्येतेति शङ्कते—नन्विति। पुरोडाशमिति। स्विष्टकृद्यागानन्तरमिडाभक्षणे कृते योऽवशिष्टः पुरोडाशः तं चतुर्धा विभजेदित्यर्थः। कर्मकरेभ्य ऋत्विग्भ्यश्चतुर्भ्यो दातुमयं विभागः। पुरोडाशसामान्य इति। दर्शपूर्णमासप्रकरणे हि आग्नेयः, अग्नीषोमीयः, असोमयाजिनस्सान्नाय्याभावादैन्द्राग्नः, इति पुरोडाशत्रयम्। तत्र त्रिष्वपि पुरोडाशेषु चतुर्धाकरणं प्राप्तमित्यर्थः।

( पर्युदासोपसंहारयोर्भेदनिरूपणम् )।

एवमाशङ्किते पर्युदासोपसंहारयोर्भेदं न्यायसुधाकृन्मतेन विवृणोति-तन्मात्रेति।

अन्ये तु-उपसंहारो नाम सामान्यतः प्राप्तस्य विशेषे सङ्कोचनरूपो व्यापारविशेषो विधेः । पर्युदासस्तु—

पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ।

इत्यभियुक्तोक्त्या प्रत्ययातिरिक्तेन धातुना नाम्ना वा नञः सम्बन्धः । अतश्चानयोस्तावत् स्वरूपतः स्पष्ट एव भेदः ।

एवं सत्यप्यभेद आशङ्क्येत, यदि यत्र पर्युदासस्तत्रावश्यमुपसंहारः स्यात् । न चैतदस्ति । 'नेक्षेतोद्यन्त'मित्यादौ सत्यपि तस्मिन्नुपसंहाराभावात् । नहि तत्राग्नेयचतुर्द्धाकरणमिव सामान्ये प्राप्तं किञ्चिद्विशेषे सङ्कोच्यते । पापक्षयोद्देशेनानीक्षणसंकल्पमात्रविधानात् ।

प्रकृतोदाहरणे तु यजिसामान्ये प्राप्तस्य येयजामहस्यानूयाजव्यतिरिक्तेषु सङ्कोचनात् यदि विधेरुपसंहारविधित्वं संभवति, नैतावता किञ्चिद्विरुध्यते । विध्यभावे हि कथं विधिकार्यमुपसंहारः पर्युदासेन क्रियत इति भवति विरोधः । न चात्र विधिर्नास्ति, नञोऽनूयाजपदसम्बन्धेन विधेर्विधायकत्वस्याव्याघातात् । अत्र हि पर्युदासोऽनूयाजव्यतिरिक्तविषयसमर्पकः आग्नेयपदवत् । उपसंहारकस्तु विधिरेव ।

न च अत्र तन्मात्रसङ्कोचाभावान्नोपसंहार इति वाच्यम् । तन्मात्रसङ्कोच इति कोऽर्थः ? आग्नेयमात्रे सङ्कोचो वा ? सामान्यप्राप्तस्य विशेषमात्रे सङ्कोचो

---

स्वस्मिन् स्वेतरस्मिंश्च प्राप्तं विषयं स्वेतरस्मात् व्यावर्त्य स्वमात्रेऽवस्थापनमुपसंहारः । तथैव प्राप्तं विषयं स्वस्मात् व्यावर्त्य स्वेतरस्मिन् व्यवस्थापनं पर्युदास इत्यर्थः । एवञ्च प्रकृते 'नानूयाजेष्वि'त्यनेन येयजामहं स्वस्मात् व्यावर्त्य स्वेतरस्मिन् व्यवस्थापनात् पर्युदास एव नोपसंहार इति भावः । **केचिदिति** । न्यायसुधाकृत इत्यर्थः ।

अत्रैव **पार्थसारथिमिश्रमतमाह-अन्ये त्विति** । **प्रत्ययातिरिक्तेनेति** । विधायकप्रत्ययो यो लिङादिस्तद्भिन्नेनेत्यर्थः । स च क्वचित् धातुः, यथा 'नेक्षेते' त्यादौ । क्वचित् नामापि, यथा प्रकृते, तेन यः **सम्बन्धः** अन्वयः प्रतियोगितासम्बन्धावच्छिन्नस्स इत्यर्थः । एवञ्च विधिव्यापार उपसंहारः, धात्वादिसम्बद्धनञ्व्यापारः पर्युदास इति तयोः स्पष्ट एव भेदः इत्याह-**अतश्चेति** ।

**ननु** सत्यपि बोधकभेदे फले विशेषाभावात् किमर्थं तयोर्भेद आश्रीयते इत्यत आह—**एवमिति** । यदि उपसंहारः पर्युदाससमनियतः स्यात् तदानीं तयोरपृथक्भावेनाभेद आशङ्क्येतापीत्यर्थः । **तस्मिन्** पर्युदासे । **सङ्कल्पमात्रेति** । मात्रपदेनोपसंहारव्यावृत्तिः । यद्येवं तर्हि प्रकृते कथमुभयोस्सामानाधिकरण्यम् ? अत आह-**प्रकृतेति** । **विरुध्यत इति** । विधिकार्यस्योपसंहारस्य तेनैव करणात् नामसमभिव्याहृतनञ्कार्यस्य च पर्युदासेन करणात् न फलैक्यादिरूपो विरोध इति भावः । विरोधाभावमेवोपपादयति—**विध्यभाव इति** । **आग्नेयपदवदिति** । यथा चाग्नेयपदं स्वार्थरूपं विशेषं समर्पयति, एवं '**नानूयाजेष्वि**'तिपदं स्वातिरिक्तरूपं विशेषं समर्पयतीत्यर्थः ।

तन्मात्रसङ्कोचनमेवोपसंहारं मन्वानश्शङ्कते—**न चेति** । **अत्र** नानूयाजेष्वित्यत्र । तमिमं पक्षं विकल्प्य दूषयति— **तन्मात्रेति** । तन्मात्रेत्यत्र तच्छब्दः प्रकृतोदाहरणस्था-

वा ? आद्ये अनारभ्याधीतसाप्तदश्यस्य मित्रविन्दादिप्रकरणस्थेन वाक्येनोपसंहारो न स्यात्, आग्नेये सङ्कोचाभावात्। द्वितीये चतुर्धाकरणस्य पुरोडाशमात्रे प्राप्तस्याग्नेये सङ्कोचवदनूयाजाननूयाजसाधारण्येन प्राप्तस्याननूयाजेषु सङ्कोचादुपसंहारः स्यादेव।

एतावांस्तु विशेषः-आग्नेयादिवाक्येषु आग्नेयादयो विशेषाः स्वपदोपस्थापिताः प्रकृते तु पर्युदासेन तस्योपस्थितिरिति। उपसंहारन्यायस्त्वविशिष्ट एव।

यच्च तदन्यमात्रसङ्कोचनार्थत्वात्पर्युदासस्येति। तन्न, 'नेक्षेते'त्यत्र सत्यपि पर्युदासे सङ्कोचाभावात्। नह्यत्र सामान्ये प्राप्तं तदन्यमात्रे सङ्कोच्यते, संकल्पमात्रविधानादित्युक्तमित्यास्तां तावत्। तत्सिद्धं 'नानूयाजेष्वि'त्यत्र विकल्पप्रसक्त्या पर्युदासाश्रयणमिति।

यत्र तु स आश्रयितुं न शक्यते तत्र तत्प्रसक्तावपि निषेध एवाश्रीयते, यथा-'नातिरात्रे षोडशिनं गृह्णाती'त्यत्र। (१)अत्र हि "अतिरात्रे षोडशिनं

ग्नेयमात्रपरामर्शकः? उत सर्वोदाहरणगतान् सर्वानपि विशेषान् परामृशति? इति संशयपदार्थः। आद्य इति। तन्मात्र इति तच्छब्देनाग्नेयव्यक्तिमात्रमादाय तत्र लक्षणसमन्वयकरणपक्ष इत्यर्थः। साप्तदश्यस्येतिदर्शपूर्णमासीयसामिधेनीगतसंख्याविशेषस्य पूर्वविचारितस्य परामर्शः। मित्रविन्दापदार्थोऽपि पूर्वमुक्तः। द्वितीय इति। सामान्यतः प्राप्तस्य विशेषे सङ्कोचनरूपे द्वितीयस्मिन् पक्ष इत्यर्थः। स्यादेवेति। सामान्यप्राप्तस्य विशेषे सङ्कोचनरूपस्योपसंहारलक्षणस्य तत्र सत्वादिति भावः।

यद्येवं 'आग्नेयं चतुर्धा करोती'ति 'नानूयाजे'ष्वित्यनेन तुल्यमेव, तत्राह— एतावानिति। एवं 'नानूयाजेष्वि'त्यत्रोपसंहारास्तितां प्रसाध्य परोक्तं पर्युदासलक्षणं खण्डयति—यच्चेति। प्रकृतमुपसंहरति—तत्सिद्धमिति।

ननु एतावता लक्षणापादकतया निषेधापेक्षया गुरुभूतोऽपि पर्युदासः विकल्पप्रसक्त्यैवाश्रित इत्युक्तं भवति। यत्र तु निषेधाश्रवणे विकल्पः प्रसज्यते, पर्युदासस्तु नाश्रयितुं शक्यते, तत्र का गतिरित्याशङ्कायामाह—यत्र त्विति। सः पर्युदासः। तत्प्रसक्तावपि विकल्पप्रसक्तावपि। नातिरात्र इति। अतिरात्रसंस्थाके ज्योतिष्टोमे षोडशिसंज्ञकं ग्रहं गृह्णीयादित्यर्थः। अत्रेयं परिस्थितिः—ज्योतिष्टोमो नाम सोमयागः। तस्य चतस्रस्संस्थाः—अग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रश्चेति। संस्था नाम क्रतुप्रयोगवृत्तिस्तोत्रोपरमः। स्तोत्रं नाम प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानमुद्गातृगणेन क्रियमाणमित्युक्तम्। एवञ्च येन स्तोत्रेण क्रतुप्रयोगस्समाप्यते तेनैव स्तोत्रेण सा संस्था व्यपदिश्यते। ज्योतिष्टोमे चाग्निष्टोमसंस्थाकेऽग्निष्टोमस्तोत्रमन्त्यम्। तदुपरि न स्तोत्रमस्ति। उक्थ्ये चाग्निष्टोमस्तोत्रानन्तरमुक्थ्यस्तोत्रम्। तदेव च तत्रान्त्यम्। षोडशिनि चोक्थ्यानन्तरं षोडशिस्तोत्रम्। तदेव च तत्रान्त्यम्। अतिरात्रे च षोडशिस्तोत्रानन्तरं त्रयो रात्रिपर्यायाः स्तोत्रविशेषाः, आश्विनस्तोत्रं च। रात्रिमतीत्य समाप्यत इति तस्य

१. नह्यतिरात्रे।

गृह्णाती'ति शास्त्रप्राप्तमतिरात्रे षोडशिग्रहणं प्रतिषिध्यत इति विहितप्रतिषिद्धत्वाद्विकल्पप्रसक्तावपि पर्युदासो (१) नाश्रीयते, अशक्यत्वात्। यदि ह्यत्र नञः षोडशिपदेन सम्बन्धः स्वीक्रियेत तदाऽतिरात्रे षोडशिव्यतिरिक्तं गृह्णातीति वाक्यार्थः स्यात्, तत्र चा'तिरात्रे षोडशिनं गृह्णाती'ति प्रत्यक्षविधिविरोधः। अत एवातिरात्रपदेन न नञः सम्बन्धः, 'अतिरात्रे षोडशिनं गृह्णाती'ति प्रत्यक्षविधिविरोधात्।

अतश्चात्र पर्युदासस्यानुपपत्तेर्निषेध एव स्वीक्रियते, विकल्पोऽपि स्वीक्रियते। अनन्यगतेः। अतश्चैतत्सिद्धम्-यत्र 'तस्य व्रत'मित्याद्युपक्रमः विकल्पप्रसक्तिश्च नास्ति तत्र प्रतिषेधः, यथा न कलञ्जं भक्षयेदिति, यत्र वा विकल्पप्रसक्तावपि पर्युदास आश्रयितुं न शक्यते तत्र प्रतिषेधः, यथा नातिरात्रे षोडशिनं गृह्णातीति।

एतावांस्तु विशेषः-यत्र विकल्पापादकः प्रतिषेधः, तत्र प्रतिषिध्यमानस्य

---

व्युत्पत्तिः। याश्चान्यास्तिस्रस्संस्थाः अत्यग्निष्टोमवाजपेयाप्तोर्यामरूपाः ता अप्यत्रैवान्तर्भूताः। यत्राग्निष्टोमोत्तरं उक्थ्यस्तोत्राण्यकृत्वा षोडशिस्तोत्रं क्रियते साग्निष्टोमसंस्थैवात्यग्निष्टोमपदवाच्या। यथावस्थितषोडश्युत्तरं यत्र वाजपेयाख्यं स्तोत्रं क्रियते सा वाजपेयसंस्था। यत्रातिरात्रे चतुर्थो रात्रिपर्यायो वर्धते साऽप्तोर्यामसंस्था। तत्र चाग्निष्टोमसंस्थाया नित्यत्वं काम्यत्वं च संयोगपृथक्त्वन्यायात्। अन्यास्तूक्थ्यादयः केवलं काम्याः। अत्राग्निष्टोमादिशब्दानां प्रचुरप्रयोगात् तत्तत्संस्थास्वेव शक्तिः, तादृशसंस्थावति ज्योतिष्टोमे निरूढलक्षणा, तद्वति क्रत्वन्तरे च साम्प्रतिकी, ग्रहणे स्तोत्रे च गौणीति। एवञ्च प्रकृते अतिरात्रशब्देन तत्संस्थाको ज्योतिष्टोमोऽभिधीयते। षोडशिपदेन च षोडशिग्रह इति बोध्यम्।

पर्युदासाश्रयणाशक्यतामेव विवृणोति-अत्र हीति। नातिरात्र इति वाक्य इत्यर्थः। नन्वत्र षोडशिपदेन नञस्सम्बन्धमङ्गीकृत्य नानूयाजेष्वितिवत् पर्युदासाङ्गीकरणे को दोषः? अत आह-यदीति। अत इति। उपपादितरीत्येत्यर्थः। अत्र नातिरात्र इति वाक्ये। एवञ्च पूर्वोक्तयोः पर्युदासहेत्वोरभावे, विकल्पप्रसक्तावपि पर्युदासाश्रयणाशक्यत्वे च, निषेध एवेति सिद्धं निगमयति-अतश्चेति। न कलञ्जमिति। कलञ्जं रक्तलशुनम्, तन्न भक्षयेदित्यर्थः। यत्त्वत्र 'विषदिग्धबाणहतमृगमांसं कलञ्जमित्युच्यते' इति कैश्चित् कलञ्जपदं व्याख्यातं प्रमाणीकृतञ्च निघण्टुवाक्यमपि, तच्चिन्त्यमेव; आपस्तम्बधर्मसूत्रे "कलञ्जपलाण्डुपारीरकाः" इति सूत्रस्थकलञ्जपदस्य कलञ्जं, रक्तलशुनं, इत्येव हरदत्तेन व्याख्यातत्वात्। वीरमित्रोदये चाह्निकप्रकाशे अभक्ष्यनिरूपणप्रकरणे पूर्वोक्तमेवापस्तम्बसूत्रमुदाहृत्य कलञ्जं रक्तलशुनं इत्येवोक्तत्वात, विषदिग्धबाणहतमृगमांसस्य विषसंसृष्टत्वेन विषसंपृक्तान्नवत् पुरुषस्य स्वत एव तत्रानिष्टसाधनताज्ञानात् प्रवृत्तेरेवानुदयेन निषेधवैयर्थ्यात्।

यद्येवं कलञ्जभक्षणनिषेधषोडशिग्रहणनिषेधयोस्साम्यं तर्हि अतिरात्राधिकरणकषोडशिग्रहणस्याप्यनर्थहेतुतापत्तौ कदाचिदपि तत्र पुरुषप्रवृत्तेरनुदयात् तद्विधिवैयर्थ्यापत्तिरित्यत आह-एतावानिति। विकल्पापादक इति। यत्र विधिनिषेधयोरेकार्थत्वं

---

१. दास श्रा।

नानर्थहेतुत्वम् , उभयोरपि विधिप्रतिषेधयोः क्रत्वर्थत्वात् । यत्र तु न विकल्पः, प्राप्तिश्च रागतः, प्रतिषेधश्च पुरुषार्थः, तत्र निषिध्यमानस्यानर्थहेतुत्वम् , यथा-कलञ्जभक्षणस्य ।

'दीक्षितो न ददाति, न जुहोती'त्यादिषु तु दानहोमादीनां शास्त्रप्राप्तावपि पुरुषार्थत्वेन प्राप्तत्वात् क्रत्वर्थत्वेन च प्रतिषेधात् तुल्यार्थत्वाभावेन विकल्पाप्रसक्तावपि न तेषामनर्थहेतुत्वम् , रागतः प्राप्त्यभावात् । रागतः प्राप्तस्यापि क्रत्वर्थत्वेन प्रतिषेधे तदनुष्ठानात् क्रतोर्वैगुण्यम् , नानर्थोत्पत्तिः, यथा-स्त्र्यभ्युपगमनादिप्रतिषेधे । रागतः प्राप्तस्य पुरुषार्थत्वेन प्रतिषेधे

---

तत्रेत्यर्थः । अन्यथा निषेधस्य सामान्यविषयत्वे विधेश्च विशेषविषयत्वे तत्र विकल्पो न स्यात् , यथा 'न हिंस्यात् सर्वा भूतानि' 'अग्नीषोमीयं पशुमालभेते'त्यत्र न विकल्प इति भावः । विधेस्सामान्यविषयत्वे निषेधस्य विशेषविषयत्वे तु विशेषस्थलेऽपि निषेधसिध्यर्थं प्राप्तेरावश्यकतया विकल्पो भवत्येव, यथा "न तौ पशौ करोति" इत्यपि हृदयम् । यत्र तु तुल्यार्थतायामपि तुल्यबलत्वं नास्ति तत्र निषेध्यस्यानिष्टजनकतास्त्येवेत्याह-यत्र त्विति । पुरुषार्थ इति । पुरुषनिष्ठप्रत्यवायपरिहारोद्देश्यकप्रवृत्तिमत्त्वं निषेधानां पुरुषार्थत्वम् । अनर्थहेतुत्वमिति । नरकादिरूपानिष्टजनकत्वमित्यर्थः । एवं प्रतिषेधस्वीकारेऽपि यत्र विकल्पाप्रसक्तिः तत्रापि प्रतिषेधाश्रयणम् , यथोक्तं पार्थसारथिमिश्रैः-यदा च प्रतिषेधपक्षेऽप्यविकल्पः, तदा श्रुत्यर्थलिप्सया प्रकरणानुजिघृक्षया च प्रतिषेधत्वमेव न्याय्यमिति ।

एवं रागतः प्राप्तानां पुरुषार्थतया निषेधे तेषामनर्थहेतुतामुक्त्वा इदानीं पुरुषार्थतया प्राप्तानां क्रत्वर्थतया निषेधे न तत्रानर्थहेतुतेत्याह-दीक्षित इति । सौमिकीं दीक्षां प्राप्तो यजमानः यावद्दीक्षाविमोकं पुरुषार्थदानानि(१) क्रतुमध्यपतितानि न कुर्यात् , एवं पुरुषार्थहोमानग्निहोत्रादीन् न कुर्यादित्यर्थः । पुरुषार्थत्वेनेति । स्वयंप्रार्थितवृत्त्युद्देश्यतानिरूपितविधेयताकत्वं पुरुषार्थत्वम् , स्वयंप्रार्थितभिन्नवृत्त्युद्देश्यतानिरूपितविधेयताकत्वं च क्रत्वर्थमिति तयोर्लक्षणम् । अत्र चोद्देश्यताविधेयते स्वरूपसम्बन्धरूपविषयताविशेषरूपे । न तु साध्यत्वानुष्ठेयत्वरूपे । एवञ्चेदं लक्षणं विधिनिषेधस्थलयोरुभयत्रापि सङ्गतं भवतीति बोध्यम् । तुल्यार्थत्वाभावेन एकार्थत्वाभावेन । तेषां दानहोमादीनाम् । कुतो नानर्थहेतुत्वम् ? अत आह—रागेति । अनिष्टजनकीभूते व्यापारे रागेण तदभाववत्ताभ्रमसम्पादनद्वारा प्रवृत्तिजननेऽपि शास्त्रेण तथा कर्तुमशक्यत्वादिति भावः । स्त्रीति । स्त्र्यभ्युपगमनं च पुरुषमात्रस्य रागतः प्राप्तम् । दर्शपूर्णमासप्रकरणे च 'न स्त्रियमुपेयात्' इति तस्य निषेधः क्रियते । एवञ्च रागतः प्राप्तस्य तस्य क्रत्वर्थतया निषेधात् क्रतुमध्ये तदनुष्ठाने क्रतोर्वैगुण्यं, न तु पुरुषः प्रत्यवेयादिति भावः । एवं रागतः प्राप्तस्य पुरुषार्थतया निषेधे क्रतुमध्ये तादृशनिषेध्यानुष्ठानेऽपि न क्रतोस्तेन वैगुण्यम् ,

---

१. यत्त्वत्र महामहोपाध्यायाभ्यङ्करवासुदेवशास्त्रिमहोदयैः न्यायप्रकाशव्याख्यायां प्रभाख्यायां प्रसङ्गात् यज्ञाङ्गं दक्षिणादानं तु दीक्षासमाप्त्यनन्तरं क्रियते इत्युक्तम् । तदनवधानात् । सुत्यादिने माध्यन्दिनसवन एव दक्षिणादानविधानात् अवभृथान्तरमेव च दीक्षासमाप्तेः ग्रन्थेषूक्तत्वाच्च ।

निषिध्यमानस्यानर्थहेतुत्वमिति दिक्। तत्सिद्धं निषेधानां पुरुषार्थानुबन्धित्वम्।

एवं सर्वस्यापि वेदस्य पुरुषार्थानुबन्धित्वम्।

प्रकृतमनुसरामः। तदेवं यथा विध्यादीनामध्ययनविध्युपात्तानां नानर्थक्यम्, एवमर्थवादानामपि तदुपात्तत्वेनानर्थक्यानुपपत्तेः स्वार्थप्रतिपादने च प्रयोजनाभावाल्लक्षणया प्रयोजनवदर्थपर्यवसानं वक्तव्यम्।

( अर्थवादनिरूपणम् )

ते चार्थवादा द्विविधाः—विधिशेषा निषेधशेषाश्च। तत्र "वायव्यं श्वेतमालभेते"त्यादिविधिशेषाणां "वायुर्वै क्षेपिष्ठा देवते"त्यादीनामर्थवादानां विधेयार्थस्तावकतयार्थवत्त्वम्। "बर्हिषि रजतं न देय"मित्यादिनिषेधशेषाणां

---

तस्य यथाचोदनं सिद्धत्वात्, पुरुषस्तु परं प्रत्यवैतीत्याह—रागत इति। उक्तं हि वार्तिके-"यो नाम क्रतुमध्यस्थः कलञ्जादीनि भक्षयेत्।

न क्रतोस्तस्य वैगुण्यं यथाचोदितसिद्धितः" ॥

इति, "यदा दर्शपूर्णमासस्थोऽपि तदतिक्रमं करोति तदा बाह्यातिक्रमवदस्य स्वयं प्रत्यवायमात्रं स्यात् न कर्मफलासम्बन्धः। न हि शुद्धपुरुषधर्मैः क्रतवः प्रत्यवयन्ति" इति च। अत्र च मूले निषिध्यमानस्यानर्थहेतुत्वमित्यनन्तरं न तु क्रतोर्वैगुण्यमिति पूरणीयम्।

उपक्रान्तां निषेधविषयिणीं कथामुपसंहरति-तदिति। एवमिति। विधीनामंशत्रयविशिष्टभावनाविधायकत्वेन, अर्थवादानां विधेयप्राशस्त्यसमर्पकत्वेन मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वेन, नामधेयानां विधेयार्थपरिच्छेदकतया, निषेधानां अनिष्टजनकीभूतात् कर्मणो निवर्तकत्वेनेत्येवंप्रकारेणेत्यर्थः। पुरुषार्थानुबन्धित्वमिति। पुरुषार्थः फलं स्वर्गादि, अनिष्टपरिहारो वा, तत्सम्बन्धित्वमित्यर्थः।

प्रकृतमिति। एतावता विधिमन्त्रनामधेयनिषेधानां प्रयोजनवदर्थपर्यवसायित्वं निरूपितम्। अर्थवादानां तु तदवशिष्टम्, तन्निरूपणमेव प्रकृतम्, तदेव निरूपयाम इत्यर्थः। तदेव स्पष्टयति—तदेवमिति। विध्यादीनां विधिमन्त्रनामधेयनिषेधानाम्। तदुपात्तत्वेन अध्ययनविध्युपात्तत्वेन। मास्त्वानर्थक्यम्, तावता लक्षणायां किं प्रमाणम्? स्वार्थप्रतिपादनेनैव तेषां कृतार्थत्वात्, अत आह—स्वार्थेति। स्वशक्यार्थप्रतिपादन इत्यर्थः। प्रयोजनाभावादिति। ततः प्रवृत्तिनिवृत्त्योरनुदयादिति भावः।

( अर्थवादनिरूपणम् )

अर्थवादान् विभजते—ते चेति। के विधिशेषाः? के वा निषेधशेषाः? तानुपपादयति-तत्रेति। वायव्यमिति। अत्रालभतिधातुर्लक्षणया यागपरः, द्वितीया च तृतीयार्थे। वायुदेवताकेन श्वेतगुणकपशुद्रव्येण यागेन भूतिमैश्वर्यं भावयेदिति वाक्यार्थः। वायुर्वा इति। वैशब्दः प्रसिद्धौ, वायुः क्षेपिष्ठा क्षिप्रगामिनी देवता खलु। यजमानः स्वेन हविषा वायुसमीपं गच्छति चेत् वायुमाराधयति चेदिति यावत्। स वायुः एनं यजमानं भूतिं प्रापयत्येवेत्यर्थः। अर्थवत्त्वमिति। प्रयोजनवत्त्वमित्यर्थः। निषेधशेषार्थवादमुदाहरति-बर्हिषीति। बर्हिश्शब्देन तद्विशिष्टो यागो लक्ष्यते। बर्हिषि यागे रजतं दक्षिणात्वेन न

'सोऽरोदी दित्यादीनामर्थवादानां तु निषेध्यनिन्दकतयेति । (१) अतश्च लक्षणया प्राशस्त्यमर्थवादैर्बोध्यते, तच्च प्राशस्त्यज्ञानं शब्दभावनायामिति-कर्तव्यतात्वेन संबध्यते ।

(२) परमप्रकृतम्—तत्सिद्धं वक्ष्यमाणार्थभावनाभाव्यिका लिङादिज्ञान-करणिका प्राशस्त्यज्ञानेतिकर्तव्यताका शाब्दी भावना लिङ्त्वांशेनोच्यत इति ।

( शाब्दीभावनानिरूपणम् )

ननु-केयं शाब्दी भावना ? उच्यते—पुरुषप्रवृत्त्यनुकूलो व्यापारविशेषः । स एव (३) विध्यर्थः । लिङादिश्रवणे अयं मां प्रवर्तयतीति नियमेन प्रतीतेः ।

---

देयमित्यर्थः । अत्र 'बर्हिषी'ति निषेधवाक्यम्, 'सोऽरोदी'दित्यर्थवादवाक्यमिति विवेक्तव्यम् । सः अग्निः अरोदीत् रुदितवानित्यर्थः । सन्दर्भशुद्धयेऽथ कथेयमत्र लिख्यते तैत्तिरीयसंहितोक्ता-पुरा कदाचित् देवासुराणां युद्धं प्रावर्तत । तत्र युद्धार्थं गच्छन्तो देवाः स्वीयमनर्घं रमणीयं च वस्तुजातमग्निसमीपेऽस्थापयन् यदि कदाचिदस्मानसुराः पराजयेयुः तदिदमस्माकं लोकयात्रार्थं भविष्यतीति । दृष्ट्वा च तदतिसुन्दरममूल्यं च वस्तुजातं लोभाकृष्टचित्तोऽग्निः तत् गृहीत्वा पलायत । ते च देवा असुरान् जित्वा प्रतिनिवृत्ताः यदा पलायितमग्निमवागच्छन् तदा तमन्विष्य तत् सर्वमपि धनं बलादाच्छिन्दन् । तादृशधनवियोगजं दुःखमसहमानोऽग्निररुदत् । रुदतस्तस्य नेत्राभ्यामपतन्नश्रुबिन्दवः । त एव घनीभूता रजतत्वमापन्नाः । निषेध्यनिन्दकतयेत्यनन्तरम् अर्थवत्त्वमित्यनुषञ्जनीयम् । एतादृशे स्वार्थे कस्यापि प्रयोजनस्याभावात् निषेध्यस्य रजतदानस्य निन्दायामेव तात्पर्यमस्यार्थवादस्य वक्तव्यम्–यत् रजतदानं तदत्यन्तं निन्दितमिति । तेन च प्रयोजनवत्त्वं सिध्यतीत्यर्थः । अतश्चेति चकारेण अप्राशस्त्यं, तच्चेति चकारेण अप्राशस्त्यज्ञानं च परिगृह्येते । एवं च प्रशंसार्थवादैः प्राशस्त्यम्, निन्दार्थवादैरप्राशस्त्यं चावबोध्येते इति फलितम् । सम्बध्यत इति । अत्र प्राशस्त्याप्राशस्त्ययोः शब्दप्रतिपाद्यत्वेऽपि तद्ज्ञानस्य तत्त्वाभावेनाशाब्दत्वात् न शाब्दबोधेऽन्वयः । किन्तु वस्तुत एवेतिकर्तव्यतात्वमिति नव्याः ।

ग्रन्थारम्भे कृतं परमप्रकृतं शाब्दीभावनाया अंशत्रयनिरूपणमुपसंहर्तुं तत् ज्ञापयति–परमेति । तदेवोपसंहरति—तत्सिद्धमिति ।

( शाब्दीभावनानिरूपणम् )

एवं प्रतिज्ञातं परिसमाप्य तावतैव ग्रन्थमिमं समापयितुकामोऽपि भावनास्वरूपनिरूपणमवशिष्टं मन्वानः तदनिरूपणे च ग्रन्थस्य न्यूनतामाशङ्कमानः तन्निरूपणमारभमाणः पूर्वोपस्थितां प्रधानभूतां च शाब्दीभावनां प्रथमतो निरूपयितुं शब्दभावनास्वरूपं पृच्छति–नन्विति । एवं पृष्टे न्यायसुधाकृन्मतेन समाधत्ते—उच्यत इति । विध्यर्थः विधि-

---

१. "अतश्च लक्षणया प्राशस्त्यमप्राशस्त्यं च स्वसन्निधिपठितविधिनिषेधापेक्षितत्वात् स्वार्थप्रतिपादने प्रयोजनमलभमानैरर्थवादैर्बोध्यते" इति क्वचित्पाठः । परं स न ग्रन्थकृदभिमत इति भाति ।

२. एतच्च क्वचित् मुद्रितपुस्तके नास्ति । ३. विविधं लिङर्थभूतं विधिस्वरूपं शास्त्रकारैरेवं निरूपितम्—

(१) वैयाकरणेषु–विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनारूपाः षडर्था लिङः इति भगवान्पाणिनिः ।

(२) विध्यादिषु चतुर्ष्वनुगतं प्रवर्तनात्वम्, संप्रश्नप्रार्थने च लिङर्थ इति वाक्यपदीयकाराः ।

यत्तु इष्टसाधनत्वं (१) विध्यर्थ इति, तन्न। तथा सति इष्टसाधनमितिशब्दस्य विधिशब्दः पर्यायः स्यात्। न च पर्यायत्वं युज्यते। सन्ध्योपासनं ते इष्टसाधनम्, तस्मात्तत् त्वं कुर्विति सह प्रयोगात्, पर्यायाणां च सह प्रयोगाभावात्। अतश्च व्यापारविशेष एव विध्यर्थः। स च लोके पुरुषनिष्ठोऽभिप्रायविशेषः। वेदे तु पुरुषाभावाच्छब्दनिष्ठ एव प्रेरणापरपर्याय इत्युक्तम्।

---

बोधकलिङाद्यर्थः। अयं लिङुच्चारयिता। इष्टसाधनत्वस्य लिङर्थत्वं प्रसङ्गात् पूर्वं निरस्तमपि प्रकरणशुद्धयर्थं पुनस्तदनूद्य निरस्यति—यत्त्विति। विधिशब्दः विधिबोधको लिङादिः। इष्टापत्तौ दोषमाह—सन्ध्योपासनमिति। सहप्रयोगादिति। सहप्रयोगदर्शनादित्यर्थः। इष्टसाधनमिति पदेन सह "कुरु" इति लोटः प्रयोगो दृश्यते। पर्यायत्वे च स न घटत इति भावः। अतश्च नेष्टसाधनत्वस्य लिङर्थत्वं युज्यते। प्रवर्तनाप्रेरणाविध्यादिपर्यायस्यैव व्यापारविशेषस्य तदित्यभ्युपगन्तव्यमित्याह—अतश्चेति। स च व्यापारविशेषश्च। सर्वत्र लोके प्रवर्तयितुराचार्यादेः 'अहमेनं प्रवर्तयामि' इत्यनुभवात् 'आचार्यप्रेरितोऽहं गामानयामि' इति व्यवहारबलाच्च प्रवर्तनायाः प्रवर्तयितृपुरुषनिष्ठत्वम्, गवानयनादौ कृते 'मदाज्ञामयं कृतवान्' इत्याज्ञप्तुर्व्यवहाराच्च तस्याभिप्रायविशेषत्वं चावगम्यत इति भावः। शब्दनिष्ठ एवेति। लिङादिरूपो यो विधायकशब्दः तद्वृत्तिरित्यर्थः। इत्युक्तमिति। ग्रन्थारम्भ इति शेषः।

---

(३) इष्टसाधनत्वमेव लिङर्थ इति ततोऽर्वाचीना वैयाकरणाः।

(४) नैयायिकेषु—इष्टसाधनत्वं बलवदनिष्टाजनकत्वं कृतिसाध्यत्वं चेति त्रितयमपि लिङर्थ[1] इति नैयायिकाः। तत्र विशेषणविशेष्यभावापन्नेषु त्रिष्वप्येकैव शक्तिरिति प्राचीनाः। तत्र पृथक्-पृथगेव शक्तित्रयमिति नवीनाः।

(५) कृतिसाध्यत्वमेव लिङर्थं इति रत्नकोशकृतः।

(६) लिङ्घटितवाक्योच्चारयितुरहमेनं प्रवर्तयामीत्यभिप्रायविशेषो लोके वेदे च लिङर्थ। इत्युदयनाचार्याः।

(७) वेदान्तिषु—वेदे भगवदाज्ञैव लिङर्थ इति श्रीभाष्यकाराः, तदनुयायिनस्सेश्वरमीमांसाकृदादयश्च।

(८) इष्टसाधनत्वमेव लिङर्थ इति सुरेश्वराचार्याः, तदनुसारिणश्चित्सुखाचार्यादयश्च।

(९) इष्टसाधनत्वं कृतिसाध्यत्वमित्युभयं लिङर्थ इति भामत्यां वाचस्पतिमिश्राः।

(१०) मीमांसकेषु—इष्टसाधनत्वमेव तत्त्वेन रूपेण लिङर्थ इति मण्डनमिश्राः।

(११) भाट्टेषु—तत्तद्धात्वर्थगतं कार्यत्वं लिङर्थ इति भाट्टेष्वप्येकं मतम्।

(१२) लिङादिशब्दगतस्यार्थप्रकाशनसामर्थ्यस्याऽभिधाख्यव्यापारस्य लिङर्थत्वमित्यप्येकदेशिमतम्।

(१३) इष्टसाधनत्वमेव प्रवर्तनात्वेन रूपेण लिङर्थ इति पार्थसारथिमिश्रप्रभृतयः।

(१४) इष्टसाधनत्वाद्यतिरिक्तः प्रवर्तनाख्योऽलौकिकः कश्चिद्धर्मविशेषो लिङादिवाच्य इति भट्टसोमेश्वरः खण्डदेवप्रभृतयश्च।

प्राभाकरेषु—अपूर्वापरपर्यायः कार्यात्मा नियोगो लिङर्थ इति प्राभाकराः। तत्र लोके कार्यत्वेन क्रियायाः, वेदे च नियोगस्य लिङर्थत्वमिति विवेकः॥

एतेषां स्फुटतया विवरणं पूज्यपादैः श्रीगुरुवर्यैरेव स्वकृते विधितत्त्वसङ्ग्रहाख्ये लघु कृतम्। तत् तत एवावगन्तव्यम्॥

१. लिङर्थः।

**ननु-लोके वा शब्दनिष्ठे प्रेरणापरपर्याये व्यापारे शब्दप्रयोगाभावेन शक्तिग्रहाभावात् कथं तस्य विधिशब्दात् (१) प्रतिपत्तिरिति चेत्—**

**सत्यमेतत्। तथापि बालस्तावत् स्तन्यदानादौ स्वकृतरोदनादिजनितमातृप्रवृत्तेः स्वाभिप्रायरूपप्रवर्तनाज्ञानजन्यत्वावधारणात् सविधिकप्रयोजकवाक्यश्रवणसमनन्तरभाविनीं प्रयोज्यवृद्धप्रवृत्तिमुपलभ्य तत्कारणत्वेन तस्य प्रवर्तनाज्ञानमनुमिमीते ।**

---

**ननु**—शक्तिग्रहस्य व्यवहारसाध्यत्वेन लौकिकलिङादेः पुरुषनिष्ठव्यापारवाचकत्वेनैव लोके प्रयोगात् तत्रैव शक्तिग्रहेण शब्दनिष्ठव्यापारवाचकतया अप्रयुक्तस्य तस्य तत्र शक्तिग्रहासम्भवात् उपायान्तरस्य च शक्तिग्राहकस्याभावात् कथं वैदिकलिङादितः प्रेरणापरपर्यायस्य शब्दनिष्ठव्यापारस्य प्रतीतिरिति शङ्कते-नन्विति ।

**सत्यमिति** । सत्यमित्यर्धाङ्गीकारे। लोके पुरुषनिष्ठव्यापार एव लिङादीनां प्रयोग इति यदुक्तं तदङ्गीक्रियत इत्यर्थः। नैतावता अलौकिके व्यापारे शक्तिग्रहो न सम्भवतीति युक्तमित्याह-**तथापीति** । तत्र शक्तिग्रहप्रकारं कथयिष्यन् तस्य लौकिकशक्तिग्रहपूर्वकत्वात् प्रथमं तावत् लोके शक्तिग्रहप्रकारमुपपादयति-**बालस्तावदिति** । यदा स्तनन्धयस्य बुभुक्षा सञ्जायते तदा स रोदिति। तच्छ्रुत्वा समनन्तरमेव च तन्माता तदभिप्रायरूपां प्रवर्तनां स्तन्यदानादिविषयिणीं ततो ज्ञात्वा स्तन्यदानादौ प्रवर्तते। एवं स्वरोदनसमनन्तरभाविनीं स्वमातृप्रवृत्तिं बहुशः पश्यन् बालः तत्र कारणं जिज्ञासमानः कारणान्तरानुपलब्ध्या अन्वयव्यतिरेकाभ्याञ्च स्वरोदनश्रवणानन्तरभाविस्वाभिप्रायरूपप्रवर्तनाज्ञानमेव तत्र कारणं कल्पयति। यदा च किञ्चिदिव प्रबुद्धो भवति, तदा गामानयेत्यादिसविधिकवाक्यमाचार्यादिरूपप्रयोजकवृद्धप्रयुक्तं श्रुत्वा तत्समनन्तरभाविनीं शिष्यादिरूपप्रयोज्यवृद्धप्रवृत्तिं गवानयनादिविषयिणीञ्चोपलभ्य तत्र च कारणं जिज्ञासमानः कारणान्तरानुपलब्ध्या लिङादिघटितवाक्यश्रवणजनितं प्रयोक्तृपुरुषाशयज्ञानमेव स्वमातृप्रवृत्तिदृष्टान्तेन कारणमध्यवस्यति। तत्रापि प्रयोक्त्रा बहूनां शब्दानां प्रयोगात् कस्य तेषु प्रवर्तनाबोधकत्वमिति जिज्ञासमानः लिङादिशब्दश्रवणानन्तरमेव प्रवृत्तेर्जायमानत्वात् अन्वयव्यतिरेकाभ्यां लिङादिविधिशब्द एव तादृशप्रवर्तनाया वाचक इत्यवधारयति। तादृश्याश्च प्रवर्तनाया इच्छारूपायाः पुरुषाशयासंस्पृष्टे वेदे असम्भवात् तद्विलक्षणं प्रेरणाविध्याद्यपरपर्यायं कञ्चन धर्मविशेषं लिङ्निष्ठत्वेन कल्पयति। अनेनैव पथा वैदिकलिङादिष्वपि शक्तिग्रहसम्भवात् न शक्तिग्रहाभावरूपो दोषः इति प्रकरणार्थः। **तत्कारणत्वेन** प्रयोज्यवृद्धप्रवृत्तिकारणत्वेन। **तस्य** प्रयोज्यवृद्धस्य। **प्रवर्तनाज्ञानं** प्रयोजकवृद्धनिष्ठस्य अयमत्र प्रवर्ततामित्याद्याकारकाशयविशेषस्य ज्ञानम्। **अनुमिमीत इति**। इयं प्रयोज्यवृद्धप्रवृत्तिः प्रवर्तनाज्ञानजन्या, लिङादिश्रवणानन्तरभावित्वात्, मदीयरोदनानन्तरभाविमन्मातृप्रवृत्तिवत्, इत्यनुमितेराकारो बोध्यः।

**ननु** प्रवृत्तित्वावच्छिन्नं न प्रेरणाज्ञानजन्यम्। भोजनादौ स्वत एवेष्टसाधनत्वादिबुद्ध्वा प्रवृत्तिदर्शनात् तत्र प्रेरणाज्ञानजन्यत्वाभावात्, प्रेरणोत्तरप्रवृत्तिस्थलेऽपि च इष्ट-

---

१. प्रतीतिरि० ।

यद्यपि भोजनादौ स्वप्रवृत्तेः समीहितसाधनताज्ञानपूर्वकत्वावधारणात् प्रयोज्यवृद्धप्रवृत्तेरपि तत्पूर्वकत्वाध्यवसानं युक्तम्, तथाऽप्यन्यप्रेरितप्रवृत्तौ प्रवर्तनाज्ञानजन्यत्वस्योक्तमातृप्रवृत्तौ दर्शनेन प्रयोज्यवृद्धप्रवृत्तेरप्यन्यप्रेरित-प्रवृत्तित्वात्तत्कारणत्वेन प्रवर्तनाज्ञानस्यैवाध्यवसानम्। तच्च प्रवर्तनाज्ञानम-न्वयव्यतिरेकाभ्यां प्रयोजकवाक्यजन्यमित्यवधारयति। तत्र चावापोद्वापाभ्यां प्रवर्तनायां विधिशक्तिमवधारयति। प्रवृत्त्यनुकूलो व्यापारः प्रवर्तना। स च प्रैषादिरूपो विविध इति प्रत्येकं व्यभिचारित्वाद्विधिशब्दवाच्यत्वानुपपत्तेः प्रवर्तना(१)सामान्यमेव विधिशब्दवाच्यमिति कल्पयति। एवं च विधि-श्रवणे प्रैषादिरूपस्य वक्त्रभिप्रायस्य प्रवर्तनात्वेन एकरूपेण प्रतीतिर्न विशेष-रूपेण, तथैव शक्तिग्रहात्। विशेषरूपेण तु प्रतीतिर्लक्षणयैव।

एवं च वैदिकलिङादिश्रवणेऽपि प्रवर्तनासामान्यमेव प्रतीयते। तत्र कोऽसौ व्यापारः? इत्यपेक्षायां प्रैषादिरूपस्य वक्त्रभिप्रायस्यापौरुषेये वेदे-ऽनुपपत्तेः शब्दनिष्ठ एव प्रेरणापरपर्यायः कश्चिद्व्यापार इति कल्प्यते। अतश्च शब्दनिष्ठ एव प्रेरणापरपर्यायो व्यापारः शाब्दी भावना। सैव च प्रवर्तना-त्वेन रूपेण विध्यर्थ इति। अयमेव चार्थः—

---

साधनताज्ञानाभावे प्रवृत्त्यदर्शनात्। अतश्च स्वतस्सिद्धप्रवृत्तिस्थले प्रेरणाजन्यत्वव्य-भिचारात् समीहितसाधनताज्ञानजन्यत्वस्य चोभयत्राव्यभिचारात् प्रवृत्तित्वावच्छिन्नस्य समीहितसाधनताज्ञानजन्यत्वमेव समुचितमङ्गीकर्तुम् न तु कस्याश्चित् प्रवृत्तेः समीहित-साधनताज्ञानजन्यत्वं, कस्याश्चिच्च प्रवर्तनाज्ञानजन्यत्वमिति वैरूप्याङ्गीकारो युक्त इत्या-शङ्कां निराकरिष्यन् प्रथमतस्तामनुवदति-यद्यपीत्यादिना युक्तमित्यन्तेन। सत्यं द्विवि-धास्ति लोके प्रवृत्तिः, सत्यं च समीहितसाधनतादि बुद्ध्वा पुरुषः प्रवर्तते तथापि यत्रा-न्यप्रेरणया प्रवृत्तिः तत्र आचार्यप्रेरितोऽहं गामानयामि, न स्वेच्छयेति व्यवहारदर्शनात् प्रेरणोत्तरप्रवृत्तित्वावच्छिन्नस्य प्रेरणाज्ञानजन्यत्वमेव वक्तुमुचितम्, उक्तमातृप्रवृत्तौ तथैव दर्शनात् इति समाधत्ते-तथापीति। एवं प्रवृत्तिकारणत्वेन प्रवर्तनाज्ञानेऽध्य-वसिते तत्कारणजिज्ञासायां तत्कारणाध्यवसानप्रकारमुपपादयति-तच्चेत्यादिना अवधा-रयतीत्यन्तेन। तत्रापि प्रवर्तनाविशेषेषु प्रैषसम्प्रश्नादिषु न शक्तिः, प्रैषस्थले सम्प्रश्ना-द्यभावात् सम्प्रश्नस्थले प्रैषाद्यभावाच्च तेषां परस्परं व्यभिचारेण सर्वानुगतप्रवर्तनात्वमेव शक्यतावच्छेदकमित्यवधारयतीत्याह-स चेति। लक्षणयैवेति। सामान्यवाचकस्य शब्दस्य विशेषबोधकत्वरूपाजहत्स्वार्थलक्षणयेत्यर्थः।

एवंप्रकारेण लोके लिङादेश्शक्तावधारितायां तेनैव न्यायेन वेदेऽपि शक्तिग्रहस्त्व-ध्यवसान इत्याह-एवञ्चेति। प्रवर्तनासामान्यमेवेति। यथा लोके लिङादिश्रवणे प्रवर्तनासामान्यस्य प्रतीतिः तथैव वेदेऽपीति नैतावत्पर्यन्तं लोकवेदयोर्भेद इति भावः। अनन्तरञ्च यथैव विशेषजिज्ञासायां तत्तत्प्रकरणाद्यनुगृहीतस्य लिङादेर्विशेषलक्षकत्वमध्य-वसीयते लोके, एवमेव वेदेऽपि विशेषजिज्ञासायां प्रैषादीनां तत्राभावात् शब्दनिष्ठधर्म-विशेषलक्षकत्वमध्यवसीयते इत्याह-तत्रेति। प्रवर्तनात्वेनेति। प्रवृत्त्यनुकूलव्यापार-

---

१. प्रवर्तनाख्यस्सा।

'अभिधाभावनामाहुरन्यामेव लिङादयः'

इति वार्तिकस्य। अभिधीयते अनेनेति व्युत्पत्त्या अभिधाशब्देन विधिशब्द उच्यते। तद्व्यापारात्मिका भावना लिङादिवाच्येति—(१) केचिदाहुः।

अन्ये तु—सत्यं प्रवर्तनासामान्यं विध्यर्थः, तथैव शक्तिग्रहात्। प्रवृत्त्यनुकूलो व्यापारः प्रवर्तना। अपौरुषेये च वेदे प्रैषादेरसंभवात् कश्चित् पुरुषप्रवृत्त्यनुकूलो व्यापारविशेषः कल्पनीयः। विधिशब्दाभिधेयप्रवर्तनासामान्यस्य विशेषमन्तरेणापर्यवसानात्। तत्र कोऽसौ व्यापारविशेषः? इत्यपेक्षायां धात्वर्थगतं समीहितसाधनत्वमेवेति कल्प्यते। तस्यापि प्रवृत्त्यनुकूलत्वात्।

---

त्वेनेत्यर्थः। अत्र च न प्रवृत्त्यनुकूलत्वं शक्यतावच्छेदककोटिप्रविष्टम्, गौरवात्, अन्यलभ्यत्वाच्च, प्रवृत्तेर्हि आख्यातेनैव लाभात्, अनुकूलत्वस्य च प्रयोजकत्वापरपर्यायस्य संसर्गबलेन लाभात्। अतो लाघवात् लोकवेदसाधारणं व्यापारत्वमेव शक्यतावच्छेदकम्। विशेषलाभस्तु तत्र तत्र समभिव्याहारादिनेत्यवगन्तव्यम्। नन्विदं 'अभिधाभावनामाहु'रित्यनेन वार्तिकेन विसंवदति, तेनाभिधासम्बन्धिन्या एव भावनायाः लिङ्वाच्यत्वप्रतिपादनात्, अतः कथं वार्तिकविरोधी पक्षोऽयमाद्रियतामित्यत आह-**अयमेवेति**। अविरोधितामेवोपपादयति-**अभिधीयत इति**। अनेनेति ब्रुवता कर्तृव्युत्पत्तिः करणव्युत्पत्तिर्वा प्रदर्शिता। एवञ्च अभिधायकत्वात् अभिधा विध्यादिशब्दः। तन्निष्ठा तद्व्यापारात्मिका भावना अभिधाभावना तां लिङादयः बोधयन्तीत्यर्थः फलितः। अस्मिन् मते अभिधाया भावना इति षष्ठीतत्पुरुषो विवक्षितः। **केचिदिति**। न्यायसुधाकृत्प्रभृतय इत्यर्थः।

तत्रैव पार्थसारथिमिश्रमतमुपवर्णयितुमारभते-**अन्ये त्विति**। आहुरित्यस्य प्रवदन्ति प्रवर्तनामित्यनन्तरं श्रुतेनेतिना सम्बन्धः। **सत्यमिति**। प्रवर्तनासामान्यस्य विध्यर्थत्वमस्माकमपीष्टमेवेति भावः। **तथैवेति**। एवञ्चानेकार्थत्वं कल्पितं न भवति। अन्यथा प्रेषणमध्येषणमभ्यनुज्ञानमिष्टसाधनत्वं चेति बहवोऽर्थाः लिङादेः कल्पयितव्याः। तथात्वे तेषां परस्परं व्यभिचारस्यानेकशक्तिकल्पनाप्रयुक्तगौरवस्य चास्माकमपि तुल्यत्वादिति भावः। **अपर्यवसानादिति**। 'निर्विशेषं न सामान्य'मिति न्यायेन सामान्यस्य विशेषे पर्यवसानमन्तरा अनिवृत्ताकाङ्क्षत्वात्, सामान्यस्य प्रवृत्तिविशेषाजनकत्वाच्चेति भावः। एतावदुभयोरपि पक्षे तुल्यम्, तत्र विशेषजिज्ञासायां तस्याः प्रेरणारूपत्वे तस्या अपि वैदिकवाक्यप्रतिपाद्यत्वासम्भवरूपदोषतादवस्थ्यात् तां परिहाय धात्वर्थगतं यदिष्टसाधनत्वं तस्यैव परं व्यापारविशेषत्वं कल्प्यते इत्याह-**तत्रेत्यादिना**। ननु कथं तस्य प्रवर्तनात्वम्? अत आह-**तस्यापीति**। प्रवर्तनात्वं च प्रवृत्त्यनुकूलत्वम्, तच्चात्रापि समीहितसाधनत्वेऽस्तीति भावः। ननु आचार्यादिरनिच्छन्तमपि शिष्यादिकं बलात् प्रवर्तयतीत्यनुभवसिद्धत्वात् तत्र समीहितसाधनताज्ञानमन्तरापि शिष्यादेः प्रवृत्तिदर्शनात् कथं प्रवृत्तित्वावच्छिन्नं प्रति समीहितसाधनतायाः कारणत्वमित्याशङ्कायामाह-**सर्वो-**

---

१. केचिदाचार्याः।

सर्वोऽपि हि समीहितसाधनतां ज्ञात्वा प्रवर्तते। अन्यप्रेरितोऽपि यदीष्टसाधनतां न जानाति तदा नैव प्रवर्तते।

स्वतन्त्रप्रेरणावादेऽपि तदाक्षिप्तसमीहितसाधनताज्ञानं स्वीक्रियत एव। अन्यथा विधेः प्रवर्तकत्वानुपपत्तेः। अतश्चावश्यकत्वात् समीहितसाधन-

---

ऽपि हीति। स्वतन्त्रप्रवृत्तिस्थले समीहितसाधनताज्ञानादेव प्रवर्तते इति निर्विवादम्। अन्यदीयप्रेरणानन्तरप्रवृत्तिस्थलेऽपि समीहितसाधनतां ज्ञात्वैव प्रवर्तते। यद्यपि तत्र स्वारसिकेच्छा न स्यात् तथापि आचार्यादिः स्वप्रवर्तनाबलात् तस्य समीहितसाधनताज्ञानमुत्पाद्यैव प्रवर्तयतीत्यनुभवसिद्धम्। एवञ्च तत्रापीष्टसाधनताज्ञानादेव प्रवर्तत इति प्रवृत्तित्वावच्छिन्नं प्रति समीहितसाधनताज्ञानस्य कारणत्वमुचितमेवेति भावः। उक्तं च मण्डनमिश्रैः—"प्रवृत्तिसमर्थो हि कश्चित् भावातिशयो व्यापाराभिधानः प्रवर्तना। सा च क्रियाणां अपेक्षितोपायतैव। न हि तथात्वमप्रतिपद्य तत्र प्रवर्तते कश्चित्। याप्याज्ञादिभ्यः प्रवृत्तिः सापि कथञ्चित् अपेक्षितनिबन्धनत्वमुपाश्रित्यैव" इति। "कर्तुरिष्टाभ्युपाये हि कर्तव्यमिति लोकधीः" इति च। प्रवृत्तिसमर्थः प्रवृत्तिजननसमर्थः। अपेक्षितोपायता इष्टसाधनता।

ननु सर्वत्र लिङादिशब्दश्रवणानन्तरमेव प्रवृत्तिदर्शनात् तस्याश्च कर्तव्यताप्रतिपत्तिपूर्वकत्वावगमात् प्रेरणाख्यस्यैव कस्यचित् व्यापारस्य समीहितसाधनतातिरिक्तस्य कर्तव्यताबुद्ध्युत्पादनद्वारा प्रवृत्तिहेतुत्वाभ्युपगमात् न तस्याः समीहितसाधनतारूपत्वाभ्युपगमे प्रमाणमस्ति इत्यत आह—स्वतन्त्रप्रेरणावादेऽपीति। पूर्वमुक्तो यः पक्षः प्रेरणायाः लिङर्थत्वाभ्युपगमरूपः तत्रापीत्यर्थः। तदाक्षिप्तेति। प्रेरणाख्यव्यापारस्य लिङर्थत्वमभ्युपगम्य तस्यैव प्रवृत्तिजनकत्वमभ्युपगच्छता भवतापि तत्र समीहितसाधनताज्ञानं स्वीक्रियत एव, परन्तु सा स्वस्याः प्रवर्तकत्वसिद्ध्यर्थं स्वविषययागादेः समीहितसाधनत्वमाक्षिपतीत्युच्यते भवता। सर्वथा तु इष्टसाधनताज्ञानमावश्यकमेव भवतोऽपीत्याशयः। मन्मते इष्टसाधनतानाक्षेपे को दोषः? इत्याक्षिपन्तं पूर्वपक्षिणं प्रत्याह—अन्यथेति। उक्तं च "हेतुमति च" इति सूत्रे महाभाष्ये "सर्व इमे स्वभूत्यर्थं प्रवर्तन्ते" इति। "कः प्रयोज्यस्य प्रेरणयार्थो यदभिप्रायेषु सज्जते" इति तत्सूत्रस्थभाष्येण णिजर्थप्रेरणाया अपि स्वातन्त्र्येणाप्रवर्तकत्वबोधानाच्च। एवञ्च मतद्वयेऽपि तस्या आवश्यकत्वात् तस्या एव विध्यर्थत्वकल्पनं युक्तमित्याह—अतश्चेति।

नन्वेवं समीहितसाधनत्वस्यैव लिङर्थत्वमभ्युपगम्य तज्ज्ञानस्यैव सर्वत्र प्रवृत्तिहेतुत्वाभ्युपगमे 'आचार्यप्रेरितोऽहं गामानयामि, न स्वतः' इति व्यवहारोच्छेदापत्तिः, न च तत्र प्रवृत्तिकारणीभूतेष्टसाधनताज्ञानजनकलिङुच्चारयितृत्वेनैवाचार्यादेः प्रवर्तकत्वव्यवहार इति वाच्यम्। तथात्वे राजप्रेरितपदातेः तादृशलिङुच्चारयितृत्वेन प्रवर्तकत्वापत्तेः। न चेष्टापत्तिः। तथात्वे 'राजप्रेरितोऽहं गामानयामि, न पदातिप्रेरितः' इति पदातेः प्रवर्तकत्वाभावव्यवहारानुपपत्तेः। अतः पूर्वोक्तव्यवहारसाधुत्वार्थं तत्र प्रेरणादेरेव विध्यर्थत्वमवश्यमभ्युपगन्तव्यमिति चेत्—न; तत्रापि तत्सम्पादनपरितोषितः आचार्यादिः मत्समीहितं साधयेत्, अहितं वा न विदध्यात् इति बुद्ध्यैव शिष्यादेः प्रवृत्तिदर्शनात्, अन्यथा

तैव प्रवर्तनात्वेन रूपेण विध्यर्थः। एवं च विधिशब्दस्यान्यनिष्ठव्यापारबोधकत्वं लोकसिद्धं सिद्धं भवति।

किञ्च शब्दे एको व्यापारः स्पन्दाद्यतिरिक्तः कल्पनीयः। तस्य च स्वप्रवृत्तौ पराधीनप्रवृत्तौ वा कारणत्वेनावक्लृप्तस्य प्रवर्तनात्वेन रूपेण ज्ञातस्य प्रवृत्त्यनुकूलत्वम्, शब्दस्य च परनिष्ठव्यापारज्ञापकत्वेन क्लृप्तस्य स्वनिष्ठव्यापारबोधकत्वम्, विधेश्च प्रवर्तकत्वनिर्वाहार्थं धात्वर्थस्य समीहितसाधनत्वमिति (१) कल्पनाद्वरमावश्यकस्यैव समीहितसाधनत्वस्य स्वप्रवृत्तिहेतुत्वेन क्लृप्तस्य प्रवर्तनात्वेन रूपेण विध्यर्थत्वकल्पनं लाघवात्, अन्यनिष्ठत्वाच्च।

लिङ्शतश्रवणेऽपि प्रवृत्तेरदर्शनात्। विधिशब्दस्येति। लोके तावत् शब्दानामन्यनिष्ठव्यापारबोधकत्वमेव व्यवहारसिद्धम्। 'देवदत्तः पचेत्' इत्यादौ लिङादिना प्रवर्तकपुरुषनिष्ठव्यापारस्यैव बोधनदर्शनात् लोकसिद्धमेव च परीक्षकैरनुसरणीयम्। अतश्च यदि समीहितसाधनतायाः लिङर्थत्वमङ्गीक्रियते तदानीं तस्याः यागादिनिष्ठत्वात् अन्यनिष्ठव्यापारबोधकता लिङस्सिध्येत्। प्रेरणाख्यव्यापारवाचित्वाभ्युपगमे तु तस्याः स्वनिष्ठत्वेन शब्दस्य स्वनिष्ठव्यापारवाचकत्वं लोकविरुद्धमभ्युपगतं स्यादिति भावः।

नन्वेवमपि अप्रसिद्धव्यापारकल्पनातो वरं क्लृप्तस्यैवाभिधाख्यस्य व्यापारस्य प्रवर्तनात्वकल्पनमित्यत आह—किञ्चेति। स्पन्दाद्यतिरिक्त इति। मीमांसकमते शब्दस्य विभुत्वेन तत्र स्पन्दादेर्निवेशासम्भवादिति भावः। उक्तं हि पार्थसारथिमिश्रैः–स्पन्दसमवायस्तु न सम्भवति। नचासावसमाभिश्शब्दस्येष्यते"–इति। "न हि शब्दस्य विभोरचेतनस्य स्पन्दः प्रयत्नो वास्ती" ति च। न्यायसुधायामप्युक्तम्-"न शब्दे स्पन्दयत्नौ हि विभुत्वाचेतनत्वतः-इति। तस्य शब्दनिष्ठत्वेन कल्पितस्य स्पन्दाद्यतिरिक्तस्य व्यापारस्य। स्वप्रवृत्तौ अन्यानधीनस्वतन्त्रप्रवृत्तौ। पुरुषान्तरेण प्रवर्तितस्सन् स्वयमेवेष्टसाधनतादि ज्ञात्वा यत्र प्रवर्तते, तत्रेति यावत्। पराधीनप्रवृत्तौ परकीयप्रेरणानन्तरभाविप्रवृत्तौ। अनेन उभयत्रापि प्रवृत्तिकारणत्वेन क्लृप्तत्वं समीहितसाधनतायास्सूचितम्। लाघवादिति। भवन्मते कल्पितस्यापि धर्मस्य प्रवृत्त्यनुकूलत्वं, शब्दस्य स्वनिष्ठव्यापारबोधकत्वं, धात्वर्थस्य च समीहितसाधनत्वमिति त्रितयं कल्पनीयम्। अस्मन्मते तु समीहितसाधनतायाः प्रवृत्तिकारणत्वं शब्दस्यान्यनिष्ठव्यापारबोधकत्वमित्युभयं सिद्धम्, तस्या विध्यर्थत्वं परमेकं कल्पनीयमिति लाघवमित्यर्थः। क्लृप्तस्येत्यनेन भवन्मत एव क्लृप्तपरित्यागः अक्लृप्तकल्पनञ्च, नास्मन्मत इति सूचितम्। आवश्यकस्येति। भवतापीदमङ्गीक्रियत एव प्रवृत्तिसम्पादनार्थमितीदमुभयोरप्यावश्यकमिति भावः।

ननु यागादेः समीहितसाधनता न स्वरूपतस्सिद्धा। किन्तर्हि ? विधिविषयत्वान्यथानुपपत्त्या कल्पिता। विधिर्हि प्रवर्तनात्मकः स्वस्य प्रवर्तकत्वसिद्ध्यर्थं स्वविषयीभूतयागादेरिष्टसाधनत्वमाक्षिपति। अत एव च भावनाया इष्टभाव्यकत्वनियमश्पष्टे स्वर्गकामाधिकरणोक्तस्सङ्गच्छते। अत एव च धात्वर्थस्समानपदोपात्तोऽपि इष्टरूपत्वाभावात्

१. कल्पनागौरवाद्व०।

नच विधेः प्रवर्तकत्वनिर्वाहार्थं समीहितसाधनत्वकल्पनात् प्रेरणानभिधाने च विधेः प्रवर्तकत्वाभावाद्धात्वर्थस्य च समीहितसाधनत्वकल्पकमेव नास्तीति वाच्यम् ; प्रवर्तनाभिधानेनै(१)व तन्मतेऽपि विधेः प्रवर्तकत्वात् विध्यभिहितस्य च प्रवर्तनासामान्यस्य विशेषमन्तरेणापर्यवसानात्समीहितसाधनत्वाक्षेपकत्वात् ।

न चेष्टसाधनत्वस्य विध्यर्थत्वे सन्ध्योपसनं ते इष्टसाधनं तत् त्वं कुर्विति सहप्रयोगानुपपत्तिरिति वाच्यम् इष्टसाधनत्वस्य विशेषरूपेण विधिनानभिधानात् । प्रवर्तनात्वेन रूपेणाभिधानात् । सामान्यशब्दस्य च विशेषशब्देन दृष्टः सहप्रयोगः—पाञ्चालराजो द्रुपद-इत्यादौ । तस्मात् समीहितसाधनतव प्रवर्तनात्वेन रूपेण विध्यर्थः । सैव च तेन रूपेण शब्देनैवाभिधीयत इति शाब्दी भावना ।

उक्तवार्तिकस्याप्ययमेवाभिप्रायः । अभिधीयते या साऽभिधा समीहितसाधनता सैव प्रवर्तनात्वेनाभिहिता पुरुषप्रवृत्तिं भावयतीति भावना तां लिङादय आहुरिति । यथाहुः—

पुंसां नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्तकः ।

---

भाव्यत्वांशं परित्यज्य करणत्वांशे निपततीति प्रतिपादितं भावार्थाधिकरणे । यदि प्रेरणा विध्यर्थो न स्यात् तदा अन्यथानुपपद्यमानस्य कस्याप्यभावात् धात्वर्थगतेष्टसाधनताक्षेपप्रमाणस्यैवाभावेन सर्वमिदं दत्तजलाञ्जलि स्यादित्याशङ्कामनूद्य परिहरति—न चेति । प्रेरणाविध्यर्थत्ववादिमतेऽपि न प्रेरणात्वेन विधिगम्यत्वमङ्गीक्रियते, किन्तु प्रवर्तनासामान्येनैव । सामान्यस्य विशेषमन्तरा पर्यवसानाभावात् विशेषजिज्ञासायां परं प्रेरणारूपो विशेषोऽवधार्यते । अतश्च प्रथमतः प्रेरणानभिधानेऽपि यथा तन्मते इष्टसाधनत्वाक्षेपकत्वं तथैवास्मन्मतेऽपीति न विरोध इत्यर्थः ।

पूर्वोक्तां सहप्रयोगानुपपत्तिं वारयति—न चेति । विशेषरूपेणेति । इष्टसाधनत्वस्य विध्यर्थत्वेऽपि न समीहितसाधनत्वरूपेण तदवबोध्यते । किन्तु प्रवर्तनात्वेनैव, इष्टसाधनपदेन तु विशेषरूपेणेति सामान्यविशेषवाचकपदयोरुपपन्नस्सहप्रयोग इति भावः । तदेव सदृष्टान्तमभिधत्ते—सामान्यशब्दस्येत्यादि । उक्तमर्थमुपसंहरति—तस्मादिति । सैव समीहितसाधनतैव । तेन रूपेण प्रवर्तनात्वेन रूपेण । अस्मिन्नेवार्थे वार्तिकमपि योजयति—उक्तेति । अभिधीयत इत्यनेन कर्मव्युत्पत्तिः प्रदर्शिता । अस्मिन् पक्षे अभिधा च सा भावना चेति कर्मधारयसमासो बोध्यः । तत्र भावनात्वं निरूपयति—पुरुषेति । अत्र मण्डनमिश्रस्यापि सम्मतिमाह—यथाहुरिति । पुंसामिति । इष्टाभ्युपायत्वात् इष्टसाधनत्वात् ल्यब्लोपे पञ्चमी । इष्टसाधनत्वं विहायेत्यर्थः । क्रियासु यागादिषु प्रवर्तको नैवास्ति । इष्टसाधनतैव प्रवर्तिकेति यावत् । प्रेक्षावतां हि यावत् स्वाभिलषितफलसाधनता न ज्ञायते तावत् दुःखात्मके कर्मणि प्रवृत्तिर्नोदेतीति भावः । अस्तु नामे-

---

१. नैतन्म० ।

प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम् ॥ इति।

तत्सिद्धं यजेतेत्यत्र लिङ्त्वांशेन शाब्दी भावनोच्यत इति ॥

आख्यातत्वांशेनार्थी भावनोच्यते।

( अर्थीभावनानिरूपणम् )

ननु–केयमार्थी भावना ?। कर्तृव्यापार इति चेत्–न; यागादेरपि तद्व्यापारत्वेन भावनात्वापत्तेः। नचेष्टापत्तिः, तस्य प्रकृत्यर्थत्वेन प्रत्ययार्थत्वाभावादिति चेत्–

अत्राहुः–(१) सत्यं न यागो भावना, किन्तु स्वर्गेच्छाजनितो याग-

---

ष्टसाधनता लिङ्प्रतिपाद्या, प्रवर्तनात्वं तु कथं तस्याः ? इत्यत आह–प्रवृत्तिहेतुमिति। यः प्रवृत्तिहेतुर्धर्मः तमेव प्रवर्तनामाचक्षते प्रवर्तनाविदः इत्यर्थः। शाब्दीभावनानिरूपणमुपसंहरति—तत्सिद्धमिति।

एवं शब्दभावनां निरूप्य तत्प्रसङ्गात् तद्वाच्यभूतामार्थीभावनां निरूपयितुमारभते–आख्यातत्वेति।

( आर्थीभावनानिरूपणम् )

ननु भावनाया यदि धात्वर्थात् भेदस्सिध्येत्, युज्येत तदा तस्याः प्रत्ययवाच्यत्वम्, तत्रैव न प्रमाणं पश्यामः; पचतीत्यादौ यावन्तो व्यापाराः प्रतीयन्ते स्थाल्यधिश्रयणोदकासेचनतण्डुलावापफूत्कारावस्रावणादयः ते सर्वेऽपि धातुत एव प्रतीयन्त इति तेषां धातुवाच्यतैव युक्ता, न प्रत्ययवाच्यता, तदतिरिक्तस्य कस्यचिदप्रतीयमानत्वात् कस्याख्यातांशप्रतिपाद्यता अर्थभावनात्वं वोच्यते ? इति वैयाकरणशङ्कते–नन्विति। कर्तृव्यापार इति। सर्वत्र हि पचति, पाकं करोति, यजति, यागं करोति, इति विवरणं दृश्यते। तत्र घञन्तपाकादिपदैः प्रकृत्यर्थस्य कृञ्धातुना च प्रत्ययार्थस्य विवरणमित्यवगम्यते। तेन च करोतिसमानार्थकत्वमाख्यातस्येत्यवगम्यते। करोतिश्च सकर्मक इत्याख्यातेनापि तथैव भाव्यम्। तच्च कर्मोत्पाद्यमेव भवति। एवञ्च उत्पद्यमानस्य वस्तुन उत्पत्त्यनुकूल उत्पादककर्तृव्यापारः आख्यातार्थ इति फलितम्। भावनाशब्दोऽपि तमेवाभिधत्ते। भूधातोर्ण्यन्तात् करणार्थकल्युट्प्रत्यये कृते भावनाशब्दनिष्पत्तेः। पाकशब्दार्थश्च विक्लित्तिः। यागपदार्थश्च द्रव्यदेवतयोस्सम्बन्धः। अतश्च तण्डुलरूपकर्मगतविक्लित्तिरूपव्यापारः पचिधात्वर्थः, तत्प्रयोजको देवदत्तादिरूपकर्तृव्यापारः प्रत्ययवाच्यः इति स एव विक्लित्त्यनुकूलकर्तृव्यापारत्वात् भावना भवत्वित्याशयः। न विक्लित्यादिः केवलो धात्वर्थो भवितुमर्हति। तथात्वे कुष्णलेषु विक्लित्त्यसम्भवेन तत्र तत्सम्पादकश्रपणविधानानुपपत्तेः। किन्तु पचेरधिश्रयणाद्यवस्रावणान्तो व्यापारोऽर्थः, यजेश्च मानसस्त्यागः, सङ्कल्पो वा, तस्यैव यागादिपदार्थत्वात्; तस्य च कर्तृव्यापारत्वात् तस्यैव भावनात्वमापद्येतेत्याह–यागादेरिति। तस्य यागस्य। प्रकृत्यर्थत्वेनेति। एवञ्च प्रत्ययार्थस्य भावनात्वं वक्तुमुपक्रान्तो भवान् इदानीं प्रकृत्यर्थस्यैव भावनात्वमभ्युपगच्छन् अस्मत्पक्षे पतितः, स्वोक्तविरोधी च सञ्जात इत्याशयः।

एवमापादितां शङ्कां प्रथमतो न्यायसुधाकृन्मतमनुसृत्य समाधत्ते–अत्राहुरिति। आहुरित्यनन्तरं न्यायसुधाकृत इति शेषः। न यागो भावनेति। नास्माभिर्मानस-

---

१. इदं च न्यायसुधाकृतो भट्टसोमेश्वरस्य मतम्। अग्रे च 'अन्ये त्वाहु'रित्यादिना निरूप्यमाणं

विषयो यः प्रयत्नः स भावना । स एव चाख्यातांशेनोच्यते । यजेतेत्याख्यातश्रवणे (१) यागे यतेतेति प्रतीतेर्जायमानत्वात् ।

यश्च प्रयत्नपूर्वकं गमनादि करोति तस्मिन् देवदत्तो गमनं करोतीति करोतिप्रयोगदर्शनात्, वातादिना (२) स्पन्दने तु नायं करोति, किन्तु वातादिनास्य स्पन्दो जायत इति प्रयोगात् करोत्यर्थस्तावत् प्रयत्नः । करोतिसामानाधिकरण्यं चाख्याते दृश्यते-यजेत, यागेन कुर्यात्, पचति, पाकं करोति, गच्छति, गमनं करोतीति । अतश्च करोतिसामानाधिकरण्यात् प्रयत्नस्याख्यातवाच्यत्वम् । न च रथो गच्छतीति प्रयोगानुपपत्तिः, रथे

---

सङ्कल्परूपस्य यागस्य भावनात्वमुच्यते । तस्य भवदुक्तरीत्यैव धातुवाच्यत्वात् । किन्तु तस्यापि जनको यः प्रयत्नः पुरुषनिष्ठः स एवाख्यातवाच्यः, तस्यैव च भावनात्वमुच्यते । स एव च सर्वत्र कृञ्धातुना विव्रियते । उक्तं ह्याचार्यैः—"सर्वधात्वर्थसम्बद्धः करोत्यर्थो हि भावना" इति । तस्य च धात्वर्थात् पृथक् विव्रियमाणत्वादेव न धात्वर्थता । किन्तु आख्यातांशवाच्य एव स इत्याशयः । यागविषय इति बहुव्रीहिः । अस्तु नाम धात्वर्थातिरिक्तः कश्चित् व्यापारः, स च यत्न एवेत्यत्र किं प्रमाणम् ? अत आह—यजेतेति । 'यतेते'ति यतधातुप्रयोगेण यत्न एवाख्यातार्थो भवितुमर्हतीति सूचितम् ।

यत्र यत्नप्रतीतिरपेक्षिता तत्रैव कृञ्धातुप्रयोगदर्शनात कृञ्धातोश्चाख्यातसामानाधिकरण्यस्य बहुशो दर्शनादपि कृतिरूपयत्नवाचित्वमाख्यातस्येत्युपपादयति—यश्चेति । करोत्यर्थस्तावत् प्रयत्न इति । एतेन—घटं करोतीत्यर्थे घटं भावयतीति प्रयोगदर्शनात करोतिभावयत्योरुसमानार्थकत्वं प्रतीयते । भावयतेश्चान्योत्पत्त्यनुकूलव्यापारोऽर्थः इति करोतेरपि स एवार्थो भवितुमर्हति । करोतिसामान्याधिकरण्याच्चाख्यातस्यापि स एवार्थं इति अग्रे निरूपयिष्यमाणं मिश्रमतं प्रत्युक्तम् । यद्यन्योत्पादानुकूलव्यापारविशेष एवाख्यातार्थस्स्यात् वातरोगादिना स्पन्दमाने चैत्रशरीरे तादृशव्यापारस्य सत्वात् 'नायं स्पन्दं करोती'ति निषेधोऽनुपपन्नस्स्यात् । आख्यातस्य करोतिसामानाधिकरण्यमभिलपति-यजेतेति । यजेतेत्यस्य 'यागेन कुर्यात्' इति विवरणं तस्य विधिप्रत्ययघटितत्वात् तत्र धात्वर्थातिरिक्तफलस्य सत्वेन तस्यैव भाव्यत्वौचित्यं धात्वर्थस्य करणत्वेनान्वयं च मनसि निधाय कृतम् । पचतीत्यत्र तु लडन्तत्वात् धात्वर्थस्यैव सन्निहितस्य भाव्यत्वौचित्यधिया पाकं करोतीति विवरणम् । यदि तु तत्राप्योदनमिति द्वितीयान्तपदसमभिव्याहारः तदा पाकेन ओदनं करोतीत्येव विवरणमिति ध्येयम् । आख्यातवाच्यत्वमिति । एतेन आख्यातस्य यत्नवाचकत्वे वाच्यतावच्छेदकं यत्नत्वं कल्पितं भवेत् । व्यापारवाचकत्वे तु तत्तत्फलभेदेन तत्तद्व्यापाराणां भेदात् अनुगतैकवाच्यतावच्छेदकसम्पादनं दुर्लभं स्यात् इति सूचितम् ।

आख्यातस्य यत्नार्थकत्वे तस्य चेतनमात्रवृत्तिस्वाभाव्येनाचेतने आख्यातप्रयोगा-

---

पार्थसारथिमिश्रमतम् । एतच्चातिरोहितमेव मीमांसापरिशीलनवताम् । सति चैवं यदत्र "आहुरिति पार्थसारथिमिश्रादय इति शेषः' इति व्याख्यातम् । न तत्र किञ्चिदपि प्रमाणं पश्यामः ।

१. यागेन । २. स्पन्दमाने ।

यत्नाभावादिति वाच्यम्। वोढृस्वगतं प्रयत्नं रथे आरोप्य प्रयोगोपपत्तेः।

यन्मतेऽप्यन्योत्पादनानुकूलं व्यापारसामान्यं भावना तन्मतेऽपि रथे गमनातिरिक्तव्यापारानुपलब्धेः रथो गच्छतीति प्रयोगस्यौपचारिकत्वमेवेति। अतश्च प्रयत्न एवार्थीभावना। यथाहुः—

प्रयत्नव्यतिरिक्तार्थी (१) भावना तु न शक्यते।
वक्तुमाख्यातवाच्येह प्रस्तुतेत्युपरम्यते॥ इति॥

अन्ये त्वाहुः—भवितुर्भवनानुकूलो भावकव्यापारस्तावद्भावना। यस्मिन् व्यापारे कृते करणं फलोत्पादनाय समर्थं भवति तादृशो व्यापार इति यावत्। स एव चाख्यातार्थः। कुठारेण छिनत्तीत्याख्यातश्रवणे हि भवत्येतादृशी मतिः—कुठारेण तथा व्याप्रियेत यस्मिन् व्यापारे कृते कुठारेण छेदनं भवतीति। एवं 'यजेत स्वर्गकाम' इत्यस्यायमर्थः—यागेन तथा व्याप्रियेत

---

नुपपत्तिमाशङ्क्य परिहरति-न चेति। वोढृस्वेति। रथवाहकाः रथे नियुक्ता येऽश्वाः तद्गतमित्यर्थः। आरोप्येति। शक्यतावच्छेदकलाघवानुसारेण तादृशारोपाङ्गीकरणमपि नातीव दोषायेति भावः। उक्तं हि न्यायसुधायाम्—

"स्त्रीत्वाभावेऽपि खट्वादौ टाबादिप्रत्ययो यथा।
प्रयुज्यते तथाख्यातं यत्नाभावेऽप्यचेतने।
वोढ्रश्वादिगतं यत्नं रथादावुपचर्य वा।
उपपाद्यः प्रयोगोऽत्र मुख्यार्थानुपपत्तितः॥" इति।

परमतेऽप्ययं दोषस्तुल्य एवेत्याह—यन्मत इति। तन्मते हि धात्वर्थानुकूलो व्यापारः आख्यातार्थः कश्चित् वक्तव्यः। न च 'रथो गच्छति' इत्यत्रोत्तरदेशसंयोगानुकूलव्यापारातिरिक्तः कश्चित् व्यापारः प्रसिद्धोऽस्ति रथे, यत्राख्यातं प्रयुज्येत। अतश्च तन्मतेऽप्यौपचारिकत्वं तुल्यमेवेति भावः। अस्मिन्नर्थे न्यायसुधोक्तामेव कारिकां प्रमाणयति-प्रयत्नेति। स्पष्टोऽर्थः।

एवं न्यायसुधाकृन्मतमुपवर्ण्य पार्थसारथिमिश्रमतमुपवर्णयति—अन्ये त्विति। भवितुः भवनकर्तुः उत्पत्तुः ओदनादेः स्वर्गादेर्वा भवनानुकूलः उत्पत्त्यनुकूलः, भावकस्य प्रयोजकस्य देवदत्तादेः यो व्यापारः स एव भावनापदवाच्य इत्यर्थः। स्पष्टप्रतिपत्त्यर्थमाह-यस्मिन्निति। स एवेति। धात्वर्थादिरूपकरणस्य फलोत्पादने यस्सहकारी भवति स एवाख्यातार्थ इति फलितम्। कथमिदं प्रतीयते तादृश एव व्यापारः आख्यातार्थ इति? अतः तदुपपादयितुं प्रथमं तावत् लोके तत्प्रतीतिमुपपादयति-कुठारेणेति। व्याप्रियेतेति। एवञ्च तादृशस्य व्यापारस्य सामान्यरूपेणैवाख्यातात् प्रतीतिः। न तु विशेषरूपेण। तत्तु प्रमाणान्तरसंवेद्यमेवेत्याशयः। यथा लोके तथैव वेदेऽपीत्याह—एवमिति। यागादेः करणत्वं श्रुतम्। न केवलेन तेनान्यानुपकृतेन फलं सम्पादयितुं शक्यमिति बाणादिरेव स्वस्य फलजनने सहकारिणमपेक्षते। स एव चाख्यातात् सामा-

---

१. 'र्थंश्चा'।

यस्मिन् व्यापारे कृते यागात् स्वर्गो भवतीति । स च व्यापारः क्वचिदुद्यमन-निपातनादिः, क्वचिच्चाग्न्यन्वाधानादिब्राह्मणतर्पणान्तः कथंभावाकाङ्क्षायां विशेषरूपेण पश्चादवगम्यते ।

अन्योत्पादानुकूलत्वेन सामान्यतस्त्वाख्यातादेव । रथो ग्रामं गच्छतीत्यत्रापि आख्यातेन ग्रामप्राप्त्यनुकूलो व्यापार एव प्रतीयते । रथस्तथा गमनेन व्याप्रियते यस्मिन् व्यापारे कृते गमनाद्ग्रामप्राप्तिर्भवतीति प्रतीतेः । नत्वत्र गमनमात्रमाख्यातार्थः तस्य धातुनोक्तत्वात् । तत्र कोऽसौ व्यापार इत्यपेक्षायां पूर्वोत्तरावान्तरदेशविभजनसंयोजनरूप इति पश्चादवगम्यते । पूर्वेण प्रदेशेन विभज्योत्तरेण संयुज्य रथो ग्रामं गच्छतीति प्रयोगात् । उद्यम्य निपात्य कुठारेण छिनत्तीतिवत् । एवं देवदत्तः प्रयतत इत्यत्रापि देवदत्तस्तथा व्याप्रियते यथा प्रयत्नो भवतीति प्रयत्नानुकूलो व्यापार एवाख्याता-

न्यात्मना प्रतीयत इति पिण्डीभूतोऽर्थः । स इति । सामान्यरूपेण य आख्यातात् प्रतीतः स इत्यर्थः । 'व्यापार' इति 'अवगम्यत' इत्यनेनान्वेति । क्वचित् लोके कुठारेण छिनत्तीत्यादौ । क्वचित् वेदे 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यादौ । अग्न्यन्वाधानब्राह्मणतर्पणपदार्थौ पूर्वं प्रकरणनिरूपणावसरे व्याख्यातौ । पश्चादिति । 'अग्नीनन्वादधाति' 'ब्राह्मणांस्तर्पयितवै' इत्यादिभिस्तत्तत्प्रातिस्विकैर्विधिभिरित्यर्थः(१)

अन्योत्पादेति । यत्नाख्यातार्थवादिनोऽपि अन्योत्पादानुकूलत्वेनैव तत् वदन्ति । तथापि तन्मते यत्नस्याख्यातार्थत्वेन यागादेः तज्जन्यत्वात् फलजनकीभूतयागादिजनकत्वमन्योत्पादानुकूलत्वम् । अस्मिंश्च मते फलजनकीभूतयागाद्युपकारकत्वं तदिति विवेकः । अत्र चशब्द एवकारश्च भिन्नक्रमौ । आख्यातात्तु सामान्यत एवेत्यर्थः । एवं व्यापारसामान्यस्याख्यातार्थत्वेऽभ्युपगते 'रथो गच्छती'त्याद्यचेतनकर्तृकस्थलेऽप्यौपचारिकत्वं विनैव निर्वाहो भवतीत्याह—रथ इति । अत्र ग्रामप्राप्तिः फलम् । तज्जनको व्यापारो गमनाख्यो धात्वर्थः । तादृशग्रामप्राप्तिरूपफलोत्पत्तौ व्यापृतस्य यः प्रकारविशेषः पूर्वदेशविभागादिरूपः स एव सामान्यरूपेणाख्यातार्थ इति विवेकः । कुठारेण छिनत्ति, यजेतेत्यादौ चेतनकर्तृकस्थले यथा प्रतीतिः तथैव रथो गच्छतीत्यचेतनकर्तृकस्थलेऽपीत्याह—रथस्तथेति । पश्चादिति । प्रमाणान्तरेणेत्यर्थः । किं तत् प्रमाणान्तरम् ? अत आह—पूर्वेणेति । एवञ्चास्मन्मते प्रयत्नवाचियतधातूत्तराख्यातस्यापि स एवार्थ इति लाघवम् । भवन्मते तु धात्वर्थानुकूलयत्नस्य तत्राप्रसिद्धेः तत्प्रयोगस्यौपचारिकत्वमेवाङ्गीकरणीयमिति गौरवमित्याशयेनाह—एवमिति । प्रयत्नो भवतीत्यनेनात्र धात्वर्थस्यैव प्रयत्नरूपस्य भाव्यत्वमिति सूचितम् ।

---

१. अत्रेदं वक्तव्यम्—यजेत, इत्यादौ देवतोद्देश्यद्रव्यत्यागरूपो व्यापारो धात्वर्थः, तदनुकूलः अन्वाधानादिब्राह्मणतर्पणान्तो व्यापारकलाप आख्यातार्थः, स चाख्यातेनानुकूलव्यापारत्वेन सामान्येनोच्यते, विशेषरूपेण तु तैस्तैः प्रातिस्विकविधिभिरुच्यत इति पार्थसारथिमिश्रमतं इति सुविदितं मीमांसकानाम् । सति चैवं महामहोपाध्यायश्रीमदभ्यङ्करशास्त्रिमहोदयैः "अन्वाधानादिर्व्यापारो देवतोद्देश्यकहविःप्रक्षेपानुकूलत्वेन विशेषरूपेण धातुवाच्यः" इति यदुक्तम्, न तत्र तेषामाशयमवगन्तुमीश्महे ।

र्थो न तु प्रयत्नः। तस्य धातुनोक्तत्वात् व्यापारविशेषापेक्षायां चेच्छादिः पश्चादवगम्यते, उद्यमननिपातनवत्।

तथा च सर्वत्रानुगतत्वादन्योत्पादानुकूलव्यापारसामान्यमेवाख्यातार्थः, न तु प्रयत्नमात्रम्। रथो गच्छति, देवदत्तः प्रयतत इत्यादिषु तदभावात्। न चात्रौपचारिकत्वं वक्तुं युक्तम्, मुख्ये संभवति तस्यान्याय्यत्वात्। करोत्यर्थोऽप्यन्योत्पादानुकूलो व्यापार एव न प्रयत्नमात्रम्, करोतेश्चेतनाचेतनकर्तृकाख्यातसामानाधिकरण्यादिति। तत्सिद्धमन्योत्पादानुकूलो व्यापारविशेष आर्थी भावनेति।

सैव चाख्यातांशेनोच्यते-भावयेदिति। तस्याश्च भाव्याकाङ्क्षायां स्वर्गादि भाव्यत्वेन सम्बध्यते। करणाकाङ्क्षायां यागादिः करणत्वेन सम्बध्यते। इतिकर्तव्यताकाङ्क्षायां प्रयाजादय इतिकर्तव्यतात्वेन संबध्यन्ते। एवञ्च यजेतेत्यादिना स्वर्गाद्युद्देशेन यागादेर्विधानात् सिद्धं यागादेर्धर्मत्वं प्रयोजनमुद्दिश्य वेदेन विहितत्वात्।

( उपसंहारः )

सोऽयं धर्मो यदुद्देशेन विहितः तदुद्देशेन क्रियमाणस्तद्धेतुः। श्रीगो-

ननु—कोऽत्र विशेषः पूर्वस्मात् पक्षात्? अत आह—तथा चेति। सर्वत्रेति। अचेतनकर्तृकस्थले चेतनकर्तृकस्थले चेत्यर्थः। अनुगतत्वादिति। अन्योत्पादानुकूलत्वस्येति शेषः। तदभावात् प्रयत्नाभावात्। नन्वेवमप्यन्योत्पादानुकूलव्यापारस्याख्यातार्थत्वे पचति, पाकं करोतीति यत्नार्थककृञ्धातुना विवरणानुपपत्तिरित्यत आह—करोत्यर्थोऽपीति। कुत एतत्? अत आह-करोतेरिति। चेतनकर्तृकाख्यातस्थले देवदत्तः पचतीत्यादौ देवदत्तः पाकं करोतीति विवरणवत् स्थाली पचतीत्यादावचेतनकर्तृकाख्यातस्थलेऽपि स्थाली पाकं करोतीति विवरणस्य दृष्टत्वादित्यर्थः। अतश्चोभयानुगतव्यापारस्यैवार्थीभावनात्वं भवितुमर्हति, न तु चेतनमात्रनिष्ठस्य प्रयत्नस्येत्युपसंहरति—तत्सिद्धमिति। णिजन्तभूधातुना विवरणादपि तस्या अन्योत्पादानुकूलत्वमेव युक्तमित्यभिप्रायः।

एवं मतद्वयेनापि भावनां निरूप्य तत्सम्बन्धित्वात् पूर्वं प्रकरणनिरूपणावसरे निरूपितमपि पुनरंशत्रयं तस्यास्संक्षेपतः कथयति—तस्याश्चेति। प्रयाजादय इत्यादिपदेन यस्य प्रधानस्य प्रकरणे यान्यङ्गानि पठितानि तानि ग्राह्याणि। ग्रन्थारम्भे प्रतिज्ञातं यागादेर्धर्मत्वमेतावता प्रबन्धेन निरूप्य दर्शितमित्याशयेन पुनस्तत् स्मारयन् ग्रन्थमुपसंहरति—एवञ्चेति।

( उपसंहारः )

ननु यागादेः स्वर्गादिरूपतत्तत्फलोद्देशेन विहितत्वे तत्तत्फलेषु वीतरागाणां मुमुक्षूणां प्रवृत्तिर्न स्यात्। इष्टापत्तौ केवलं कामिजनमात्रमुद्दिश्य प्रवृत्तं शास्त्रमतिसङ्कुचितं स्यादिति तस्य महाविषयत्वहानिरित्यत आह—सोऽयमिति। तद्धेतुः तत्फलहेतुः। निःश्रेयसहेतुरिति। निःश्रेयसं मोक्षः तद्धेतुः चित्तशुद्धिसम्पादनद्वारा परम्परया

विन्दार्पणबुध्या क्रियमाणस्तु निःश्रेयसहेतुः। न च तदर्पणबुद्ध्या तदनुष्ठाने प्रमाणाभावः।

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्॥

इति स्मृतेः। अस्याश्चातिष्टकादिस्मृतिवत् प्रामाण्यादित्यन्यत्र विस्तरः॥

क्वाहं मन्दमतिः क्वेयं प्रक्रिया भाट्टसम्मता।
तस्माद्भक्तेर्विलासोऽयं गोविन्दगुरुपादयोः

---

तत्कारणमित्यर्थः। ननु सर्वत्र फलवाक्येषु "ज्योतिष्टोमेन स्वर्गकामो यजेत" "अग्निहोत्रं जुहुयात् स्वर्गकामः" "वाजपेयेन स्वाराज्यकामो यजेत" इत्यादिषु स्वर्गादिरूपफलोद्देशेनैव कर्मणां विनियोगदर्शनात् ईश्वरार्पणबुध्यानुष्ठाने प्रमाणाभावः इत्याशङ्क्य परिहरति—न चेति। यत्करोषीति। यथा च तत्तद्वाक्येषु तत्तत्फलार्थं विहितानामपि कर्मणां "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन" इति श्रुत्या संयोगपृथक्त्वन्यायेन विविदिषोद्देशेन सर्वयज्ञानां विधानं तद्वदनयापि स्मृत्या श्रीभगवदुक्त्या तेनैव न्यायेन ईश्वरार्पणबुध्यानुष्ठानविधानमिति भावः। यद्यपीयं स्मृतिरीश्वरार्पणबुध्याऽनुष्ठान एव प्रमाणम्, न तु तथानुष्ठितस्य निश्श्रेयसफलकत्वेऽपि। यावच्च तत्र प्रमाणं न प्रदर्श्यते तावत् अनुष्ठाने प्रवृत्तिरेव नोदेतीति तदेव प्रथमतः प्रदर्शनीयम्, तथापि तत्रैव गीतायामेतच्छ्लोकानन्तरपठितेन

"शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः।
सन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि॥"

इति श्लोकेन पूर्वोक्तकर्मणः भगवद्रूपतावाप्तिफलकत्वमुपवर्णितं सिद्धं कृत्वैवमुक्तं ग्रन्थकृतेत्यवगन्तव्यम्। भगवद्गीतावचनस्यास्येतिहासरूपभारतान्तर्गतस्य कुतः तादृशं स्वार्थे प्रामाण्यमित्यत आह—अस्या इति। गीताया अस्या भारतान्तर्गतत्वेऽपि तदन्तर्गताख्यानानामेवार्थवादत्वस्य तद्गतविधिभागानां तु धर्मे प्रामाण्यस्य वार्तिककारैरेवार्थवादपादे स्थापितत्वात् विशेषतो भगवतो वासुदेवस्य मुखादेवास्या निर्गतत्वात् विधिरूपत्वाच्चास्याः प्रामाण्ये न कोऽपि संशय इत्याशयेनाह—इत्यन्यत्र विस्तर इति। इति शब्दः प्रकरणवाची। कर्मणां तत्तत्फलार्थे विहितानामपि ईश्वरार्पणबुध्याप्यनुष्ठानमित्यादिकं प्रकृते सङ्ग्रहेण यदुक्तं तत्सर्वं मया वेदान्तसारव्याख्याने नित्यादीनां कर्मणां प्रयोजनकथनावसरे विस्तरेण प्रतिपादितं तत एवावगन्तव्यम्। विस्तरभयात्तु नेह प्रपञ्चितमित्यर्थः।

एवं ग्रन्थं परिसमाप्य तदन्ते नम्रतां प्रदर्शयति—क्वाहमिति। भाट्टसम्मतेति। कौमारिलं मतमाश्रित्य प्रवृत्ता ये पार्थसारथिमिश्रप्रभृतयः तेषामभिमतेत्यर्थः। विशेषणमेतदुपाददता स्वग्रन्थोऽपि तदेव मतमवलम्ब्य प्रवृत्तो न प्राभाकरं मतमवलम्ब्येति सूचितम्। तर्हि किमर्थमेतादृश्यामत्यन्तदुरवगाहायां प्रक्रियायां प्रवृत्तिः? अत आह—भक्तेरिति। गोविन्दो भगवान् वासुदेवः स च गुरुश्च तौ तयोः पादयोरित्यर्थः। स्वीय-

ग्रन्थरूपो मदीयोऽयं वाग्व्यापारः सुशोभनः ।
अनेन प्रीयतां देवो गोविन्दो भक्तवत्सलः ॥

इति ( महामहोपाध्यायेन* ) श्रीमदनन्तदेवसूनुना आपदेवेन कृतं मीमांसान्यायप्रकाशसंज्ञकं पूर्वमीमांसाप्रकरणं समाप्तम् ॥

---

ग्रन्थं स्वेष्टदेवतायै श्रीभगवते वासुदेवाय समर्पयन् "तत्कुरुष्व मदर्पणम्" इति भगवदुक्तिं स्वयमेवानुतिष्ठति । ग्रन्थरूप इति ।

वसुधावसुनन्देन्द्र ( १९८१ ) मिते वैक्रमवत्सरे ।
ज्येष्ठे मासि सिताष्टम्यां निशीथे कुजवासरे ॥
भागीरथ्यास्तटे रम्ये क्षेत्रे कनखले शुभे ।
पूर्णतामाप विश्वेशरूपयेयं कृतिर्मम ॥
यत्कारुण्यविलासेन प्रपेदे पूर्णतामियम् ।
व्याख्यैनामर्पये तस्य विश्वभर्तुः पदाम्बुजे ॥

इति श्रीवेदवेदाङ्गपारगवैदिकसार्वभौमश्रीरघुनाथतनूजेन श्रीमदन्नपूर्णागर्भसम्भूतेन महामहोपाध्यायेन श्रीचिन्नस्वामिशास्त्र्यपरनाम्ना श्रीवेङ्कटसुब्रह्मण्यशर्मणा विरचिता मीमांसान्यायप्रकाशव्याख्या सारविवेचिन्याख्या समाप्तिमगमत् ।

। विश्वेशश्शरणं मम ।

---

॥ शुभमस्तु ॥

---

* ( ) एतच्चिह्नान्तर्गतमधिकमुपलभ्यते कस्मिंश्चित् लिखितपुस्तके ।

## प्राग्वंशवेदिकारिका: ॥

आपस्तम्बमतादर्थलक्षणं त्विथमिष्यते। तत्राग्न्यायतनान्याहुः शम्यामात्राणि याज्ञिकाः ॥ मध्येऽष्टप्रक्रमा ह्यन्तरालदेशं विहाय तु। पूर्वापराग्न्योस्ततस्थानं तत्र पूर्वानलस्य तु ॥ षट्त्रिंशदङ्गुलायामविस्तारचतुरस्रकम्। अङ्गुल्यो विंशतिरपि तिलाः स्युस्सार्धषोडश ॥ तन्मात्ररज्वा भ्रमयेदापराग्निकमण्डलम्। क्षेत्रतस्तद्विगुणितं दक्षिणाग्नेस्तु मण्डलम् ॥ तद्विष्कम्भार्धमेकोनत्रिंशदङ्गुलिकं मतम्। सार्धैकतिलहीनं तल्लभ्यते शुल्बसूत्रतः ॥ तन्मात्ररज्ज्वा भ्रमणं मण्डले तु कृते सति। उत्तरार्धं परित्यक्ते शिष्टमर्धेन्दुवद्भवेत् ॥ एवं प्राग्वंशवेदिः स्यादर्थलक्षणसंमता ॥

## अन्यः प्रकारः ॥

सार्धविंशत्यङ्गुलेन विलिखेद्गार्हपत्यकम्। सप्तविंशत्यङ्गुलेन दक्षिणाग्निस्तथा भवेत् ॥ गताष्टप्रक्रमे प्राच्याः शम्यामात्रप्रमाणतः। लिखेदाहवनीयन्तु चैषा प्राग्वंशवेदिका ॥ गार्हपत्यस्य पुरतः प्रक्रमद्वितयं त्यजेत्। श्रोण्यंसौ दर्शवेदीवत्ततो गृहपतेः पुरः ॥ श्रोणीभ्यां विलिखेत् पश्चात् प्रवर्ग्याणां तु सादनम् ॥

## प्राग्वंशस्थप्रवर्ग्यादिस्थानानां पदार्थानां च प्रमापकानि सूत्राणि।

(१) ऋत्विजामुपवेशनप्रकारः प्रवर्ग्यसमये—

पश्चाद्धोतोपविशति। पुरस्तादध्वर्युः। दक्षिणतो ब्रह्मा यजमानः प्रस्तोता च। उत्तरतः प्रतिप्रस्थाताग्नीध्रश्च। १५-५-३ ॥

(२) मेथ्याः—

दक्षिणेन दक्षिणं द्वारं मेथीं निहन्ति। १५-६-१३ ॥

(३) वत्सशङ्कोः—

एतस्यैव द्वारस्य पूर्वस्यै द्वार्यायै दक्षिणतो वत्साय शङ्कुम्। १५-६-१४ ॥

(४) अजाशङ्कोः—

एतस्यैवापरस्यै द्वार्यायै दक्षिणतोऽजाया अभ्यन्तरम्। १५-६-१५ ॥

(५) बर्करशङ्कोः—

उत्तरतो बर्कराय। १५-६-१६ ॥

(६) ततः खरानुपवपति। उत्तरेण गार्हपत्यमेकम्। उत्तरेणाहवनीयमेकम्। १५-६-२०, २१ ॥

(७) उत्तरपूर्वद्वारं प्रत्युच्छिष्टखरं करोति ॥ १५-६-२२ ॥

## सौमिक्या महावेदेस्तत्रस्थानां च स्थानानां प्रमापकानि सूत्राणि ।

(१) महावेदेः—

प्राग्वंशस्य मध्यमात् लालाटिकात् त्रीन् प्राचः प्रक्रमान् प्रक्रम्य शङ्कुं निहन्ति । तस्मात् पञ्चदशसु दक्षिणतः । एवमुत्तरतः । ते श्रोणी । प्रथमनिहतात् शङ्कोः षट्त्रिंशति: पुरस्तात् । तस्मात् द्वादशसु दक्षिणतः । एवमुत्तरतः । तावंसौ । आप. श्रौ. ११-४-१२, १३ ॥

(२) उत्तरवेदेः—

अपरेण यूपावटदेशं सञ्चरमवशिष्य वेद्यामुत्तरवेदिं दशपदां सोमे करोति । ७-३-१० ॥

(३) चात्वालस्य—

उत्तरस्मात् वेद्यंसादुदक् प्रक्रमे चात्वालः । ७-४-१ ॥

(४) उत्करस्य—

चात्वालात् द्वादशसु प्रक्रमेषु प्रत्यगुत्करः । ११-५-४ ॥

(५) आग्नीध्रागारस्य—

षट्सु प्रक्रमेषूत्करात् प्रत्यगाग्नीध्रं मिनोति । अर्धमन्तर्वेद्यर्धं बहिर्वेदि । प्राचीनवंशं चतुस्थूणं सर्वतः परिश्रितं दक्षिणत उपचारम् । ११-६-४ ॥

(६) सदसः—

अपरस्मात् वेद्यन्तात् त्रिषु पुरस्तात् प्रक्रमेषु तिर्यक् सदो मिनोति । नवारत्निविस्तारं सप्तविंशतिरुदगायतम् । अपरिमितं वा । ११-६-५, ७ ॥

(७) औदुम्बर्याः—

दक्षिणतः प्रक्रमे पृष्ठ्याया औदुम्बरीं मध्ये सदसो मिनोति । ११-८-१ ॥

(८) धिष्ण्यानां—

चात्वालात् धिष्ण्यानुपवपति । अन्तराग्नीध्र आग्नीध्रीयमुत्तरे वेद्यन्ते उत्तरतस्सञ्चरं शिष्ट्वा । सदसीतरान् पूर्वार्धे पुरस्तात् सञ्चरं शिष्ट्वा । पृष्ठ्यायां होत्रीयम् । तं दक्षिणेन प्रशास्त्रीयम् । उत्तरेण होत्रीयमितरानुदीच आयातयति ब्राह्मणाच्छंसिनः पोतुर्नेष्टुरच्छावाकस्येति । बहिस्सदसो मार्जालीयं दक्षिणे वेद्यन्ते दक्षिणतस्सञ्चरं शिष्ट्वा सममाग्नीध्रीयेण ।११-१४-१६ ॥

(९) उपरवाणाम्—

दक्षिणस्य हविर्धानस्याधस्तात् पुरोऽक्षं चतुर उपरवान् अवान्तरदेशेषु प्रादेशमुखान् प्रादेशान्तरालान् करोति । ११-११-१ । अधस्तात् संतृण्णा भवन्ति उपरिष्टादसंभिन्नाः ॥ ११-११-५ ॥

(१०) सोमखरस्य—

एतस्यैव हविर्धानस्याग्रेणोपस्तम्भनमुपरवपांसुभिश्चतुरश्रं खरं करोति सोमपात्रेभ्यः मात्रम्। पुरस्तात् सञ्चरं शिनष्टि ॥ ११-१३-८, ९ ॥

(११) सोमखरस्थपात्राणाम्—

खरे पात्राणि प्रयुनक्ति। दक्षिणेंऽस उपांशुपात्रम्। उत्तरमन्तर्यामस्य। ते अन्तरेण ग्रावाणमुपांशुसवनं दक्षिणामुखं संस्पृष्टं पात्राभ्याम्। तमपरेण प्रत्यञ्चि द्विदैवत्यपात्राणि। तान्यन्तरेण प्रवाहुक् शुक्रामन्थिनोः पात्रे। ते अपरेण प्रवाहुगृतुपात्रे। दक्षिणस्यां श्रोण्यामाग्रयणस्थालीम्। उत्तरस्यामुक्थ्यस्थालीम्। उक्थ्यपात्रं च तस्या उत्तरम्। स्थाल्यावन्तरेण त्रीण्युदञ्च्यतिग्राह्यपात्राणि आग्नेयमैन्द्रं सौर्यमिति। उत्तरेंऽसे दधिग्रहपात्रम्। एतस्यैव हविर्धानस्याग्रेणोपस्तम्भनमादित्यस्थालीम्। आदित्यपात्रञ्च तस्या उत्तरम्। उत्तरस्य हविर्धानस्याग्रेणोपस्तम्भनमनुपोंसे ध्रुवस्थालीम्। मध्ये परिप्लवाम्। यथावकाशं दश चमसान्। दक्षिणस्य हविर्धानस्याधस्तात् पश्चादक्षं द्रोणकलशं सदशापवित्रम्। उत्तरस्य हविर्धानस्योपरिष्टान्नीडे आधवनीयम्। प्रधुरे पूतभृतम्। एतस्यैव हविर्धानस्याधस्तात् पश्चादक्षं त्रीनेकधनान् घटान् ॥ १२-१, १२-२-१-१३ ॥

(१२) यूपावटस्य—

अग्रेणाहवनीयं यूपावटं परिलिखत्यर्धमन्तर्वेद्यध बहिर्वेदि। ७-१-६ ॥

(१३) नाभेः—

अथास्या मध्ये प्रादेशमात्रीं गोपदमात्रीमश्वशफमात्रीं वोत्तरनाभिं चतुस्त्रक्तिं कृत्वा ॥ ७-५-१ ॥

एतेषां सूत्राणामर्थो ग्रन्थविस्तरभिया न विवृतः। स च दीपिकादितोऽवगन्तव्यः ॥

(१४) सौमिकमहावेदिनिर्माणप्रकारः—

मीयते सौमिकी वेदिः प्रक्रमैर्द्विदशाङ्गुलैः।
आदौ त्रिषु नवद्व्येकचन्द्रद्विशरभूद्विषु ॥ १ ॥
एकैकं द्विशरैकेषु शङ्कवो दश पञ्च च।
षट्त्रिंशिका मानरज्जुः तस्याः द्व्यष्टेषु लक्षणम् ॥ २ ॥
विमाने पाशयोर्मध्यं प्रक्रमा द्वादश स्मृताः।
श्रोणी पञ्चदशस्वाद्ये सदोऽनन्तरतुर्ययोः ॥ ३ ॥
तत्कोणाः पञ्चमोनेषु भास्करेषु दशस्वपि।
तृतीये द्व्यन्तराधिष्ण्यास्तेषां प्रादेशतो भ्रमः ॥ ४ ॥
रुद्रेषु सप्तदशसु शङ्कपादोनितेष्विह।
आग्नीध्रं तत्पश्चिमे तु धिष्ण्यौ द्वादशसु स्मृतौ ॥ ५ ॥

षष्ठे स्यात्पञ्चके धानं पञ्चाशद्वृद्धितयान्विते ।
सप्तमे प्राग्वदाग्नीध्रं नवमे मन्त्रपूतकरः ॥ ६ ॥
एकादशे हविर्धानं पाशो व्यत्ययस्य पूर्ववत् ।
षोडशस्वर्धहीनेषु शामित्रो द्वादशे भवेत् ॥ ७ ॥
शङ्कोरुत्तरवेदिः स्यात् द्वये सार्धं उपान्त्ययोः ।
अन्तिमे द्वादशस्वंसौ चात्वालोऽस्लादुदक्क्रमे ॥ ८ ॥
पुरः पश्चात् सदो धानात् त्यजेत् प्रक्रमपञ्चकम् ।
एवमेव विमानं स्यात् पदैरपि चतुर्विधैः ॥ ६ ॥
सर्वत्र प्रक्रमैर्माने नवारत्निसदो हविः ।

(१५) चमसलक्षणं कारिकात्मकम्—

ब्रह्मणश्चतुरश्रः स्यात् होतुस्तु परिमण्डलः ।
पृथुस्तु यजमानस्य त्र्यश्रिरुद्गातुरुच्यते ॥
प्रशास्तुरवतष्टः स्यात् उत्तष्टो ब्रह्मशंसिनः ।
पोतुरग्रे विशाखावान्नेष्टुर्दक्षिणवक्रकः ॥
अच्छावाकस्य रास्नावानाग्नीध्रस्य मयूखकः ।
सर्ववक्रः सदस्यस्य चमसास्तरवो मताः ॥
चमसाश्चतुरश्रा वा मण्डला वेति केचन ।
होतुर्ब्रह्मण उद्गातुर्यष्टुश्शास्तुश्च शंसिनः ॥
पोतुर्नेष्टुरच्छावाकानामाग्नीध्रस्येति च क्रमः ।

---

## न्यायप्रकाशोद्धृतानामधिकरणानाम्

# अनुक्रमणिका ।

---

अवधेयम्—*एतच्चिह्नाङ्कितान्यधिकरणानि न समग्रतया विचारितानि । किन्तु उदाहरणार्थमेवोपात्तानीति ध्येयम् ।

॥ श्रीः ॥

# साङ्केतिकशब्दार्थविवरणम्

आप. श्रौ. ... ... .... आपस्तम्बश्रौतसूत्रम् ।

आप. ध. .... .... ... आपस्तम्बधर्मसूत्रम् ।

ऐ. ब्रा. पं. अ. ख. .... .... ऐतरेयब्राह्मणम्, पञ्चिका, अध्यायः, खण्डः ।

का. सं. .... ... ... काठकसंहिता ।

का. हौ. ... ... ... कातीयहौत्रम् ।

जै. सू. .... ... ... जैमिनीसूत्रम् ।

ता. ब्रा. ... ... ... ताण्ड्यमहाब्राह्मणम् ।

तै. ब्रा. का. प्र. अनु. तैत्तिरीयब्राह्मणं, अष्टकं, अथवा काण्डं, प्रश्नः,
तै. सं. का. प्र. अनु. .... अनुवाकः ।

तै. सं. का. प्र. अनु. .... तैत्तिरीयसंहिता, काण्डः, प्रश्न, अनुवाकः ।

तं. वा. पृ. ... ... तन्त्रवार्तिके, पृष्ठम् ।

न्या. र. ... ... ... न्यायरत्नमाला ।

न्यायसु. पृ. ... ... न्यायसुधा, पृष्ठम् ।

पा. सू. .... ... ... पाणिनिसूत्रम् ।

पू. मी. ... ... ... पूर्वमीमांसा ।

बृह. ... ... ... बृहट्टीका ।

म. स्मृ. ... ... ... मनुस्मृतिः ।

मै. सं. ... ... ... मैत्रायणीयसंहिता ।

वाल्मी. रा. कि. ... .... वाल्मीकीरामायणं, किष्किन्धाकाण्डः ।

श. ब्रा. ... ... ... शतपथब्राह्मणम् ।

शा. दी. ... ... ... शास्त्रदीपिका ।

शा. भा. ... .... .... शाबरभाष्यम् ।

षड्वि. ... ... ... षड्विंशब्राह्मण ।

श्री. भ. गी. ... .... .... श्रीमद्भगवद्गीता ।

श्लो. वा. अपो. श्लो. ... श्लोकवार्तिके अपोहवादे श्लोकः ।

॥ श्रीः ॥

# मीमांसान्यायप्रकाशोद्धृतवाक्यानामाकरसूची ॥

---

# सारविवेचिन्युद्धृतवाक्यानामाकरसूची

# शुद्धिपत्रम्

| अशुद्धिः | शुद्धिः | पृ० | पं० |
|---|---|---|---|
| तृतीयाविभवित्त० | तृतीयाविभक्ति० | १६ | ३६ |
| चयकप्रकरणे | चयनप्रकरणे | ३० | २६ |
| आत्मवम् | आत्मानं | ४८ | ३१ |
| वातककारै | वार्तिककारैः | ७३ | २४ |
| अवान्तरकरणं | अवान्तरप्रकरणम् | ,, | २५ |
| दृष्टथत्वा | दृष्टार्थत्वा | ८४ | ४ |
| आरडुपकार | आरादुपकारक. | ८८ | ५ |
| तदुपत्तौ | तदुत्पत्तौ | ,, | २३ |
| मत्थर्न्तक्षणा | मत्वर्थलक्षणा | १२५ | २६ |
| यदाहुः | तदाहुः | १५१ | १९ |
| कर्षत् | कर्षेत् | १६३ | २० |

प्राप्तिस्थानम्—

जयकृष्णदास-हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज आफिस,

विद्याविलास प्रेस, बनारस।

## * मीमांसा-ग्रन्थाः *

१ **अधिकरणकौमुदी** । श्रीदेवनाथठक्कुरकृता [ का. ५० ] १)
२ **जैमिनीयन्यायमाला** । श्रीमन्माधवाचार्यविरचिता, तद्विरचितेन **विस्तरेण विभूषिता** [ का. १२६ ] तृतीयाध्यायान्त ४)
३ **टुप्टीका** । श्रीमत्कुमारिलभट्टपाद विरचिता [ ब. ४ ] ४)
४ **तन्त्रवार्त्तिकम्** । कुमारिलभट्टपादविरचितम् । ३-१३ खण्ड [ ब. ३ ] १६॥)
* ५ **तन्त्रसिद्धान्तरत्नावली** । म० म० चिन्नस्वामि शास्त्रिकृत ४)
६ **न्यायरत्नमाला** । श्रीमत्पार्थसारथिमिश्रविनिर्मिता [ चौ. ७ ] ३)
७ **न्यायसुधा** । तन्त्रवार्तिकव्याख्या श्रीमद्भट्टसोमेश्वरकृता [ चौ. १४ ] २७)
८ **पूर्वमीमांसाधिकरणकौमुदी** । रामकृष्णभट्टाचार्यविरचिता [ चौ. ४७ ] १॥)
९ **प्रकरणपञ्चिका** । महामहोपाध्याय श्रीशालिकनाथमिश्रविरचिता तथा **मीमांसासारसंग्रहः**-श्रीशङ्करभट्टकृतः । सम्पूर्णः [ चौ. १७ ] यन्त्रस्थ
१० **बृहती** । प्रभाकरमिश्रविरचित ( शाबरभाष्यव्याख्या ), म० म० मिश्रशालिकनाथ '**ऋजुविमला**' च व्याख्याद्वययुता [ चौ. ६९ ] ४॥)
११ **भाट्टचिन्तामणिः** । म० म० श्रीगागाभट्ट विरचितः [ चौ ६ ] ३)
१२ **भाट्टभाषाप्रकाशः** । श्रीनारायणतीर्थमुनिविरचितः । [ चौ. पु. ] ॥)
१३ **मीमांसाकौस्तुभः** । ( मीमांसासूत्रोपरि काचन विस्तृताटीका ) श्रीखण्डदेवविरचितः सम्पूर्ण [ चौ. ५८ ] १८)
*१४ **मीमांसा अर्थप्रकाशः** । श्रीलौगाक्षिभास्करप्रणीतः १।)
१५ **मीमांसा परिभाषा** । म० म० पं० श्रीनित्यानन्दपन्त कृत **टिप्पणी** युता [ ह. १६ ] ।)
१६ **मीमांसान्यायप्रकाशः** । मूलमात्र । [ चौ. पु. ] ॥)
१७ **मीमांसान्यायप्रकाशः** । श्रीअनन्तदेवविरचित "**भाट्टालङ्कार**" व्याख्या सहितः [ चौ. ५३ ] २॥)
१८ **मीमांसाबालप्रकाशः** । श्रीभट्टशङ्करविरचितः [ चौ. १६ ] ३)
१९ **मीमांसानुक्रमणिका** । श्रीमण्डनमिश्रकृता । महामहोपाध्याय गङ्गानाथ झा रचित 'मीमांसामण्डन' मण्डिता [ चौ. ६८ ] ७॥)
२० **मीमांसाश्लोकवार्त्तिकं** । **न्यायरत्नाकर** व्याख्या सहितं [ चौ. ३ ] यन्त्रस्थ
२१ **मीमांसादर्शन-शाबरभाष्यम्** । ७–१२ अध्याय [ का. ४२ ] ८)
२२ **विधिरसायनम्** । श्रीमदप्पय्यदीक्षितविरचितं सम्पूर्णम् [ चौ. १३ ] ३)
२३ **विधिरसायनदूषणम्** । श्रीशङ्करभट्टप्रणीतम् १।)
२४ **वेदप्रकाशः** । श्रीसत्यज्ञानानन्दतीर्थेन विरचितः [ चौ. ७७ ] १॥)
२५ **शास्त्रदीपिका** । श्रीपार्थसारथिमिश्रप्रणीता । पण्डितप्रवर रामकृष्ण-विरचित 'युक्तिस्नेहप्रपूरणी' व्याख्या सहिता । तर्कपादः [ चौ. ४३ ] ३)

---

प्राप्तिस्थानम्—**चौखम्बा संस्कृत पुस्तकालय, बनारस सिटी** ।